Tanjore Saraswati Mahal Series No. 98.

# PRAPAÑCHA SĀRASĀRA SAṄGRAHA

OF

GĪRVĀṆENDRA SARASWATHI

PART I



T. M. S. S. M. LIBRARY.
THANJAVUR.

1962

Tanjore Sarasvati Mahal Series No. 98.

# PRAPAÑCHA SĀRASĀRA SAṄGRAHA

OF

## GĪRVĀṆENDRA SARASWATHI

PART I

*Edited by*

SHRI K. S. SUBRAMANIA SASTRY,
*Retired Pandit, Sarasvati Mahal Library, Tanjore.*



*Published by*
SHRI S. GOPALAN, B. A., B. L.,
*Honorary Secretary*
*for the Administrative Committee,*
*T. M. S. S. M. Library, Tanjore.*

Saka 1884] Price Rs. 21-00 [A. D. 1962

तञ्जपुरी सरस्वतीमहालय ग्रन्थमाला संख्या-९८.

॥ श्रीः ॥



# श्रीमत्प्रपञ्चसारसारसंग्रहे

गीर्वाणेन्द्रसरस्वतीपादविरचिते

(पूर्वो भागः)

भारताधीश्वरैः मद्रमण्डलाधीश्वरैश्च कृतोपकारः,
पण्डितवर, मन्त्रमूर्ति,

**क्षे० शं० सुब्रह्मण्यशास्त्रिणा**

संशोध्य प्रकाशितः

श्रीमत्तञ्जपुरी सरस्वतीमहालय कार्यदर्शिभिः

**एस्. गोपालन्, बि. ए., बि. ल्. महाशयैः**

मुद्रापितः

शकाब्दाः १८८४. क्रिस्त्वब्दाः १९६२.

मूल्यम् रूप्यकाणि २१.

# PREFACE

In this volume we publish the work entitled Prapañcha-sārasāra Saṅgraha of Geervaṇēndra Saraswathi. It is fairly a big work consisting of 15,000 granthas, and hence we are publishing it in two Parts.

Sri Sankara, the great Philosopher wrote Prapañchasāra, a work on Mantra Sastra. The present work is an elaboration of the subject of Prapañchasāra and hence is styled Prapañcha-sārasāra Saṅgraha.

The word Mantra is derived from the root 'Man', to think. Thus Mantra is thought-movement vehicled by, and expressed in speech. It is a compelling force, productive of results of both mundane and spiritual value, material happiness and spiritual bliss. To produce the desired effect the mantra must be intoned in the proper way according to both sound and rhythm-Varna and Swara. Kind thoughts without a word will do good to all and may travel round the world to distant friends. Mantra consists of certain letters arranged in definite sequences of sounds.

Hundreds of forms and expressions are given in the text to suit worshippers of different age and experience. These expressions are called Mantras, as they are the sound symbols which, when repeated and reflected, free the soul from bondage. Advanced souls do not mind the outside symbol. Persons of gross understanding can begin their spiritual life by worshipping the deity with the help of these forms and expressions. These are like pegs to hang their faith on.

About Geervanendra Saraswathi we know nothing, except that, he was a pupil of Visweswara Saraswathi, who was a pupil of Amarendra Saraswathi and was guru of Devendra and Narasimhasrama. He is not known to have written any other work.

This is one of the two works taken up for publication with aid from the Union Government under the scheme for "Publication of rare Manuscripts", the other work being Dharmakuta, Kiskindha kanda and Yuddha kanda.

Our thanks are due to Sri K. S. Subramaṇya Śastri, former Paṇḍit of this Library, who has very ably edited this work and given us a scholarly introduction.

We are grateful to the Union as well as the State Governments for their liberal grants for publication of this and other valuble works in the library.

S GOPALAN
Honorary Secretary,
*T. M. S. S. M. Library*,
Thanjavur.

Date: 28-12-62.

॥ श्री गणेशाय नमः ॥

# ॥ भूमिका ॥

इह खलु जगति मायोपनिबन्धनेऽस्मिन् संसारे तुषाङ्गारेष्विव परितप्यमानान् जनाननुजिघृक्षुर्भगवान् परमेश्वरः मन्त्रकलापान् प्रकाशयामास। ते हि मन्त्राः उपनिषत्सु श्रुतिस्मृतीतिहासपुराणागमतन्त्रग्रन्थादिषु च परश्शतमुपलभ्यन्त एव। गते च काले उपनिषदां श्रुत्यादीनां तेषां च प्रायशस्सञ्जाते दौर्लभ्ये लोकानुग्रहपरायणाः श्रीमद्भगवत्पादादयो महान्तः तेभ्यो मुख्यतमान् मन्त्रान् संगृह्य सप्रयोगरहस्यान् प्रपञ्चसारादिग्रन्थरूपेण प्रकाशयामासुरिति नेदमविदितमावेद्यते विद्वन्मानाम्। तेषां सर्वेषां ग्रन्थानामलाभेऽपि, श्रीमत्तञ्जपुरीललामभूते अथवा भारतदेशललामभूते श्रीसरस्वतीमहालयाभिधाने अस्मिन् महति भाण्डागारे, श्रीमच्चोळदेशाधीश्वरैर्महाराजैः स्वस्वकाले महता प्रयासेन संपाद्य संरक्षितेषु वेदवेदाङ्गपुराणागमादिप्रभेदेषु बहुषु ग्रन्थेषु, श्लाघ्यतमा बहवो मन्त्रशास्त्रग्रन्था अपि संपाद्य संरक्षिता भवन्ति। तेषु प्रायेण सर्वेऽपि मन्त्रा उपलभ्यन्त एवेति परमिदं प्रमोदस्थानम् ॥

एवमस्मिन् सरस्वतीमहालये स्थितेषु परश्शतेषु मन्त्रशास्त्रग्रन्थेषु अतितरां श्लाघनीयः श्रीमद्गीर्वाणेन्द्रसरस्वतीपादैर्विरचितः प्रपञ्चसारसारसंग्रहाख्योऽयं ग्रन्थः, श्रीमद्भारतदेशाधीश्वरैः मद्रमण्डलाधीश्वरैश्च ग्रन्थस्यास्य मुद्रणार्थं महद्धनं प्रदाय मुद्राप्य प्रकाशनार्थमादृतः ॥

श्रीमत्तञ्जपुरीसरस्वतीमहालयनिर्वाहकसमित्याशयानुरोधेन, समितिकार्यदर्शिभिः श्री एस्. गोपालन् बि. ए. बि. एल्. महाशयैः, ग्रन्थमिमं मुद्रापयितुमाज्ञा मे दत्ता ॥

ततोऽस्य संशोधनार्थं अष्टमातृकास्समासादिताः। तासु चतस्रो मातृकाः अस्मिन्नेव सरस्वतीमहालये भवन्ति ॥

अन्या तु मोषयूर (மொழையூர்) ग्रामाभिजनानां श्री. एम्. एन्. जानकीरामार्यमहाशयानां कोशादासादिता ॥

अपरा तु मद्रमण्डलराजकीय ओरियेण्टेल् लैब्रेरीतः आसादिता ॥

सप्तम्यष्टमी च मातृके अडैयार्लैब्रेरीतस्समासादिते ॥

एवं संशोधनार्थमासादितास्वष्टासु मातृकासु, सरस्वतीमहालयस्थाश्चतस्रो मातृकाः श्री. एम्. एन्. जानकीरामार्यमहाशयानां कोशादासादिता चेति एताः पञ्च मातृकाः संपूर्णा भवन्ति ॥

अन्यास्तिस्रो मातृका असंपूर्णाः स्वल्पभागात्मका एव ॥

आसु अष्टमातृकासु द्वे मातृके पत्रात्मके। तयोरेका सरस्वतीमहालयस्था नागराक्षरमयी । अन्या ग्रन्थाक्षरमयी श्री. जानकीरामार्यकोशादासादिता ।

अन्याष्षण्मातृकाः ताळपत्रात्मिका ग्रन्थाक्षरमय्यश्च ।

एतासु षट्सु मातृकास्वपि, सरस्वतीमहालयस्था मातृकाः प्रायशस्संपूर्णा मातृका एव । अथापि आसु सर्वास्वपि मातृकासु मध्ये मध्ये पत्राणि नष्टानि, क्वचित् क्वचित् पत्रभागाश्च नष्टा भवन्ति ।

एतत्सरस्वतीमहालयस्था प्राक्तनी नागराक्षरमयी मातृका तु आदित आरभ्य यावद्ग्रन्थसंपूर्ति संपूर्णा भवति । अत इयमेव मातृका संशोध्य मुद्रणे मुख्यतमा क. संज्ञिता मातृका च भवति ।

अन्या मातृकास्तु क्रमेण खकारादिजकारान्तैरक्षरैर्निर्दिष्टा भवन्ति। मातृकासंज्ञास्तु मातृकाविवरणे द्रष्टव्याः ॥

इमा अतिप्राचीनास्तालपत्रात्मिकाः कृमिजग्धाः प्रशिथिला अविज्ञायमानाक्षरस्वरूपा अपि मातृकाः महता प्रयासेन समवलोक्य संशोध्य, तत्र तत्र ग्रन्थाधःसंकलितपाठभेदैस्साकं मुद्राप्य प्रकाशमुपनीतोयं ग्रन्थः सज्जनमुदे भूयादिति भगवन्तं गणनाथं सिद्धिबुद्धिपतिं स्वानन्देशं संप्रार्थये ॥

प्रपञ्चसारसारसंग्रहाभिधानोयं ग्रन्थः स्वनाम्ना प्रपञ्चसारप्रतिपादितेषु सारवतां मन्त्राणां संग्रहात्मको भवितुमर्हतीति प्रतीतिमापादयत्येव । अपितु ग्रन्थोयं प्रपञ्चसारगतानां सर्वेषामपि मन्त्राणां संग्रहात्मकोपि सन्, तत्र तत्र प्रकरणोपयोगितया ग्रन्थान्तरेभ्यस्संकलितानां सदुपासकाभिलषितसकलफलसाधनसमर्थानां बहूनां मन्त्राणां तेषां यन्त्राणां प्रयोगविशेषाणां च आकरो भवतीति नातिवादोयम् ॥

अथास्य ग्रन्थस्य कर्ता तु गीर्वाणेन्द्र इति, ग्रन्थकर्त्रैव ग्रन्थान्ते स्पष्टमभिहितं भवति ।

तथाहि —

शङ्करश्चामरेन्द्रश्च विश्वेश्वर इति त्रयः ।
पुनन्तु मामकीं बुद्धिमाचार्याः कृपया मुदा ॥

अमरेन्द्रयतिशिष्यः गीर्वाणेन्द्रस्य योगिनः ।
तस्य विश्वेश्वरश्शिष्यः गीर्वाणेन्द्रोहमस्य तु ॥

शिष्यः प्रपञ्चसारस्य व्यदधां सारसंग्रहम् ।
एनं दृष्ट्वाऽखिलास्सन्तः सन्तुष्टास्सन्तु सन्ततम् ॥ इति ॥

अतः गीर्वाणेन्द्रयोगिनश्शिष्यः अमरेन्द्रयतिः, तस्य शिष्यो विश्वेश्वरयतिः, तस्य शिष्यः ग्रन्थस्यास्य कर्ता गीर्वाणेन्द्रयतिरिति, अविसंवादोयं विषयः ।

प्रथमं

शङ्करश्चामरेन्द्रश्च विश्वेश्वर इति त्रयः ।
पुनन्तु मामकीं बुद्धिमाचार्याः कृपया मुदा ॥"

इत्युपपाद्य, समनन्तरमेव शङ्करपदं विहाय

अमरेन्द्रयतिशिष्यः गीर्वाणेन्द्रस्य योगिनः ।
तस्य विश्वेश्वरश्शिष्यः गीर्वाणेन्द्रोहमस्य तु ॥

इत्युपपादितत्वात् गीर्वाणेन्द्रयोगिशब्देन शङ्कर एवाभिहितो भवितुमर्हतीति प्रतिभाति। एतेषां कालादिविमर्शने फलाभावादुदस्तम् ॥

अथास्य ग्रन्थस्य संशोधने संगृहीतानां मातृकाणां विवरणम्—

१. श्रीमत्तञ्जपुरीविराजमाने सरस्वतीमहालयाभिधाने चतस्रो मातृकास्सन्ति। तासु ६६८२ संख्याका प्राचीना पत्रात्मिका ५८५ पत्रैरुपेता नागराक्षरमयी आदित आरभ्य ग्रन्थावसानान्तमन्यूना संपूर्णा च मातृका। अत एवेयं मुद्रणे मुख्यतमा क. संज्ञया निर्दिष्टा च मातृका भवति ॥

२. द्वितीया, सरस्वतीमहालये १२००९ संख्याका अतिप्राचीना ताळपत्रात्मिका ३४० पत्रैरुपेता सूक्ष्मग्रन्थाक्षरमयी च मातृका। अस्यां मातृकायां मध्ये मध्ये बहूनि पत्राणि नष्टानि, भग्ननष्टभागानि च भवन्ति। आदित आरभ्य द्वात्रिंशत्पटलान्तं संपूर्णा, ततो विद्यमानेषु ऋङ्मन्त्रेषु "दंष्ट्राभ्यां मलिम्लूं" इति ऋङ्मन्त्रान्ता च भवति। इयं ख. संज्ञिता मातृका ॥

३. तृतीया सरस्वतीमहालयस्था १२०१०. संख्याका अतिप्राचीना ताळपत्रात्मिका ४१६ पत्रैरुपेता अतिसूक्ष्मग्रन्थाक्षरमयी च मातृका। अस्यामपि मध्ये मध्ये पत्राणि नष्टानि भग्ननष्टभागानि च भवन्ति। सुशुद्धपाठोपशोभितेयं मातृका आदित आरभ्य यावद्ग्रन्थसंपूर्ति संपूर्णा च भवति। इयं ग. संज्ञिता मातृका ॥

४. चतुर्थी मातृकापि सरस्वतीमहालयस्था १२०११. संख्याका अतिप्राचीना ताळपत्रात्मिका ४१६ पत्रैरुपेता ग्रन्थाक्षरमयी मातृका। अस्यामपि मातृकायां मध्ये मध्ये पत्राणि नष्टानि भग्ननष्टभागानि च भवन्ति। आदित आरभ्य द्वात्रिंशत्पटलान्तं संपूर्णेयं मातृका घ. संज्ञिता भवति ॥

५. पञ्चमी मातृका तु मायूरक्षेत्रवैद्येश्वरक्षेत्रयोर्मध्ये आनैताण्डवपुरग्रामपूर्वभागे विद्यमाने मोषयूर् (மொழையூர்) नामके निवसतां सुगृहीतनामधेयानां श्री. एम्. एन्.

जानकीरामार्यमहाशयानां कोशादासादिता पत्रात्मिका भागचतुष्टयोपशोभिता ग्रन्थाक्षरमयी नूत्नापि द्वित्रैः पण्डितप्रवरैस्संशोधिता सुशुद्धपाठोपेता च । आदित आरभ्य यावद्ग्रन्थावसानं संपूर्णेयं मातृका ङ. संज्ञिता भवति ॥

६. षष्ठी मातृका तु मद्रपुरीराजकीयओरियेण्टेल्लैब्रेरीनामकभाण्डागारादासादिता D७९४० संख्याका ताळपत्रात्मिका ९० पत्रैरुपेता ग्रन्थाक्षरमयी असंपूर्णा च। अस्यामादित आरभ्य ८ पटले त्रिकोणमध्यार्चने "मूलमन्त्रमुच्चार्य निर्वाणरूपे परे संविन्मये श्रीमहात्रिपुरसुन्दरि" इत्येतावदन्तः (मुद्रितपुस्तके पुटसंख्या१७०) भागोस्ति । इयं च संज्ञिता मातृका भवति ॥

७. सप्तमी अष्टमी च मातृके अडैयार् लैब्रेरीत आसादिते । तयोः प्रथमा ७३०११ संख्याका श्रीताळपत्रात्मिका १२१ पत्रैरुपेता ग्रन्थाक्षरमयी आदित आरभ्य ८. पटले योगिनीन्यासान्तभागात्मिका च (मुद्रितपुस्तके १८१ पुटावधि) भवति । इयं छ. संज्ञिता मातृका ॥

८. अन्या त्वन्तिमा अष्टमी मातृका । इयमपि अडैयार् लैब्रेरीत आसादितैव । ७३०२२ संख्याका ताळपत्रात्मिका १३३. पत्रैरुपेता ग्रन्थाक्षरमयी ७ मातृकावत् आदित आरभ्य योगिनीन्यासान्ता च । इयं मातृका ज. संज्ञिता भवति ॥

ग्रन्थस्यास्य संशोधनार्थं मातृकाग्रन्थान् प्रदाय उपकृतवतां श्री जानकीरामार्यमहाशयानां, ओरीयेण्टेल्लैब्रेरीनिर्वाहकमहाशायानां अडैयार् लैब्रेरीनिर्वाहकमहाशयानां च सादरं कृतज्ञतां निवेदयितुमभिलषामि ॥

ग्रन्थमिमं मुद्रापयितुं मह्यमर्पितवतां श्रीसरस्वतीमहालयाध्यक्षाणां सामोदं सादरं च कृतज्ञतामावेदये ॥

अथात्र मन्त्राः, तेषां भेदाः, उपासकभेदाः, उपासनामार्गभेदाः, तेषां फलानि च यथामति विमृश्यन्ते ॥

मन्त्रा ह्यनन्ता भवन्तीत्यतो मन्त्रप्रतिपाद्यमाना देवता अप्यनन्ता एव । ताः किल देवताः मतदेवताः आत्मदेवताः इष्टदेवताः कुलदेवताः गृहदेवताः ग्रामदेवताः लोकदेवताश्चेति विभज्य अभिधीयन्ते । अतो देवताभेदेन मन्त्रा अपि सप्तविधा भवन्ति ॥

गणेशसूर्यशक्तिशिवविष्ण्वाख्यानां पञ्चब्रह्मणां अन्यतमं दैवतं निर्गुणं ब्रह्मेति, अन्यानि दैवतानि तत्कार्यं ब्रह्मेति च भावयन्त उपासनपराः क्रमेण गाणेशास्सौराश्शाक्तारशैवा वैष्णवा इति; पञ्चस्वेतेषु दैवतेषु समबुद्ध्यस्स्मार्ता इति च व्यवह्रियन्ते । अतः, अद्वैतबोधकान्येतान्येव षण्मतानि गणकमुद्गलव्यासशङ्कराख्यैर्युगाचार्यैः स्थापितानीति योगसारादिभिर्ग्रन्थैरभिगम्यते । अपि च तेषां गणेशादीनामपि परब्रह्माभिन्नस्वरूपतत्त्वबोधकाः उपनिषत्प्रतिपादिता गणेशैकाक्षरसूर्यैकाक्षरदेव्येकाक्षरशिवपञ्चाक्षरनारायणाष्टाक्षरात्मकाः पञ्च मन्त्रा एवेति उपासनाकल्पसूत्रप्रस्थानत्रयकर्तारो मन्यन्ते । गणेशषडक्षर सूर्याष्टाक्षर देवीपञ्चदशी परमेश्वरद्वादशाक्षरी विष्णुद्वादशाक्षरीमन्त्रा अपि ब्रह्मावबोधका एवेति पाक्षिकः कल्पः । प्रणवमन्त्रस्य तु ब्रह्मावबोधकत्वं उपनिषदुद्घुष्टं सुप्रसिद्धमेव । अथापि केवलप्रणवजपे तुर्याश्रमिणामेवाधिकारदर्शनात्सर्वेऽप्येते मन्त्रास्सप्रणवा एव त्रैवर्णिकानामुपदिश्यन्ते आचार्यैरिति हृदयम् । अतस्सप्रणवा एते पञ्च मन्त्रा वा दश मन्त्रा वा मतमन्त्रा इति व्यवस्थितम् ॥

तथा च ज्ञानसारे —

"मतानामपि पञ्चानां तात्पर्यं निर्गुणं परम् ।
ब्रह्मबुद्ध्यैव पूज्यन्ते ह्युपास्यन्ते च पञ्च ते ॥

मन्त्राणां जपहोमाद्यैः स्तूयमाना हि देवता ।
प्रसन्ना निखिलान्भोगान् पुरुषार्थांश्च यच्छति ॥" इति ॥

योगसारे यथा —

"एवं वै गणनाथश्च पुरुषश्च परश्शिवः ।
शक्तिर्नारायणश्चैव ज्योतीरूपसमन्विताः ॥

ब्रह्मत्वेनैव प्रोच्यन्ते वेदादिष्वपि षट्सु च ।
पञ्चभ्यश्चैव प्रोच्यन्ते सृष्टिस्तु कालभेदतः ॥

एकमेव परं ब्रह्म पञ्चधा परिकीर्तितम् ॥'' इति ॥

श्रीमदप्पय्यदीक्षितेन्द्रैरपि शैवाद्वैतबोधकश्रीकण्ठभाष्यव्याख्याने अयमेव भाव आविष्कृतः ॥ यथा —

"यद्यप्यद्वैत एव श्रुतिशिखरगिरामागमानाञ्च निष्ठा
साकं सर्वैः पुराणश्रुतिनिकरमहाभारतादिप्रबन्धैः ।
तत्रैव ब्रह्मसूत्राण्यपि च विमृशतां भान्ति विश्रान्तिमन्ति
प्रत्नैराचार्यरत्नैरपि परिजगृहे शङ्कराद्यैस्तदेव ॥

तथाप्यनुग्रहादेव तरुणेन्दुशिखामणेः ।
अद्वैतवासना पुंसामाविर्भवति नान्यथा ॥

अनुग्रहश्च देवस्य देव्या चिद्रूपया सह ।
यथावत्तं परिज्ञाय ध्यायद्भिस्समवाप्यते ॥" इति ॥

अत्र दीक्षितेन्द्रैः ब्रह्मज्ञानावाप्त्यै न केवलं परमेश्वरानुग्रहमात्रं विवक्षितम्, अपि तु पराशक्त्यनुग्रहोऽपि विवक्षित एव ॥

"ईश्वरप्रणिधानाद्वा" इति पातञ्जलयोगसूत्रव्याख्याने श्रीसदाशिवेन्द्रसरस्वतीपादैरपि अयमेव भावो दृढीकृतः । यथा —

"ईश्वरो हि समाराधनादिना साधनेन आराधितः इदमस्येष्टमस्तु इति संसाराङ्गारे तप्यमानं पुरुषमनुगृह्णातीति भावः ॥" इति ॥

तथा च श्रुतिः —

"मुमुक्षुर्वै शरणमहं प्रपद्ये"

"तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्" इति ॥

अत्र विष्णोः परब्रह्मत्वावबोधकानि त्रिपाद्विभूतिनारायणोपनिषद्वाक्यानि निदर्शनार्थमुदाह्रियन्ते ॥ यथा --

"कारणात्मकं सर्वं कार्यात्मकं सकलं नारायणः। तदुभयविलक्षणो नारायणः। परञ्ज्योतिः स्वप्रकाशमयो ब्रह्मानन्दमयो नित्यो निर्विकल्पो निरञ्जनो निराख्यातः शुद्धो देव एको नारायणो न द्वितीयोऽस्ति कश्चित्। न स समानाधिक इत्यसंशयं परमार्थतो य एवं वेद। सकलबन्धान् छित्त्वा मृत्युं तीर्त्वा स मुक्तो भवति स मुक्तो भवति।" इति ॥

एवं गणेशादीनामपि परब्रह्मत्वावबोधिका बह्व्य उपनिषदो विद्यन्त एवेति ज्ञायते ॥

तथा हि योगसारे —

"अद्वैतस्योपनिषदि गणेशाद्वैतमीरितम्।
ब्रह्मसन्ध्योपनिषदि सौराद्वैतं प्रकीर्तितम् ॥

भुवनेश्या उपनिषदि शाक्ताद्वैतं समीरितम्।
नीलकण्ठोपनिषदि शाम्भवाद्वैतमीरितम् ॥

पार्थसारथ्युपनिषदि वैष्णवाद्वैतमीरितम् ॥" इति ॥

प्रायश एतासामुपनिषदामलाभान्नात्र उदाहृता इत्यवधेयम् ॥

अतो गणेशादीनां पञ्चानामपि देवतानां परब्रह्माभिन्नत्वं गणेशादिमन्त्राणां परब्रह्मस्वरूपतत्वबोधकत्वं च सिद्धम् ॥

अथैतासां पञ्चानां देवतानां पूर्णावतारमूर्तयो वल्लभेशसूर्यनारायणान्नपूर्णानीलकण्ठवासुदेवाद्याः कार्यब्रह्मात्मिका इति तत्स्वरूपतत्त्वबोधका मन्त्रा आत्मदेवतामन्त्रा

इति च व्यपदिश्यन्ते । कार्यकारणयोरभेदान्वयस्य सुगमत्वमिव ब्रह्मात्मनोरभेदान्वयस्य सुगमत्वं बोधयितुं एता देवता आत्मदेवता इति अभिधीयन्ते ॥

स्वाभीप्सितैहिकामुष्मिकसकलेष्टलाभसिद्ध्यर्थं उपास्यमाना देवता इष्टदेवता इति तत्प्रतिपादका मन्त्रा इष्टदेवतामन्त्रा इति च प्रपञ्चितम् । प्रायेणैता देवता मताधिदेवतानामवतारदेवतासु आवरणदेवतासु वा अन्तर्गताः गुरुरक्षाकरार्थसाधकभेदात् त्रिविधाः, उक्तकार्यत्रयसाधिका वा भवन्तीति ॥

तथाच योगसारे—

"इष्टदेवास्त्रिधा प्रोक्ताः गुरुरक्षार्थसाधकाः ।
परलोकज्ञानदाता गुरुदेव इति श्रुतः ॥

सर्वदा स्वात्मरक्षां च विपद्भ्यश्च करोति यः ।
रक्षादेव इति ख्यातः पाण्डवानां यथा हरिः ॥

अर्थदाता शत्रुशिक्षाकरश्चार्थप्रदायकः ॥" इति ॥

उपासनेन परितुष्टा एता देवताः स्वोपासकस्य संभाव्यमानान् सर्वान् क्लेशान् व्यपोह्य स्वयमेव गुरवो भूत्वा तत्त्वावबोधनेनैनं मुक्तिपथं प्रापयन्तीति आचार्या मन्यन्ते ॥

स्वकुलसंभाव्यमानसकलानिष्टनिवृत्त्यर्थं योगक्षेमादिनिखिलश्रेयोभिवृद्ध्यर्थं च स्वकुलवृद्धैः परंपराक्रमेणाराध्यमाना देवताः कुलदेवता इति सर्वजनविदितोऽयं विषयः । तेषां प्रसादजनका मन्त्राः कुलदेवतामन्त्राः । एतासां कुलदेवतानां अनुग्रहेणापि केचिदध्यात्मतत्त्वज्ञा अभूवन्निति विज्ञायते ॥

सकलदुरितनिवृत्त्यर्थं सर्वमङ्गळावाप्त्यर्थं च गृहेष्ववश्यपूजनीयत्वेनाभिहिता वृन्दाद्या देवताः गृहदेवतास्तासां मन्त्रा गृहदेवतामन्त्राः ॥

ग्रामसंभाव्यमानमारीचोराग्निदाहादिबाधाभ्यः ग्रामीणजनद्विपाच्चतुष्पाद्रक्षिका हरिहर-पुत्रचण्डीकाळीदुर्गाद्या देवता ग्रामदेवताः । तासां मन्त्रा ग्रामदेवतामन्त्राः ॥

ब्रह्मा प्रजापतयः इन्द्रादयो लोकपालाः तदधिनाथा देवयोनिविशेषाः नवग्रहाः वसवो रुद्रा आदित्या अश्विनाविति त्रयस्त्रिंशद्देवतास्तदधिनाथा देवयोनिविशेषा मरुतः आजानजाः कर्मदेवाः देवर्षयो ब्रह्मर्षयः स्वतपोबलान्महर्षित्वमधिगताश्च लोकदेवताः तेषां मन्त्रा लोकदेवतामन्त्रा इति, वैश्वदेवमेव लोकदेवताराधनमिति च बोध्यते ॥

तदेवं सप्तधा विभज्याभिहितानां सर्वासामपि देवतानां उपासनमाराधनं च यथोचितं यथाशक्ति यथामति च अवश्यमनुष्ठेयमिति श्रुतिस्मृतीतिहासपुराणादिभ्योऽवगम्यते ॥

अथैतेषां मन्त्राणामुपासनामार्गभेदाश्च निरूप्यन्ते । उपासनामार्गस्संक्षेपाद्द्विविधः वैदिकस्तान्त्रिकश्चेति । वैदिकोऽपि द्विविधः — कर्मज्ञानोभयात्मकः कर्मात्मकश्चेति । तान्त्रिकस्तु त्रिविधः— तान्त्रिकः, वामः पाषण्डश्चेति । अतः वेदोदितमार्गावलंबिनो वैदिकाः, तन्त्रग्रन्थोक्तमार्गावलंबिनस्तान्त्रिका इति व्यवस्थितमेतत् ॥

श्रुत्यादिविहितकर्मानुष्ठानपूर्वकं श्रीमच्छंकरभगवत्पादाद्यैः प्रतिष्ठापितेषु षट्सु मतेष्वन्यतमं स्वाभीप्सितं मतं मुख्यमवलम्ब्य तत्तद्देवतोपासनाकल्पसूत्रकारैर्महर्षिभिर्नियुक्तेन मार्गेण सद्गुरोरनुग्रहोपलब्धैः मतदेवतात्मदेवतेष्टदेवतादिमन्त्रैः जपहोमपूजनाद्यैः कर्मभिः तास्ता देवताः प्रत्यहं तर्पयन्तः श्रुतिस्मृतीतिहासपुराणागमाद्यैर्देवतास्वरूपतत्त्वविचारपराः परब्रह्मबोधकप्रस्थानत्रयोपनिषदर्थविचारपराः परं ब्रह्म स्वाभिन्नं ध्यायन्तः मननिदिध्यासनादिपराश्च वैदिकोपासका इति व्यवह्रियन्ते । अतः कर्मज्ञानात्मकद्विविधोपासनपरमा एते वैदिकोपासकाः स्वसत्कर्मनिर्धूतनिखिलकिल्बिषाः स्वोपास्यदेवतानुग्रहविशेषासादिततत्त्वावबोधाः योगलभ्यनिखिलसमाधिसिद्धिमन्तः ब्रह्मविदो ब्रह्मनिष्ठाः प्रारब्धकर्मक्षये ब्रह्मीभूता भवन्तीति श्रुत्यादिभिरुपदिश्यते । अतः अद्वैतभावापादकं ज्ञानावलम्बनमन्तरङ्गोपासनमद्वैतमिति, मन्त्रजपपूजनादिबाह्यकरणव्यापारात्मक-

कर्मावलम्बनं बाह्योपासनं मतमिति च श्रीमच्छंकरभगवत्पादाद्यैः प्राचार्यैर्बहुधा प्रपञ्चितम् ॥

न हि निराकारं निर्गुणं निरवयवं किञ्चिदुपासनाविषयं भवितुमर्हति। उपासनायां हि उपास्योपासकोपासनाख्यं त्रिपुटीभानमपेक्षितं भवति। अतो मुमुक्षोरादितस्साकारं सगुणं सावयवं गणेशादिरूपं ब्रह्मैव उपासनाविषयं भवितुमर्हति। ततोऽनवरतध्यानाद्यभ्यासवशात् बाह्यव्यापारवृत्तिमात्रशून्ये चित्ते तादात्म्यभावनाविशेषात् सगुणब्रह्मसाक्षात्कारस्सिध्यति। ततोऽपि निरन्तराभ्यासविशेषात् बाह्याभ्यन्तरवृत्तिशून्यं चित्तं नश्यति। तदा निर्विकल्पं निराकारं निर्गुणं निरवयवं नित्यज्ञानानन्दात्मकमात्मानं जानाति। तदिदं नित्यज्ञानानन्दात्मकमात्मज्ञानमेव अद्वैतं कैवल्यं ब्रह्मभूयसिद्धिर्मुक्तिरिति च श्रुत्यादिनिखिलवेदान्तशास्त्रैरुपदिश्यते ॥

श्रुत्यादिविहितकर्मानुष्ठानपरा गणेशादिमन्त्रजपपूजादिबाह्यकर्मावलंबनमात्रपरा अपि वैदिकोपासका एव। एतेष्वपि केषांचित् देवतानुग्रहविशेषात् ब्रह्मज्ञानसिद्धिरपि भवत्येवेति महान्तो मन्यन्ते। प्रमाणानि चात्रोपलभ्यन्त एव। कार्यब्रह्मोपासकानामेतेषां कार्यब्रह्मलोकावाप्तिरेव फलं प्रतिपाद्यते ॥

अतो वैदिकोपासनामार्ग एव निश्श्रेयससाधनमिति पर्यवसन्नोऽर्थः ॥

तान्त्रिकोपासनामार्गभेदास्त्रयः — तान्त्रिको वामः पाषण्डश्चेति। अतस्तच्छीलास्तान्त्रिका वामाः पाषण्डाश्चेत्यभिधीयन्ते। श्रुत्यादिविहितकर्मानुष्ठानसदाचारविहीनाः देवतास्वरूपतत्त्वज्ञानविहीनाः अतिनश्वरफलमात्रकामनया मन्त्रजपादिक्रियामात्रपराः तान्त्रिकाः, श्रुत्यादिनिषिद्धैर्दोषापादकैर्मधुमांसादिभिः देवतातोषणपरा वामाः, स्वशरीरोत्कर्तनाद्यैरुपलब्धरक्तमांसादिभिः हिंसात्मकातिनिन्दितजीवबलिदानादिभिश्च देवतातर्पणशीलाः पाषण्डा इत्युच्यन्ते। एतानवैदिकान् नियमयितुमेव तन्त्रशास्त्रं प्रवर्तितमिति महद्भिर्बहुधा समुपन्यस्तम्। अथापि केवलतान्त्रिको मार्गः अवैदिकोऽपि निःश्रेयस-

साधनतयाऽनङ्गीकृतोऽपि देवताप्रसादजनकत्वात् नातितरां निन्द्यः । अपरौ वामपाषण्डौ तु निन्द्यौ निरयदौ चेति निषिद्धौ ॥

अतो वैदिकमार्गोपासनासाधनीभूतास्सर्वेऽपि मन्त्रा आत्मज्ञानसाधनीभूता एवेति अनवद्योऽयमाशयो बहूनां महतां मान्यानामाचार्याणामिति शिवम् ॥

इत्थं गाणेशाद्वैतिवर मन्त्रमूर्ति

क्षे. शं सुब्रह्मण्यशास्त्री,

मुद्रापकः ।



॥ श्री गणेशाय नमः ॥

# ॥ प्रपञ्चसारसारसंग्रहे पूर्वभागविषयानुक्रमणिका ॥

| विषयाः | पुटे |
|---|---|

| विषयाः | पुटे |
| --- | --- |
| होमद्रव्यपरिमाणम् | ६५ |
| मातृकासरस्वतीयन्त्रम् | ६७ |
| सकलदेवतासाधारणपीठपूजाविधिः | ६९ |
| सकलदेवतासामान्यपूजाक्रमः | ७५ |
| सकलदेवतासामान्यशङ्खपूरणविधिः | ७६ |
| आत्मपूजाविधिः | ७९ |
| किरीटपुष्पाञ्जलिः | ८५ |
| आवाहनादिमुद्रालक्षणानि | ८८ |
| पञ्चतत्वन्यासः | ,, |
| त्रिविधपूजोपचाराः | ९० |
| अर्घ्याद्युपचारद्रव्याणि | ,, |
| धूपादिप्रदर्शनप्रकारः | ९२ |
| नैवेद्यसमर्पणविधिः | ९३ |
| सुरभिमुद्रालक्षणम् | ९४ |
| पञ्चपुष्पाञ्जलिमन्त्रः | ९८ |
| पञ्चीकरणपुष्पाञ्जलिमन्त्रः | ९९ |
| साळिग्राममन्त्रः | ,, |
| मातृकामन्त्रप्रयोगविधिः | १०१ |
| प्रयोगान्तराणि | ,, |
| वर्णौषधिनामानि | १०३ |
| मातृकायाः प्रयोगान्तरम् | १०४ |
| प्रणवकलाः | १०६ |
| पुनरपि न्यासविशेषः | ,, |

| विषयाः | पृष्ठे |
|---|---|

| विषयाः | पुटे |
| --- | --- |
| धरणीमन्त्रविधानम् | ३१३ |
| पूजाविधिः | ,, |
| धरणीमन्त्रप्रयोगः | ,, |
| धरणीयन्त्रम् | ३१५ |
| त्वरिताविधानम् | ,, |
| त्वरितापूजाविधिः | ३१६ |
| प्रयोगः | ३१७ |
| प्रयोगान्तरम् | ३१८ |
| त्वरितायन्त्रविधानम् | ,, |
| अस्य मन्त्रस्य निग्रहचक्रविधानम् | ३१९ |
| यन्त्राङ्गकाळीमन्त्रः | ३२० |
| यम मन्त्रः | ,, |
| निग्रहचक्रान्तरम् | ३२१ |
| त्वरितामन्त्रस्य अनुग्रहचक्रम् | ३२२ |
| लक्ष्मी मन्त्रः | ३२३ |
| त्वरितामन्त्रस्य अनुग्रहचक्रान्तरम् | ३२४ |
| त्वरितायन्त्रान्तरम् | ,, |
| वज्रप्रस्तारिणीविधानम् | ३२५ |
| पूजाविधिः | ३२६ |
| नित्यक्लिन्नाविधानम् | ,, |
| अस्याः पूजाविधिः | ३२७ |

**त्रयोदशपटले —**

| | |
| --- | --- |
| मूलदुर्गाविधानम् | ३२८ |

| विषयाः | पृष्टे |
|---|---|

| विषयाः | पुष्टे |
|---|---|

| विषयाः | पृष्ठे |
|---|---|
|  |

| विषयाः | पुटे |
| --- | --- |

इति पूर्वभागविषयानुक्रमणिका समाप्ता



॥ श्रीः ॥

## ॥ शुद्धाशुद्ध पाठः ॥

| पृष्टे | पङ्क्तौ | शुद्धपाठः | अशुद्धपाठः |
|---|---|---|---|
| ४९ | १३ | होमादिकं | होमदिकं |
| ६४ | २१ | तत्र तत्रोक्ता | तल लत्रोक्ता |
| ६९ | २५ | ख-ज-पाठः | ख-झ-पाठः |
| ८७ | १२ | तलावाहन | तत्रवाहन |
| ११५ | १२ | प्रतिलोमेन | प्रितिलोमेन |
| १२६ | १९ | भ्रूमध्यमे | भूमध्यमे |
| १३८ | ७ | तद्बहिर्वृत्तं | तद्बहिर्वत्तं |
| १४१ | १७ | फुल्लै | पुल्लै |
| १६० | १६ | संभूय | संपूज्य |
| १८१ | ९ | एं ऐं | ऍं ऐं |
| १९६ | ९ | सप्तलक्षकोटि | सप्तकोटि |
| २३८ | १८ | न्व्लूं | न्व्लूं |
| ,, | १९ | य्लूं | य्लूं |
| २९८ | २० | मन्त्रान्तरं | यन्लान्तरं |
| ३०० | २१ | तेजसे ८ | तेजसे ४ |
| ५०९ | १३ | कुञ्जरान्तं | कुञ्चरान्तं |
| ५११ | १७ | कुण्डलद्वय | कुन्तलद्वय |
| ५१५ | १७ | लिप्योर्वी | लिप्योर्वा |

---

## प्रपञ्चसारसारसंग्रहे उदाहृतग्रन्थानां अकाराद्यनुक्रमणिका ॥

आकाशभैरवकल्पः
कादिमताख्यं नित्यातन्त्रम्
क्रमदीपिका
गणेशकल्पः
गारुडकल्पः
चिदम्बरकल्पः
तन्त्रसमुच्चयः
प्रपञ्चसारटीका
पिङ्गलागमः
मन्त्रदेवताप्रकाशिका
मन्त्रसारः
महाकपिलपाञ्चरात्रम्
महालक्ष्मीरत्नकोशः
मेधादक्षिणामूर्तिकल्पः
योगशास्त्रम्
रामकल्पः
शाङ्करभाष्यम्
शारदातिलकम्
शिवगीता
शिवपूजाकल्पः
श्रीविद्याकल्पः
सत्संप्रदायसर्वस्वम्
सारसंग्रहः
सुदर्शनविधानम्
सुरेन्द्रसंहिता
सूक्ष्मागमः

॥ श्रीः ॥

॥ श्रीगणेशाय नमः ॥

# ॥ श्रीमत्प्रपञ्चसारसारसङ्ग्रहः ॥

॥ श्रीगणेशाय नमः ॥ श्रीसरस्वत्यै नमः ॥ श्रीगुरुभ्यो नमः ॥

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥

नत्वा श्रीशङ्कराचार्यममरेन्द्रयतीश्वरम् ।
कुर्वे प्रपञ्चसारस्य सारसंग्रहमुत्तमम् ॥

तत्र प्रपञ्चसारे यद्यत् शङ्कराचार्यैरुक्तं मन्त्रयन्त्रप्रयोगादि तत्सर्वमपि सारभूतमेव । तथापीदानीं मन्दप्रज्ञानां विस्तरशो ज्ञातुमनुष्ठातुं चाशक्यत्वात् अत्यन्तोपकारभूतत्वेन यत्सारतरं तदल्पग्रन्थेनैव यथा सर्वमन्त्रयन्त्रतन्त्रसारग्रहणं स्यात्तथा सर्वतस्सारं गृहीत्वा मया सत्संप्रदायसर्वस्वाभिधव्याख्यानोक्तमार्गेण वक्ष्यते ॥

तत्र पुनः प्रसङ्गात्तत्र तत्र मन्त्रकल्पान्तरे मन्त्रसार-क्रमदीपिका-सनत्कुमारीय-शारदातिलक-मन्त्रदेवताप्रकाशिकादौ यद्यत् मन्त्रयन्त्रतन्त्राद्युक्तं तदपि किञ्चित्किञ्चित् वक्ष्यते ॥

तत्र प्रपञ्चसारे प्रथमं तावत् क्षीराब्धौ शेषपर्यङ्कशायिनं महाविष्णुं प्रति ब्रह्मादिभिस्त्रिमूर्तिभिः स्वेषामुत्पत्त्यादिविषयः प्रश्नप्रकारः प्रथमे पटले निरूपितः ॥

पुनर्विष्णुना, तदुत्तररूपेण त्रिगुणात्मिकायाः भुवनेश्वर्याः स्वशक्त्या-स्सकाशात् त्रयाणां ब्रह्मादीनां इतरेषां देवादीनां च, सर्ववैदिकतान्त्रिकमन्त्र-यन्त्रतन्त्राणां चोत्पत्तयो निरूपिताः प्रथमपटलावशिष्टग्रन्थैस्सह द्वितीयादिभि-स्त्रिभिः पटलैः ॥

तदुपरि पञ्चमषष्ठयोः पटलयोस्तु सर्वमन्त्रसाधारणदीक्षार्थं मण्डप-मण्डलनिर्माण - वास्तुबलि - कलशपूजा-होम-कलशाभिषेक-गुरूपसर्पण-मन्त्रोपदेश-गुरुदक्षिणाक्लृप्त्यादिप्रकारा उक्ताः ॥

तत्सर्वमिदानीन्तनैरतिप्रयाससाध्यत्वात् अननुष्ठीयमानत्वात् ग्रन्थविस्तर-भयाच्चात्र न लिख्यते। तस्मात्तत्सर्वं मूलग्रन्थ एवावलोकनीयं तदनुष्ठानेच्छुभिः ॥

दीक्षाशब्दार्थस्तु अत्रैवोक्तः —

दद्याच्च दिव्यभावं क्षिणुयाद्दुरितान्यतो भवेद्दीक्षा ।
मननात्तत्त्वपदस्य त्रायत इति मन्त्र उच्यते भयतः ॥

इति दीक्षामहिमा मन्त्रमहिमा चोक्तः। तत्र भयत इति भेदवासनाग्रन्थिरूपत इति। पुनरपि दीक्षाया अवश्यकर्तव्यता अत्रैवोक्ता —

दैवादिकस्याप्यथ मानुषादेः पैत्रादिकस्याप्यथ वत्सरस्य ।
आदिं समारभ्य समग्रसंपद्यत्नेन दीक्षाविधिमारभेत ॥

इति दीक्षाकालश्च तदवश्यकर्तव्यता चेत्युभयमप्युक्तम्। क्रमदीपिकायां चोक्तम्—

ऋते यया सन्ततजापितोपि सिद्धिं न यद्दास्यति मन्त्रपूगः ॥ इति ॥

ययेति दीक्षयेत्यर्थः। दीक्षाकालश्च क्रमदीपिकायामुक्तः —

चैत्रे कृत्वैतन्मासि कर्माच्छपक्षे पुण्यर्क्षे भूयो देशिकात्प्राप्य दीक्षाम् ।
तेनानुज्ञातः पूर्वसेवां द्वितीये मासि द्वादश्यामारभेतामलायाम् ॥ इति ॥

मेधादक्षिणामूर्तिकल्पे तु –

‘दीक्षादिना विना मन्त्रं भक्तानां शीघ्रसिद्धिदम् ॥’ इति ॥

भक्तश्चेद्दीक्षाऽनपेक्षा उक्ता च ॥

अथ पुनस्सप्तमे पटले मातृकासरस्वतीविधानमुक्तम्। तदारभ्य सर्वमन्त्रान् सऋष्यादिकान् साङ्गान् सध्यानान् सपूजाविधानान् सयन्त्रान् सकलशविधानान् सपुरश्चर्याविधानान् सप्रयोगविधानांश्च वक्ष्ये। तत्र ऋष्यादींश्च अङ्गानि च मन्त्रांश्च अप्रसिद्धसमित्पुष्पफलानां नामानि च आवृतिमन्त्रांश्च स्वरूपेणैव वक्ष्ये। यन्त्राणि प्रयोगांश्च सव्याख्यानरूपेण वक्ष्ये। तत्र प्रथमं तावन्मातृकादिसर्वमन्त्रजपारम्भविधिं, अस्मिन्नेव शास्त्रे प्राक् षष्ठपटलादौ —

“अथ पुनराचम्य गुरुः प्राग्वदनो विष्टरोपविष्टस्सन् ।
प्राणायामं सलिपिन्यासं कृत्वा ... ...”

इत्यादिग्रन्थैरुक्तेन प्रकारेण अर्थतो वक्ष्ये ॥

प्रथमं शुद्धोदके स्नात्वा निर्मलवसनो धौतपाणिपादानन आचान्तः पवित्रकरः ऊर्ध्वपुण्ड्रमस्तको वा त्रिपुण्ड्रमस्तको वा प्राङ्मुखः पद्मासने योनिमुद्रासने स्वस्तिकासने वा उपविशेत् ॥

पद्मासनप्रकारस्तु संमेळनगोपालन्यासविधाने उक्तः —

सव्यं पादमुपादाय दक्षिणोपरि विन्यसेत् ।
तथैव दक्षिणं पादं सव्यस्योपरि विन्यसेत् ॥

विष्टभ्य कट्युरोग्रीवा नासाग्रन्यस्तलोचनः ।
पद्मासनं भवेदेतत् सर्वेषामपि पूजितम् ॥ इति ॥

स्वस्तिकासनं तु योगशास्त्रे उक्तम् —

जान्वूर्वोरन्तरे कृत्वा सम्यक् पादतले उभे ।
ऋजुकायस्समासीनः स्वस्तिकं तत्प्रचक्षते ॥ इति ॥

योनिमुद्रासनं तु शिवगीतायामुक्तम् —

सव्यं पार्ष्णिं गुदे स्थाप्य दक्षिणं च ध्वजोपरि ।
योनिमुद्राबन्ध एवं भवेदासनमुत्तमम् ॥

योनिमुद्रासने स्थित्वा प्रजपेद्यस्समाहितः ।
यं कञ्चिदपि वा मन्त्रं तस्य स्युस्सर्वसिद्धयः ॥

*छिन्ना रुद्धाः स्तंभिताश्च कीलिता मूर्च्छितास्तथा ।
सुप्ता मत्ता हीनवीर्या दग्धाः स्रस्ताऽरिपक्षकाः ॥

बाला यौवनमत्ताश्च वृद्धा मन्त्राश्च ये मताः ।
योनिमुद्रासने स्थित्वा मन्त्रानेवंविधान् जपेत् ॥

तस्य सिद्ध्यन्ति ते मन्त्रा नान्यस्य तु कथञ्चन ॥ इति ॥

अथ दुष्टमन्त्रोद्देशश्च तल्लक्षणानि च शारदातिलकोक्तप्रकारेण लिख्यन्ते –

मन्त्रविद्याविभागेन द्विविधा मन्त्रजातयः ।
मन्त्राः पुंदेवतामन्त्रा विद्याः स्त्रीदैवताः स्मृताः ॥

पुंस्त्रीनपुंसकात्मानः मन्त्रास्सर्वे समीरिताः ।
पुंमन्त्रा हुंफडन्ताः स्युः द्विठान्तास्तु स्त्रियो मताः ॥

द्विठान्ताः स्वाहान्ताः ।

नपुंसका नमोन्ताः स्युः इत्युक्ता मनवस्त्रिधा ।
छिन्नादिदुष्टमन्त्रास्ते पालयन्ति न साधकम् ॥

---

*हीना रुद्धा इति च–ज पाठः ।

छिन्नो रुद्धश्शक्तिहीनः पराङ्मुख उदाहृतः ।
बधिरो नेत्रहीनश्च कीलितः स्तंभितस्तथा ॥

दग्धः स्रस्तश्च हीनश्च मलिनश्च तिरस्कृतः ।
भेदितश्च सुषुप्तश्च मदोन्मत्तश्च मूर्च्छितः ॥

हतवीर्यश्च भीतश्च प्रध्वस्तो बालकस्तथा ।
कुमारश्च युवा प्रौढः वृद्धो निस्त्रिंशकस्तथा ॥

निर्बीजः सिद्धिहीनश्च मन्दः कूटस्तथा पुनः ।
निरंशस्सत्वहीनश्च केकरो हीनबीजकः ॥

धूमितालिङ्गितौ स्यातां मोहितस्तु क्षुधार्तकः ।
अतिदृप्तोऽङ्गहीनः स्यात् अतिक्रुद्धस्समीरितः ॥

अतिक्रूरश्च सव्रीडः शान्तमानस एव च ।
स्थानभ्रष्टश्च विकलश्चातिवृद्धः प्रकीर्तितः ॥

निस्स्नेहः पीडितश्चापि वक्ष्याम्येषां च लक्षणम् ।
मनोर्यस्यादिमध्यान्तेष्वानिलं बीजमुच्यते ॥

संयुक्तं वा वियुक्तं वा स्वराक्रान्तस्त्रिधा पुनः ।
चतुर्धा पञ्चधा वाथ स मन्त्रः छिन्नसंज्ञकः ॥

स्वराक्रान्त इति—"अघोरेभ्योथ हां घोरेभ्यो हीं घोरघोरतरेभ्यश्च हूं सर्वेभ्यश्शर्वसर्वेभ्यो हैं नमस्ते अस्तु रुद्ररूपेभ्यो हौं" इत्युदाहरणम् ॥

आदिमध्यावसानेषु भूबीजद्वयलांच्छितः ।
रुद्धो मन्त्रस्स विज्ञेयः भुक्तिमुक्तिविवर्जितः ॥

भूबीजो लकारः ।

मायात्रितत्वश्रीबीजरावहीनस्तु यो मनुः ।

त्रितत्वं प्रणवो हुंकारो वा । रावः फ्रेंकारः ।

शक्तिहीनस्स कथितः यस्य मध्ये न विद्यते ॥

कामबीजं मुखे माया शिरस्यङ्कुशमेव वा ।

अङ्कुशः क्रोंकारः ।

असौ पराङ्मुखः प्रोक्तः, यो मन्त्रो बिन्दुसंयुतः ॥

आद्यन्तमध्येष्विन्दुर्वा स भवेद्बधिरः स्मृतः ।

इन्दुः सकारः ।

पञ्चवर्णो मनुर्यस्स्याद्रेफार्केन्दुविवर्जितः ॥ *

नेत्रहीनस्स विज्ञेयः दुःखशोकामयप्रदः ।

आदिमध्यावसानेषु हंसः प्रासादवाग्भवौ ॥

प्रासादः हौंकारः । वाग्भवः ऐंकारः ।

हकारो बिन्दुमान् जीवः रावं वापि चतुष्कुलम् ।

जीवः सकारः । चतुष्कुलं हूंकारः ।

माया नमामि च पदं नास्ति यस्मिन् स कीलितः ॥

एकं मध्ये द्वयं मूर्ध्नि यस्मिन्नस्त्रपुरन्दरौ ।

न विद्येते स मन्त्रः स्यात् स्तंभितः सिद्धिरोधकः ॥

अस्त्रं फट्कारः । पुरन्दरो लकारः ।

वह्निर्वायुसमायुक्तो यस्य मन्त्रस्य मूर्धनि ।

सप्तधा दृश्यते तं तु दग्धं मन्वीत मन्त्रवित् ॥

अस्त्रं द्वाभ्यां त्रिभिष्षड्भिः अष्टाभिर्दृश्यतेऽक्षरैः ।

त्रस्तः सोऽभिहितो यस्य मुखे न प्रणवः स्थितः ॥

---

*अर्कः श्रीं इति सूर्यबीजम् । इति छ मातृकायामधिकः पाठः ।

शिवो वा शक्तिरथवा हीनाख्यः स प्रकीर्तितः ।

शिवो हकारः ।

आदिमध्यावसानेषु भवेन्मार्णचतुष्टयम् ।

यस्य मन्त्रस्य मलिनः मन्त्रवित्तं विवर्जयेत् ॥

यस्य मध्ये दकारो वा क्रोधो वा मूर्धनि द्विधा ।

क्रोधो हुं बीजम् ।

अस्त्रं तिष्ठति मन्त्रस्य तिरस्कृत इतीरितः ॥

ओंद्वयं प्राङ्मुखे शीर्षे वषडस्त्रं च मध्यगम् ।

यस्य स्याद्भेदितो मन्त्रः त्याज्यस्सिद्धिषु सूरिभिः ॥

त्रिवर्णो हंसहीनो यः सुषुप्तः स उदाहृतः ।

मन्त्रो वाप्यथवा विद्या सप्ताधिकशताक्षरः ॥

फट्कारपञ्चकादिर्यो मदोन्मत्त उदीरितः ।

तद्वदस्त्रं स्थितं मध्ये यस्य मन्त्रस्य मूर्च्छितः ॥

विरामस्थानगं यस्य हतवीर्यः स कथ्यते ।

पञ्चकेत्यत्रापि संबध्यते ।

आदौ मध्ये तथा मूर्ध्नि चतुरस्त्रयुतो मनुः ॥

ज्ञातव्यो भीत इत्येषो, यस्स्यादेष्टादशाक्षरः ।

एकोनविंशत्यर्णो वा यो मन्त्रस्तारसंयुतः ॥

हृल्लेखाङ्कुशबीजाढ्यः तं प्रध्वस्तं प्रचक्षते ।

सप्तवर्णो मनुर्बालः कुमारोष्टाक्षरः स्मृतः ॥

षोडशार्णो युवा प्रौढश्चत्वारिंशल्लिपिर्मनुः ।

त्रिंशदर्णश्चतुष्षष्टिवर्णो मन्त्रश्शताक्षरः ॥

चतुश्शताक्षरश्चापि वृद्ध इत्यभिधीयते ।
नवाक्षरो ध्रुवयुतो मनुर्निस्त्रिंश ईरितः ॥

यस्यावसाने हृदयशिरोमन्त्रौ च मध्यतः ।
शिखा वर्म च संस्यातां वौषट् फट्कार एव वा ॥

शिवशक्त्यर्णहीनो वा स निर्बीज इति स्मृतः ।
एषु स्थानेषु फट्कारः षोढा यस्मिन्प्रदृश्यते ॥

स मनुः सिद्धिहीनः स्यात् मन्दः पङ्क्त्यक्षरो मनुः ।
पङ्क्तिशब्दो दशवाचकः ।
कूट एकाक्षरो मन्त्रः स एकोक्तो निरंशकः ॥

द्विवर्णः सत्त्वहीनः स्यात् चतुर्वर्णस्तु केकरः ।
षडक्षरो बीजहीनः सार्धसप्ताक्षरो मनुः ॥

सार्धद्वादशवर्णो वा निन्दितः स तु धूमितः ।
तत्र सार्धसप्तत्वादि अन्ते व्यञ्जनयोजनेन ज्ञेयम् ।

सार्धबीजत्रयस्तद्वदेकविंशतिवर्णकः ।
त्रिंशत्यर्णस्त्रिंशदर्णो यस्स्यादालिङ्गितस्तु सः ॥

द्वात्रिंशदक्षरो मन्त्रो मोहितः परिकीर्तितः ।
चतुर्विंशतिवर्णो यः सप्तविंशतिवर्णकः ॥

क्षुधार्तः स तु विज्ञेयः मन्त्रो दारिद्र्यदायकः ।
एकादशाक्षरो वापि पञ्चविंशतिवर्णकः ॥

त्रयोविंशतिवर्णो वा मन्त्रो दृप्त उदाहृतः ।
षट्त्रिंशदर्णको मन्त्रः षड्विंशत्यर्णकोपि वा ॥

त्रिंशदेकोनवर्णौ वाऽप्यङ्गहीनोऽभिधीयते ।
अष्टाविंशत्यक्षरो यः एकत्रिंशदथापि वा ॥

अतिक्रूरः स गदितः निन्दितस्सर्वकर्मसु ।
चत्वारिंशतमारभ्य त्रिषष्टिर्यावदापतेत् ॥

तावत्संख्या निगदिता मन्त्राः सव्रीडसंज्ञिताः ।
पञ्चषष्ट्यक्षरा ये स्युः मन्त्रास्ते शान्तमानसाः ॥

एकोनशतपर्यन्तं पञ्चषष्ट्यक्षरादितः ।
ये मन्त्रास्ते निगदिताः स्थानभ्रष्टाह्वया बुधैः ॥

त्रयोदशाक्षरा ये स्युः मन्त्राः पञ्चदशाक्षराः ।
विकलास्तेऽभिधीयन्ते शतं सार्धशतं तु वा ॥

शतद्वयद्विनवति एकहीनोऽथवाऽपि वा ।
शतत्रयं वा यत्संख्यं निःस्नेहास्ते समीरिताः ॥

चतुश्शतमथारभ्य यावद्वर्णसहस्रकम् ।
अतिवृद्धः प्रयोगेषु परित्याज्यः सदा बुधैः ॥

सहस्रार्णाधिका मन्त्राः दण्डकाः पीडिताह्वयाः ।
द्विसहस्राक्षरा मन्त्राः खण्डशः शतधा कृताः ॥

ज्ञातव्याः स्तोत्ररूपास्ते मन्त्रा एते यथास्थिताः ।
तथाविधाश्च बोद्धव्या मन्त्रिभिः काम्यकर्मसु ॥

दोषानिमानविज्ञाय यो मन्त्रान् जपते जडः ।
सिद्धिर्न जायते तस्य कल्पकोटिशतैरपि ॥ इति ॥

मन्त्राणां दश कथ्यन्ते संस्काराः सिद्धिदायिनः ।
जननं जीवनं पश्चात्ताडनं बोधनं तथा ॥

अथाभिषेको विमलीकरणाप्यायने ततः ।
तर्पणं दीपनं गुप्तिः दशैता मन्त्रसंस्क्रियाः ॥

मन्त्राणां मातृकामध्यादुद्धरो जननं स्मृतम् ।

मातृकावर्णान् तण्डुले विलिख्य तत्र विधानेन संपूज्य तन्मध्यात् अभीष्ट-मन्त्रवर्णपठनं मातृकामध्यादुद्धारः ॥

प्रणवान्तरितान् कृत्वा मन्त्रवर्णान् जपेत् सुधीः ।
एतज्जीवनमित्याहुः मन्त्रशास्त्रविशारदाः ॥

मन्त्रवर्णान् समालिख्य ताडयेत् चन्दनाम्भसा ।
प्रत्येकं वायुना मन्त्री ताडनं तदुदाहृतम् ॥

विलिख्य मन्त्रं तन्मन्त्री प्रसूनैः करवीरजैः ।
तन्मन्त्राक्षरसंख्यातैः हन्यात्तत् बोधनं स्मृतम् ॥

भूर्जे कुंकुमादिना मन्त्रं विलिख्य वह्निबीजेन करवीरपुष्पैः शतवारं ताडयेत् । एतत् बोधनं इत्यर्थः ।

स्वतन्त्रोक्तविधानेन मन्त्री मन्त्रार्णसंख्यया ।
अश्वत्थपल्लवैर्मन्त्रमभिषिञ्चेत् विशुद्धये ॥

स्वतन्त्रेति । मन्त्रान्ते अमुकं मन्त्रमभिषिञ्चामीत्यर्थः ।

संचिन्त्य मनसा मन्त्रं ज्योतिर्मन्त्रेण निर्दहेत् ।
मन्त्रे मलत्रयं मन्त्री विमलीकरणं त्विदम् ॥

आणवकार्मकमायीयं मलत्रयम् ।

तारं व्योमाग्निमनुयुक् दण्डी ज्योतिर्मनुर्मतः ।

तत्र व्योम इति हकारः । मनुरिति चतुर्दशस्वरः । दण्डी अनुस्वारः । मूलाधारे वह्निमण्डले ज्योतिर्मन्त्रं तदुपरि साध्यमन्त्रं संचिन्त्य ज्योतिर्मन्त्र-तेजसा दहेदिति ॥

कुशोदकेन जप्तेन प्रत्यर्णं प्रोक्षणं मनोः ।
तेन मन्त्रेण विधिवदेतदाप्यायनं मतम् ॥

मन्त्रेण वारिणा मन्त्रतर्पणं तर्पणं स्मृतम् ।

ताम्रपट्टे मन्त्रं विलिख्य मन्त्रान्तेऽमुकं मन्त्रं तर्पयामि नम इति तर्पयेत् ।

तारमायारमायोगो मनोर्दीपनमुच्यते ।
जप्यमानस्य मन्त्रस्य गोपनं त्वप्रकाशनम् ॥

संस्कारा दश संप्रोक्ताः सर्वमन्त्रेषु गोपिताः ।

पुनरपि शिवगीतायामुक्तम् —

सर्वान्कामानवाप्नोति मनुष्यः कम्बलासने ।
कृष्णाजिने भवेन्मुक्तिः मोक्षश्रीर्व्याघ्रचर्मणि ॥

कुशासने *भवेद्ज्ञानमारोग्यं पत्रनिर्मिते ।
प्राङ्मुखोदङ्मुखो वापि जपं पूजां समारभेत् ॥

पाषाणे दुःखमाप्नोति काष्ठे नानाविधान्गदान् ।
वस्त्रे श्रियमवाप्नोति भूमौ मन्त्रो न सिद्ध्यति ॥

अथ गारुडकल्पोक्तप्रकारेण आसननियमो लिख्यते —

धरण्यां सु(दुः)खसंवित्तिः दौर्भाग्यं दारुकासने ।
तृणासने यशोहानिः पल्लवे चित्तविभ्रमः ॥

आभिचारादिके नीलं रक्तं वश्यादिके भवेत् ।
वंशासने दरिद्रः स्यात्पाषाणे व्याधिपीडनम् ॥

दर्भासने तपोवृद्धिः प्रजावृद्धिस्तु रत्नके ।
गिरिगोष्ठपरिस्पन्दनद्यारण्याश्रमा ह्रदाः ॥

देशाः पुण्या जपस्यैते यत्र वा रोचते मनः ।
गृहे त्वेकगुणं जप्यं नद्यां तु द्विगुणं भवेत् ॥

गवां गोष्ठे शतगुणं अग्न्यगारे शताधिकम् ।
सिद्धक्षेत्रेषु तीर्थेषु देवतायाश्च सन्निधौ ॥

---

*भवेत् ध्यानं इति छ. ज. मातृकयोः पाठः ।

सहस्रशतकोटिः स्यादनन्तं विष्णुसन्निधौ ।
अश्वत्थमग्निमादित्यं ब्राह्मणान्देवमन्दिरम् ॥

नदीं जलाशयं चैव पृष्ठकृत्वं जपेन्न तु ॥ इति ॥

विशिष्य मन्त्रदेवतार्थप्रकाशिकायामुक्तम् —

सूर्यस्याग्नेर्गुरोरिन्दोर्दीपस्य च, जलस्य च ।
विप्राणां च गवां चैव सन्निधौ शस्यते जपः ॥

एतेषूक्तेष्वासनेषु एकस्मिन्नेवासीनः स्वगुरुगणाधिपान् वन्देत । तत्प्रकार उच्यते —

ॐ स्वस्ति श्रीपरमशिवानन्दनाथपादाद्यशेषगुरुपारंपर्यक्रमेण स्वगुरुनाथपादाम्बुजं यावत्तावत्प्रणौमि । ॐ श्रीगुरुभ्यो नम इति मूर्ध्नि संबन्ध्य, अथवा ब्रह्माद्यशेषगुरुपारंपर्यक्रमेण स्वगुरुनाथपादांबुजं यावत्तावत्प्रणौमि । ॐ श्री गुरुभ्यो नम इति मूर्ध्नि संबन्ध्य, गुं गुरुभ्यो नम इति दक्षिणांसे गं गणपतये नम इति वामांसे दुं दुर्गायै नम इति वामोरुदेशे, क्षं क्षेत्रपालाय नम इति दक्षिणोरुदेशे, सं सरस्वत्यै नम इति वक्त्रे, पं परमात्मने नम इति हृदये संबन्ध्य, पुनर्वामहस्ततलेन दक्षिणहस्ते कोर्परदेशादारभ्य तलान्तं सुदर्शनास्त्रमन्त्रेण वैष्णवदेवताविषये, शैवविषये तु पाशुपतास्त्रमन्त्रेण, इतरविषये तु ब्रह्मास्त्रेण विन्यसेत् ॥

सुदर्शनास्त्रमन्त्रस्तु ॐ सहस्रार हुं फट् ॥ इति ॥ पाशुपतास्त्रमन्त्रस्तु वामदेव ऋषिः । पंक्तिश्छन्दः । पशुपतिर्देवता । ॐ श्लीं पशु हुं फट् ॥ इति ॥ ब्रह्मास्त्रमन्त्रस्तु ॐ तपस्सत्यात्मने अस्त्राय फट् ॥ इति ॥ कोर्परं तावन्मणिबन्धादूर्ध्वदेशः । मणिबन्धो नाम हस्ततलस्य मूलदेशः ॥

पुनर्वामेपि इतरेण हस्ततलेन तथैव कृत्वा, पुनर्वामहस्ततलेन दक्षिणस्यापरदेशे कोर्परत आरभ्य आग्रं, तथैवेतरस्यापि इतरेण न्यस्त्वा पुनरपि

तत एवारभ्य इतरेतरेण हस्ततलेन इतरेतरस्य हस्तस्य सकलदेशेपि तेनैवास्त्र-मन्त्रेण न्यस्त्वा पुनर्हस्ततालयोरन्योन्यसंहतिजध्वनित्रयेण ताळत्रयाख्येन तेनै-वास्त्रमन्त्रेण उपर्युपरि क्रमेण त्रिवारं कृत्वा, पुनस्तेनैवास्त्रेण पूर्वां दिशमारभ्या-धस्तादन्तं क्रमेण दशदिग्बन्धनं अंगुष्ठतर्जन्यग्रोदितध्वनिपूर्वकं कुर्यात् । तेनैव मन्त्रेण तथैव संयुक्तया अंगुल्या परितश्चाग्निप्राकारं ध्यानेन कुर्यात् । तदुक्तं च सत्संप्रदायसर्वस्वाभिधानाख्ये प्रपञ्चसारविवरणे —

एभिर्दशभिर्मन्त्रैर्दशसु दिक्षु तर्जन्यंगुष्ठछोटिकाभिरात्मनो रक्षां कुर्या-दिति । तत्र दिक्पालपूजाविषये प्रागाद्यूर्ध्वान्तं दिक्क्रमः । दिग्बन्धने तु प्रागाद्यधस्तादन्तमिति विशेषः । तदुक्तं चास्मिन्नेव शास्त्रे सुदर्शनपटले —

'ऐन्द्रीं दिशं समारभ्य दिशं त्वधस्तादन्तं प्रोक्त्वा चक्रेण बध्नामि नमस्तथोक्त्वा चक्राय शीर्षं च दिशां प्रबन्धः' इति । तत्सर्वं क्रमदीपिकाया-मुक्तं च —

स्नातो निर्मलसूक्ष्मशुद्धवसनो धौतांघ्रिपाण्याननः
स्वाचान्तः सुपवित्रमुद्रितकरः श्वेतोर्ध्वपुण्ड्रोज्वलः ।
प्राचीदिग्वदनो निबद्ध्य सुदृढं पद्मासनं स्वस्तिकं
वासीनः स्वगुरून् गणाधिपमथो वन्देत बद्धाञ्जलिः ॥

ततोऽस्त्रमन्त्रेण विशोद्ध्य पाणी त्रिताळदिग्बन्धहुताशसालान् ।
विधाय भूतात्मकमेतदङ्गं विशोधयेत् शुद्धमतिः क्रमेण ॥ इति ॥

अथ तत्र सुदर्शनेन दिग्बन्धने पक्षविशेष उच्यते— ॐ नमः सुदर्श-नाय अस्त्राय फडित्यनेन मन्त्रेण वा दशदिग्बन्धनं कुर्यात् । एवमपि संप्र-दायोस्ति । तदुक्तं च क्रमदीपिकायाम् —

प्रणवहृदोरवसाने सचतुर्थिं सुदर्शनं चास्त्रकं च ।
उक्त्वा फडन्तममुना कलयेन्मनुनास्त्रमुद्रया दश हरितः ॥ इति ॥

सुदर्शनेन चेदेवं वा दिग्बन्धनं कृत्वा, पुनर्भूतशुद्धिं कुर्यात् । तत्प्रकारस्तु क्रमदीपिकोक्तप्रकारेण कथ्यते —

इडावक्त्रे धूम्रं सततगतिबीजं सलवकं
स्मरेत्पूर्वं मन्त्री सकलभुवनोच्छोषणकरम् ।
स्वकं देहं तेन प्रततवपुषापूर्य सकलं
विशोष्य व्यामुञ्चेत्पवनमथ मार्गेण खमणेः ॥

तेनैव मार्गेण विलीनमारुतं बीजं विचिन्त्यारुणमाशुशुक्षणेः ।
आपूर्य देहं परिदह्य वामतो मुञ्चेत्समीरं सह भस्मना बहिः ॥

अपरमतीव शुभ्रममृतांशुपथेन विधुं
नयतु ललाटचन्द्रममुतः सकलार्णमयीम् ।
अपरजपान्निपात्य रचयेच्च तया सकलं
वपुरमृतौघवृष्टिमथ वक्त्वकराद्यमिदम् ॥

अस्यार्थः—प्रथममिडावक्त्रे, वामनासिकाग्रं इडानाडीवक्त्रं तत्र, वायुबीजं सलवकं, लवकमिति बिन्दुः तेन युक्तं, पुनस्तद्बीजं धूम्रवर्णं च धूम्रमिति नीललोहितमिश्रवर्णं, तादृशं वायुबीजाख्यं यकारं सकलभुवनोच्छोषणकरं स्मरेत् । एवं स्मृत्वा, प्रततवपुषा व्याप्तवपुषा तेन वायुना स्वकं देहं वामनासिकाश्वासमार्गेणैवापूर्य, सकलं दैहिकं दुष्टं विशोषितं स्मृत्वा, पुनः खमणेरादित्यस्य मार्गेण पिङ्गलानाडीमार्गेण दक्षिणनासिकाश्वासमार्गेणेत्यर्थः । तेन मार्गेण तं पूर्वपूरितं वायुं व्यामुञ्चेत् रेचयेदित्यर्थः ॥

पुनरपि तेनैव मार्गेण खमणेर्मार्गेण पिङ्गलामार्गेण दक्षिणनासिकाश्वासमार्गेणेत्यर्थः । तेन मार्गेण पूर्वविसृष्टं मारुतमेव पश्चाद्विलीनमारुतं निवर्तयित्वा तत्रैव प्रविष्टमारुतं कृत्वा, पुनराशुशुक्षणेरग्नेर्बीजं सबिन्दुकं रेफ-

मित्यर्थः । तद्बीजमरुणमव्यक्तरागस्वरूपमेतादृशमाशुशुक्षणेर्बीजं तु, विलीन-मारुतमिति क्रियाविशेषणम् । एवं दक्षिणनासिकाश्वासमार्गेण मारुतं विलीनं कृत्वा, अरुणवर्णमग्निबीजं तत्र ध्यात्वा, तं वायुमग्निबीजसहितमापूर्य, पूर्वं परिशोषितं देहं सर्वं परिदग्धं संभाव्य वामनासिकाश्वासमार्गेण वायुं तेन दग्धभस्मना सह व्याशुश्चेत् ॥

पुनः अपरमिति । अपरं विधुमिति समानाधिकरणे द्वितीये । अपरः ठकारः । तं विधुं सोमात्मकं शुभ्रवर्णं च ध्यात्वा, अमृतांशुपथेन इडानाडीमार्गेण वामनासिकाश्वासमार्गेणेत्यर्थः । तेन मार्गेण मूलाधारं नीत्वा, सुषुम्नाद्वारेण ललाटोपलक्षितद्वादशान्ते स्थितमिन्दुमण्डलं प्रापय्य, तयोरुभयोः संबन्धात् चन्द्रमण्डलचालनात् ततो निस्सृतामृतधारया तद्भस्म प्रक्षाल्य, तयैव जीवमापाद्य, पुनरकारादिवर्णरूपया तया मुखकरचरणादिकमुत्पादयामीत्यनुस्मरन्, वमित्यमृत-बीजं सप्रणवं च त्रिशद्वारं कुंभकेन संपाद्य, देहकाठिन्यार्थं लंबीजं मूर्ध्नि विन्यसेत् । पुनर्मातृकावर्णान् काननवृतेत्यादिना अस्मिन्नेव मातृकापटले उपरि वक्ष्यमाणेन क्रमेण न्यसेत् । एवमिडावक्त्रेत्यादिनोक्तो भूतशुद्धिप्रकारः । केवलमातृकान्यासेन वा भूतशुद्धिं कुर्यात् ॥

अथवा प्रकारान्तरेणापि सूक्ष्मागमोक्तप्रकारेणापि भूतशुद्धिं वक्ष्ये — स्वदेहं पृथिव्यादिभूतबीजं ब्रह्मविष्णुभ्यामुत्पन्नांकुरं रागद्वेषधर्माधर्ममोहमूलं विद्याधिपतिपरिपालितं कलादितत्त्वसारं तन्मात्रेन्द्रियशाखोपशाखं विषया-लोचनपल्लवं भावप्रपञ्चकुसुमं बुद्ध्यध्यवसायसंकल्पफलं पुरुषभोगोपभोग्यं भोग्य-भोक्तृत्वरसमूर्ध्वमूलमधश्शाखं वटतरुरूपं संचिन्त्य प्रथमपूरकार्धेन निवृत्ति-कलाबीजोच्चारपञ्चकेन पत्रपुष्पफलरहितं स्तब्धं विभाव्य पूरकापरार्धेन प्रतिष्ठा-कलाबीजस्य चतुष्कोच्चारणेन दग्धपत्रपुष्पफलोपेतं विचिन्त्य, कुंभके प्रथमा-परार्धाभ्यां विद्याविद्याकलाबीजोच्चारत्रयेण दग्धं समूलं विभाव्य, रेचक-

पूर्वार्धेन शान्तिकलाबीजोच्चारद्वयेन भस्मीभूतं दशदिक्षु प्रलीनं विभाव्य, रेचकापरार्धेन शान्त्यतीतकलाबीजैकोच्चारेण शुद्धस्फटिकरूपं संचिन्तयेत् ॥

ततो दग्धरूपं सर्वशून्यमिति विभाव्य, वौषडन्तमूलेन शिखान्तस्थाधोमुखपद्मस्रवदमृतधाराभिः सकलनाडीमुखं प्रविष्टाभिः सबाह्याभ्यन्तरं सर्वशरीरमाप्लाव्य, हृदये नाळपत्रकर्णिकारूपं पञ्चमकारादिमातृकात्रययुक्तेन प्रणवेन शुद्धविद्यात्मकमासनं विन्यस्य, तत्कर्णिकायां पुर्यष्टकं चतुष्कलेन प्रणवेनावतीर्णं भावयित्वा, तस्मिन् द्वादशान्तस्थं बीजरूपं शिवमयमात्मानं पञ्चकलेन प्रणवेन पूरकेण सृष्ट्या समानीय ज्योतीरूपं संस्थाप्य, वौषडन्तशक्तिमन्त्रोच्चारेण क्षुब्धशक्तिपरिस्रुतबहुळामृतप्रवाहेणाभिषिञ्चेत् । तत्र ह्रामिति निवृत्तिकलाबीजम् । *ह्रीमिति प्रतिष्ठाकलाबीजम् । हूं ह्यें ह्रौं इति विद्याशान्तिशान्त्यतीतकलाबीजानि क्रमेण । एवं रहस्यागमोक्तप्रकारा भूतशुद्धिः ॥

अनेन प्रकारेण वा पूर्वोक्तक्रमदीपिकोक्तप्रकारेण वा भूतशुद्धिं कृत्वा, पुनः हकारत्रयमुच्चार्य सुषुम्नानाडीमार्गनिरोधकपर्वतत्रयभञ्जनं कृत्वा, हंस इत्युच्चार्य मूलाधारस्थजीवं सुषुम्नया द्वादशान्तं नयन्, पुनस्सोहमित्युच्चार्य द्वादशान्ते सहस्रदलकमलमध्यस्थं सहस्रादित्यसङ्काशं परमात्मानं स्वात्मानं चैकीकृत्य, पुनः प्राणायामं कुर्यात् । तत्प्रकार उच्यते —

अकारं सबिन्दुकं द्वादशवारमावर्तयन् दक्षिणनासिकया विरेच्य, उकारं सबिन्दुकं षोडशवारमावर्तयन् वामनासिकया आपूर्य, मकारपूर्वकं तत्तन्मूलमन्त्रं द्वादशवारमावर्तयन् कुम्भकं कुर्यात् । एवं प्राणायामत्रयं कुर्यात् । तदुक्तं च सम्मेळनगोपालकन्यासविधाने—अमिति द्वादशवारं दक्षिणनासिकया विरेच्य उमिति षोडशवारं वामनासिकया पूरयित्वा मकारपूर्वकविद्यासहितमन्त्रं द्वादशवारमावर्तयन् कुम्भकं कुर्यादिति ॥

---

*स्रीमिति प्रतिष्ठा इति ख, ग, घ, ङ पाठः । ह्वीमिति च-छ-ज पाठः ।

अथवा यं यं मन्त्रं जप्तुमिच्छति तेन तेन मन्त्रेण प्राणायामं पञ्च-चतुर्विंशदादितत्वसंख्यया केवलकुम्भकरूपेण वा अष्टषोडशद्वात्रिंशदादिसंख्यया वा षोडशद्वात्रिंशच्चतुष्षष्ट्यादिसंख्यया वा रेचकपूरककुंभकरूपेण कुर्यात् । अथवा हरिविषयमन्त्रजपेषु सर्वत्र मूलमन्त्रेणैव प्राणायामः । इतरविषयेषु तत्तद्विधानोक्तप्रकारेण वा प्रणवेन वा कुर्यात् । एवं सर्वमन्त्रजपस्य पुरतश्च परतश्च त्रिवारं कुर्यात् । एवं दिनशो यः षोडशसंख्यं करोति स तु मासतः पापात् परिपूयते । अथवा कृष्णमन्त्रेषु सर्वेषु कामबीजेन प्राणायामं कुर्यात् । तत्तु चतुष्षष्टिवारं कुर्यात् । गोपालदशाक्षरीमन्त्रेण चेत् अष्टाविंशतिवारं कुर्यात् । गोपालकाष्टादशाक्षरीमन्त्रेण चेत् द्वादशवारं कुर्यात् । इतरमन्त्रैश्चेत् वर्णानुरूपं कुर्यात् । तदुक्तं च क्रमदीपिकायाम्—

पवनसंयमनं त्वमुना चरेत् यमिह जप्तुमसौ मनुमिच्छति ॥ इति ॥

अथवाऽखिलेषु हरिमन्त्रजपविधिषु
मूलमन्त्रतस्संयमनममलधीः ।
मरुता विजिताभ्यसन् चरतु तत्वसंख्यया
पुरतो जपस्य परतो विहितमथ तत्त्रयं बुधैः ॥

षोडश य इहाचरेद्दिनशः परिपूयते स खलु मासतोंहसः ।

अथवाङ्गजन्ममनुना सुसंयमं सकलेषु कृष्णमनुजापकर्मसु ।
सहितैकसप्तकृतिवारमभ्यसन् तनुयात् समस्तदुरितापहारिणा ॥

अष्टाविंशतिसंख्यमिष्टफलदं मन्त्रं दशार्णं जप-
न्नायच्छेत् पवनं सुसंयतमतिस्त्वष्टादशार्णेन चेत् ।
अभ्यस्यन् रविवारमन्यमनुभिर्वर्णानुरूपं जपं
कुर्याद्रेचकपूर्वकं सुनिपुणं प्राणप्रयोगं बुधः ॥

रेचयेन्मारुतं दक्षिणया दक्षिणं पूरयेद्वामया मध्यनाड्या पुनः ।

धारयेदीरितं रेचकादित्रयं स्यात्कलादन्तविद्याख्यमात्रात्मकम् ॥ इति ॥

कनिष्ठानामिकाङ्गुष्ठैर्यन्नासापुटधारणम् ।
प्राणायामस्स विज्ञेयः तर्जनीमध्यमे विना ॥

एवं प्राणायामं कृत्वा तज्जाप्यमन्त्रं प्रतिलोमेनोच्चार्य स्वात्मानं तेजोरूपं ध्यात्वा तत्तेजः करतले दक्षिणनासिकाश्वासमार्गेण निपात्य करन्यासं कुर्यात् । यत्र यत्र करन्यासमन्त्रः पृथगनुक्तः तत्र सर्वत्र तत्तत्साध्यमन्त्रस्य षडङ्गैर्वा पञ्चाङ्गैर्वा कुर्यात् ॥ तदुक्तं चास्मिन्नेव प्रपञ्चसारे —

अङ्गुलीषु क्रमादङ्गैरङ्गुष्ठादिषु विन्यसेत् ।
कनिष्ठान्तासु तद्बाह्यतलयोः करयोस्सुधीः ॥ इति ॥

अथ करन्यासप्रकार उच्यते— उभाभ्यां कराभ्यां तत्तदङ्गुष्ठाद्यङ्गुलीषु क्रमेणाङ्गुलीमूलमारभ्याऽऽग्रं मन्त्रपूर्वकमङ्गुष्ठाभ्यां नम इत्यादि न्यसेत् । तत्र तर्जनीभ्यामङ्गुष्ठयोः इतरासु तु अंगुष्ठाभ्यां च न्यसेत् । तत्र पञ्चाङ्गपक्षे अंगुलीष्वेव विन्यसेत् । षडङ्गपक्षे षष्ठो न्यासस्तावत् वामहस्ततलेन दक्षिणहस्ततले दक्षिणहस्ततलेन वामहस्ततले च न्यसेत् । एवं करपृष्ठयोश्च । तदुक्तं च सत्संप्रदायसर्वस्वाभिधाने प्रपञ्चसारविवरणे — 'उभयकरयोरङ्गुष्ठयोर्मूलाद्याग्रं तर्जनीभ्यां तर्जन्यादिकनिष्ठान्तमङ्गुष्ठाभ्यां च पञ्चभिरङ्गमन्त्रैः परामृश्य षष्ठं तलयोश्च वामे दक्षिणेन दक्षिणे वामेन च न्यसेत् ॥ इति ॥

एवं कृत्वा पुनर्लिपिन्यासं उपरि मातृकाविधाने वक्ष्यमाणक्रमेण कृत्वा तदृष्यादींश्च वक्ष्यमाणक्रमेण कृत्वा *जप्त्वा यथाशक्ति तदुपसंहृत्य पुनः साध्यमन्त्रस्य ऋष्यादिपूर्वकं जपं वा पूजां वा समारभेत । अयमेव सर्वमनूनां जपारंभे पूजारंभे च न्यायः ॥

---

*ध्यात्वा जप्त्वा इति ख छ पाठः ।

अथ मातृकामन्त्रस्य ब्रह्मा ऋषिः । गायत्री छन्दः । मातृकासरस्वती देवता । तत्र ऋष्यादेः स्थानानि अस्मिन्नेव शास्त्रे पञ्चमपटलादावुक्तानि—

ऋषिर्गुरुत्वात् शिरसैव धार्यः छन्दोऽक्षरत्वात् रसनागतं स्यात् ।
धियाऽवगन्तव्यतया सदैव हृदि प्रदिष्टा मनुदेवता च ॥ इति ॥

पुनरेतेषामर्थश्च तत्रैवोक्तः—

ऋषिवर्णादिकौ धातू स्तो गत्यां प्रापणेऽपि च ।
ताभ्यां यद्यत्स्वरूपं स ऋषिः स्याद्गुरुवाचकः ॥

इच्छादानार्थकौ धातू स्तश्छदाद्यश्च दादिकः ।
तयोरिच्छां ददातीति छन्दो मन्त्रार्णवाचकः ॥

आत्मनो देवताभावप्रदानाद्देवतेति च ।
पदं समस्तमन्त्रेषु विद्वद्भिस्समुदीरितम् ॥ इति ॥

एवं ऋष्यादीन् कृत्वा पुनष्षडङ्गान्यवश्यकर्तव्यानि कुर्यात् । मेधादक्षिणामूर्तिकल्पे तु भक्तश्चेदवश्यकर्तव्यताराहित्यमुक्तं च—

अङ्गन्यासं विना वापि शिवभक्तस्य सिद्ध्यति ।
अङ्गमन्त्रैर्विना वापि सिद्धसाध्यादिभिर्विना ।
जपेन मन्त्रः सर्वेषां सर्वसिद्धिप्रदो भवेत् ॥ इति ॥

अथ षडङ्गन्यासस्थानानि च तत्सामान्यप्रकाराश्चोच्यन्ते—

हृदयशिरसोश्शिखायां कवचाक्ष्यस्त्रेषु सचतुर्थीषु ।
नत्या हुत्या वषड्‌हुं वौषट्फट्पदैः षडङ्गविधिः ॥

पञ्चैव यस्य मन्त्रस्य भवन्त्यङ्गानि मन्त्रिणः ।
सर्वेष्वपि च मन्त्रेषु नेत्रलोपो विधीयते । इति ॥

अथ मातृकामन्त्रस्य षडङ्गविधिः —अं क ख ग घ ङ आं हृदयाय

नमः । इं च छ ज झ ञ ईं शिरः । उं ट ठ ड ढ ण ऊं शिखा । एं त थ द ध न ऐं कवचम् । ओं प फ ब भ म औं नेत्रम् । अं य र ल व श ष स ह ळ क्ष अः अस्त्राय फट् ॥

मातृकावर्णैरङ्गविधौ सर्वत्रैवमेव स्वराक्षराणां बिन्दुयुक्तं च, हलां तद्रहितं च, स्वराणां मध्ये ऋकारादिवर्णचतुष्टयरहितं च स्वराक्षरद्वन्द्व-पुटितकादिवर्गं च कर्तव्यम् । तदुक्तं च—

आद्यन्तस्वरषट्कलब्धपरयोरन्तस्स्थितैः कादिभिः
वर्गैर्यान्तगतैः क्रमेण कथिता न्यासाः षडङ्गानि च ॥ इति ॥

तत्राङ्गन्यासमुद्राप्रकारः क्रमदीपिकोक्तप्रकारेणोच्यते—

अनङ्गुष्ठा ऋजवो हस्तशाखाः भवेन्मुद्रा हृदये शीर्षके च ।
अधोङ्गुष्ठा खलु मुष्टिः शिखायां करद्वन्द्वाङ्गुलयो वर्मणि स्युः ॥

नाराचमुष्ट्युद्धृतबाहुयुग्मकाङ्गुष्ठतर्जन्युदितो ध्वनिस्तु ।
विष्वग्विषक्तः कथितोऽस्त्रमुद्रा यत्राक्षिणी तर्जनीमध्यमे च ॥

यत्राक्षिणीत्यनेन यत्रशब्देन पञ्चाङ्गपक्षे नेत्रलोपः प्रागुक्तः सूचितः । तत्र नाराचमुष्टिलक्षणमुच्यते— हस्ततलद्वयमन्योन्यं संमुखीकृत्य तयोर्मध्य-मानामिकाकनिष्ठांगुलीर्मुष्टीकृत्य तर्जनीद्वयं तु ऋजूकृत्य अन्योन्याग्रेण संस्पृश्य अङ्गुष्ठद्वयं च तथैव ऋजूकृत्यान्योन्यं संश्लिष्य ताभ्यामङ्गुष्ठतर्जनी-द्वन्द्वाभ्यामुदितो ध्वनिः स्वपरितो विषक्तः अस्त्रमुद्रेत्यर्थः ॥

तत्रास्त्रमुद्रानन्तरं नेत्रमुद्रोक्त्या वैष्णवदेवताविषये सर्वत्रास्त्रन्यासानन्तरं नेत्रन्यास इति केषांचित् पक्षः सूचितः । मन्त्रदेवताप्रकाशिकायामपि अङ्गविधिरुक्तः 'त्रिध्येकदशकत्रिद्विसंख्याकाङ्गुलिभिः क्रमात्' इति ॥

अस्यार्थः— अङ्गुष्ठतर्जनीमध्यमायुक्तेनाङ्गुलीत्रयेण हृदयं । अङ्गुष्ठ-तर्जनीभ्यां शिरः । अंगुष्ठेन शिखा । उभयकरदशांगुलीभिः कवचम् ।

तर्जनीमध्यमानामिकात्रितयेन नेत्रम् । उभयकराङ्गुष्ठतर्जनीभ्यां अस्त्रमिति । अङ्गानामर्थस्तु—

हृदयं बुद्धिगम्यत्वात् प्रणामः स्यान्नमःपदम् ।
क्रियते हृदयेनातः बुद्धिगम्या नमस्कृतिः ॥

तुङ्गार्थः शिरसे चेति विषयाहरणे द्विठः ।
शिरो मन्त्रेण चेत्तुङ्गविषयाहृतिलक्षणा ॥

शिखा तेजः समुद्दिष्टा वषडित्यङ्गमुच्यते ।
तत्तेजोस्य तनुः प्रोक्ता शिखामन्त्रेण मन्त्रिभिः ॥

कव गृह्णन इत्यस्माद्धातोः कवचसंभवः ।
हुं तेजस्तेजसा देहो गृह्यते कवचं ततः ॥

असुत्रासादिकौ धातू संक्षेपचलनार्थकौ ।
तेनानिष्टं समाक्षिप्य चालयेत् फट्पदाग्निना ॥

नेत्रं दृष्टिस्समुद्दिष्टा वौषट् दर्शनमुच्यते ।
दर्शनं दृग्विषयेण स्यात् तत्तेजो नेत्रवाचकम् ॥ इति ॥

एवमङ्गन्यासं कृत्वा पुनर्बीजशक्त्यादीन् स्मरेत् । यत्र यत्र बीजशक्ती पृथगनुक्ते, तत्र सर्वत्र प्रणवो बीजम् । *भुवनेश्वरी शक्तिः इत्याचार्याभिप्राय इति वर्णयन्ति । तदुक्तं च प्रपञ्चसारटीकाकारेण – 'अनुक्तबीजशक्तिविशेषाणां मन्त्राणां प्रणवो बीजम् । भूतिश्शक्तिरिति' । विवरणकारैस्तु तत्र तत्र उक्तानि च । अत्र तु हमिति बीजं स इति शक्तिः ॥ बीजशक्तिकीलकैस्तु स्तनयोर्द्वयोर्हृदि च न्यसेत् । केवलं मनसा स्मरेद्वा । अष्टाष्टवारं जपेद्वा ॥

---

*भुवनेशी इति ख, च, ज, मातृका पाठः ।

तत्र गोपालविषये तु क्वचित् क्वचित्किंचिदधिकानि सन्ति। क्लीं बीजं स्वाहा शक्तिरिति स्तनयोः। जं कीलकम्। वं जीवः। एतद्द्वयं हृदि। कृष्णः प्रकृतिरिति नाभौ। दुर्गाऽधिष्ठात्री देवता। विष्णुरभिमानी देवता। एतत् द्वयं हृदि न्यसेत्। सर्वमन्त्रस्यापि प्रकृतिर्देवता, अधिष्ठात्री देवता, अभिमानिनी देवता चेति देवतात्रैविध्यमस्ति। यथा गायत्रीमन्त्रस्य सूर्यश्च नारायणश्च शक्तिश्च। एवं सर्वत्रानुक्तस्थले गुरुमुखादेव तत् ज्ञेयम्। मन्त्रदेवताप्रकाशिकायामप्युक्तम्। बीजं शक्तिं च मूलाधारे न्यसेत्। सर्वमन्त्रेषु ब्रह्म बीजम्। माया शक्तिः। जीवो बीजम्। बुद्धिः शक्तिः। उदानो बीजम्। सुषुम्ना नाडी सरस्वती शक्तिरिति मूलाधारे न्यसेत्। तत्र ब्रह्ममायाशब्दाभ्यां प्रणवहृल्लेखार्थभूते परब्रह्ममूलप्रकृती उच्येते। जीवबुद्धिशब्दाभ्यां सर्वकारणभूतब्रह्ममाययोः ज्ञानभागावुच्येते। उदानसुषुम्नानाडीशब्दाभ्यां ब्रह्ममाययोः प्रवर्तकभागावुच्येते। एवं सत्यशबलितयोः ब्रह्ममाययोः सर्वप्रपञ्चकारणत्वं, प्रणवहृल्लेखयोः समस्तमन्त्रबीजशक्तिकारणत्वं च उक्तं भवति। तस्मात्समस्तमन्त्रानुस्यूतशब्दब्रह्माख्यमातृकामन्त्रावगाहिप्रणवहृल्लेखावाच्य मायाशबलित ब्रह्मस्वरूप प्रत्यगात्मभूताखण्डसुखचित्प्रकाशात् समस्ताङ्गसहित सकलदेवता मन्त्रमूर्तयः साधकस्य भाग्यवशात् प्रज्वलिताग्नेर्विस्फुलिंगा इव प्रादुर्भूता इति भावयेत्। अनन्तरं तथाविधाभीष्टदेवतामयं तेजः स्वशरीरे अन्तर्बहिश्च व्याप्नोतीति चिन्तयेत्॥

पुनर्मातृकाध्यानम्—

पञ्चाशद्वर्णभेदैर्विहितवदनदोःपादयुक्कुक्षिवक्षो-
देहां भास्वत्कपर्दाकलितशशिकलामिन्दुकुन्दावदाताम्।
अक्षस्रक्कुम्भचिन्तालिखितवरकरां त्रीक्षणां पद्मसंस्थां
अच्छाकल्पामतुच्छस्तनजघनभरां भारतीं तां नमामि॥

तत्र अक्षस्रगिति अक्षमाला। कुम्भः पूर्णकुम्भः। चिन्तेति

ज्ञानमुद्रा । आलिखितं पुस्तकम् । तत्र दक्षिणाङ्गुष्ठतर्जन्योरन्योन्याग्रसंस्पर्शेन पराभिमुखप्रदर्शनं ज्ञानमुद्रेति कीर्त्यते । पुनरेवं ध्यात्वा त्रिंशत्पटले त्र्यम्बकविधाने वक्ष्यमाणप्रकारेण प्राणप्रतिष्ठां कृत्वा मानसपूजां पञ्चोपचारैः कुर्यात् । तत्प्रकार उच्यते—

प्रथममुभयकराङ्गुष्ठाग्रेण उभयकरकनिष्ठिकयोः मध्यमपर्वणोः स्पर्शनपूर्वकं ओं गन्धं कल्पयामीत्युक्त्वा गन्धोपचारं समर्पयेत् । पुनस्तथैव तर्जन्यग्रद्वयेन अङ्गुष्ठद्वयमध्यदेशसंस्पर्शनपूर्वकं ओं पुष्पं कल्पयामीति पुष्पमुद्रया पुष्पोपचारं समर्पयेत् । पुनरितरासु तिसृष्वपि अङ्गुलीषु तर्जन्यादिषु अङ्गुष्ठाग्रेण मध्यमपर्वदेशसंस्पर्शनपूर्वकमेव धूपदीपनैवेद्यमुद्राः क्रमेण तत्तन्नाम्ना पूर्ववदेव समर्पयेत् । [1]एवं सर्वत्र मानसपूजाप्रकारः । तत्क्रमदीपिकायां सूचितं च—

ततो निवेद्य मुद्रिकां प्रधानया करद्वये
स्पृशन्ननामिकां निजं मनुं जपन् प्रदर्शयेत् ॥ इति ॥

प्रधानयेति अङ्गुष्ठेन । तत्र तु केवलं निवेद्य मुद्रामात्रं प्रदर्शितम् । अयमेव न्याय इतरमुद्रिकाणामपि द्रष्टव्यः ॥ अथवा कल्पान्तरोक्तप्रकारेण गन्धाद्युपचारमन्त्रः— लं पृथिव्यात्मने नारायणाय सत्यं गन्धं कल्पयामि । हं आकाशात्मने वासुदेवाय ब्रह्मपुष्पं कल्पयामि । यं वाय्वात्मने संकर्षणाय धूपं कल्पयामि । रं अग्न्यात्मने प्रद्युम्नाय दीपं कल्पयामि । वं अबात्मने अनिरुद्धाय [2]अन्नं नैवेद्यं कल्पयामि । एभिरेव वा मन्त्रैः पूर्वोक्तमुद्राप्रकारेण मानसपूजां कुर्यात् ॥ एवं स्वहृदये देवतां ध्यात्वा तत्र मानसपूजां कृत्वा मातृकासरस्वतीमन्त्रं पूर्वसेवापुरस्सरं लक्षसंख्यं जपेत्

१ एवमेव सर्वत्र इति ख, ग, घ, छ पाठः ।

२ आनन्दान्नं इति ख, ग, घ, ङ, च, छ, ज, पाठः ।

न्यसेच्च तावत्संख्यं पुरश्चरणार्थम् । अकाराद्याः क्षकारान्ता वर्णाः मातृकासरस्वतीमन्त्रः । तत्र पूर्वसेवेति सर्वेषां मन्त्राणां पुरश्चर्यायाः प्रागेव तदधिकारसिद्ध्यर्थमेतावत्संख्यं जप्तव्यमित्यस्ति नियमः । तावत्तद्विधानोक्तसंख्यया पूर्वं जप्त्वा, पश्चाद्यथाविधि पुरश्चर्यां कुर्यादित्यर्थः । तत्सूचयिष्यति चास्मिन्नेव प्रपञ्चसारे वक्ष्यमाणनृसिंहविधाने—

द्वात्रिंशतिसाहस्रैरधिकृतिरयुतैर्भवेत्पुरश्चरणम् ।
तावद्भिस्तावद्भिर्लक्षैस्सिद्ध्यै समीरितास्य मनोः ॥ इति ॥

क्रमदीपिकायामप्येवमेवोक्तम्, अष्टादशाक्षरविधाने दशाक्षरीविधाने च—

तेनानुज्ञातः पूर्वसेवां द्वितीये मासि द्वादश्यामारभेतामलायाम् ।
प्रजपेदयुतचतुष्कं दशाक्षरं मनुवरं पृथक् क्रमशः ॥
अष्टादशाक्षरं चेदयुतद्वितयमित्युदीरिता संख्या ॥ इति ॥

पुनरपि तत्रैवोक्तम्—

एकं वैषामशक्तौ गदितमिह मया पूर्वसेवाविधानं
निर्वृत्तेस्मिन्पुनश्च प्रजपतु विधिवत् सिद्धये साधकेन्द्रः ॥ इति ॥

तत्र द्वितीये मासीति । प्रथमे मासि दीक्षां कृत्वा, पश्चात् द्वितीये मासि जप्यादित्यर्थः ॥

तत्र, एकं वैषामशक्तौ इत्येषां पदानामस्मिन्नर्थेऽन्वयो नास्ति । पूर्वत्रैवान्वयः । तत्र तु, पूर्वसेवासंख्या यत्र नोक्ता, तत्र सर्वत्र सहस्रसंख्या कर्तव्येति संप्रदायः । तदुक्तं च मेधादक्षिणामूर्तिकल्पे—

संख्यानुक्ते सहस्रं स्यात् द्रव्यानुक्ते घृतं तथा ।
समिधोनुक्तविषये पलाशः परिकीर्तितः ॥ इति ॥

तत्र शिवभक्तश्चेत् पूर्वसेवापेक्षानियमो नास्ति । तदुक्तं चिदम्बरकल्पे—

पूर्वसेवां विना वापि शिवभक्तस्य सिद्ध्यति ॥ इति ॥

अथास्य मातृकाक्षरन्यासस्य स्थानान्युच्यन्ते—

[1] दोःपत्सन्ध्यग्रेषु च पार्श्वद्वयपृष्ठनाभिजठरेषु ।
हृद्दोर्मूलापरगळकक्षेषु हृदादिपाणिपादयुगे ।
जठराननयोर्व्यापकसंज्ञान्क्रमशो [2] न्यसेदर्णान् ॥

तत्र यादयो व्यापकाक्षराणि । तानि तु हृदयादारभ्यैव तदुक्तस्थानपर्यन्तं व्यापकरूपेणैव न्यसेत् । तदुक्तं च क्रमदीपिकायाम्—

हृदयपूर्वमनेन पथान्वहं न्यसतु शुद्धकळेबरसिद्धये ॥ इति ॥

तत्र दोर्मूळापरगळकक्षेषु इत्यत्र क्रमदीपिकामते, कक्षे ककुदि दोर्मूले इति दक्षिणकक्षे वामे दोर्मूल इत्युक्तः पक्षविशेषः । एवं सृष्टिन्यासः । एतद्विपरीतस्थानक्रमेण मन्त्रप्रतिलोमेन च संहारन्यासः । पुनर्बाहुमूलादिस्थानमारभ्य हलिभरनुलोमन्यासरीत्या न्यासं कृत्वा, पश्चात्, स्वरैः शीर्षादिस्थानेषु न्यसेत् । एवं स्थितिन्यासः । तत्र सृष्टिन्यासे शुद्धमातृकया न्यसेत् । संहारे तु सबिन्दुकमातृकया । स्थितिन्यासे तु विसर्जनीयान्तैर्वर्णैः न्यसेदिति विशेषः ॥

अथ गुरुमुखात् सकलमन्त्रोपदेशविधिं वक्ष्ये—

तत्र प्रथममुपदेशार्थं मासनियमं चिदम्बरकल्पोक्तप्रकारेण वक्ष्ये । तत्र मित्रादिशोधनात् क्वचित् क्वचित् मन्त्रप्रभाववशात् [3] क्वचित् गुरुगौरवाच्च मन्त्रः सिद्ध्यत्येव । तथापि मासशोधना अवश्यं कर्तव्या । तदुक्तं चिदम्बरकल्पे —

पञ्चाक्षरस्य मन्त्रस्य नैव सिद्धारिशोधनम् ।

---

१ काननवृत्तद्वयक्षिश्रुतिनोगण्डोष्ठदन्तमूर्धास्ये ।

२ न्यसेदथाक्षरान् क्रमशः । इति ख, ग, घ, ङ पाठः ।

३ वशात् मास्तु । तथापि इति ख च—पाठः । कचित् एव इति न विद्यते ।

तथाप्यवश्यं कर्तव्यं मासशोधनमादरात् ॥ इति ॥

अतो माસनियम उच्यते—

असिद्धिर्भूमिसंपत्तिः मरणं बन्धुनाशनम् ।
शुभप्राप्तिः स्थाननाशः संपत्ती रत्नसंपदः ॥

ज्ञानप्राप्तिर्ज्ञाननाशो ह्यमोघार्थो वशीकृतिः ।
एवं चैत्रादिमासानां फलान्याहुर्मनीषिणः ॥

सोमवारे शुक्रवारे स्वसंपत् क्षेमसाधके ।
मैत्रे परममैत्रे वा मन्त्रदीक्षां समाचरेत् ॥ इति ॥

एवमुक्तेषु मासेषु उपदेशं कुर्यात् ।

मेषे प्रतापवान् भूयात् वृषभे तु सुखी भवेत् ।
मिथुने रिक्तहस्तः स्यात् कर्कटे दुःखवान्भवेत् ॥

सिंहे सर्वसमृद्धिः स्यात् कन्यायां तत्क्षणाल्लभेत् ।
तुलायां लाभवान् भूयात् वृश्चिके विकटं भवेत् ॥

धनुर्मासे तु सौभाग्यं मकरे धनवान् भवेत् ।
कुम्भे स्यादायुषो वृद्धिर्मीने स्याद्राजवल्लभः ।
इत्यादिमासानालोच्य वदेन्मन्त्रं विचक्षणः ॥

अथोपदेशार्थं तिथिवारनक्षत्रादिनियमो लिख्यते—

अश्विनी रोहिणी चार्द्रा तथा पुष्योत्तरात्रयम् ।
हस्तचित्रास्वातिमैत्रं* विशाखे च धनिष्ठिका ॥

पुनर्वसू रेवती च प्रशस्ता मन्त्रसंग्रहे ।
पूर्णिमा पञ्चमी चैव द्वितीया सप्तमी तथा ॥

---

* मैत्रमित्यनूराधा ।

त्रयोदशी च दशमी प्रशस्ता मन्त्रसंग्रहे ।
तृतीया विहिता नित्यं षष्ठी सर्वत्र गर्हिता ॥

रवौ गुरौ बुधे शुक्रे कर्तव्यं परमेश्वरि ।
मन्त्रस्यारंभणं मेषे धनधान्यप्रदं भवेत् ॥

वृषे मरणमाप्नोति मिथुनेऽपत्यनाशनम् ।
कटके सर्वसिद्धिः स्यात् सिंहे मेधाविनाशनम् ॥

कन्या लक्ष्मीप्रदा नित्यं तुलायां सर्वसिद्धयः ।
वृश्चिके सर्वसिद्धिः स्यात् धनुर्ज्ञानविनाशनम् ॥

मकरः पुत्रदः प्रोक्तः कुम्भो धनसमृद्धिदः ।
मीनो दुःखप्रदो नित्यं एवं राशिफलं प्रिये ॥

योगश्च प्रीतिरायुष्मान् सौभाग्यः शोभनः शुभः ।
सुकर्मा च धृतिर्वृद्धिः ध्रुवस्सिद्धश्च हर्षणः ।
वरीयांश्च शिवस्सिद्धः ब्राह्मश्चैन्द्रश्च षोडश ॥ इति ॥

शुक्लपक्षे प्रकुर्वीत कृष्णे वा देशिकोत्तमः ।
शुक्ले सर्वसमृद्धिः स्यात् कृष्णे मध्यमतो भवेत् ॥

द्वादश्यामपि कर्तव्यं त्रयोदश्यामथापि वा ।
महाभ(ळ)यचतुर्दश्याम्रुपरागेषु च द्वयोः ॥

ददन्मन्त्रं भवेन्मन्त्री दरिद्रस्सप्तजन्मसु ।
धर्मदः प्रातःकालः स्यात् सङ्गवो राज्यदः स्मृतः ॥
मध्याह्ने सर्वसिद्धिः स्यात् सायाह्ने मध्यमो भवेत् ॥

रजनी मन्त्रदाने तु निषिद्धा देशिकोत्तमैः ।
सूर्यग्रहणकाले तु नान्यदन्वेषितं भवेत् ॥

मलमासं वर्जयेदिति च ॥

अथ मन्त्रदेवताप्रकाशिकोक्तप्रकारेण मासादिनियमो लिख्यते — तत्र मासफलानि ज्ञात्वा शुभकाले दीक्षा कर्तव्या ॥

असिद्धिर्भूमिसंपत्तिः मरणं बन्धुनाशनम् ।
आयुर्वृद्धिः प्रजानाशः संपदोऽक्षय्यसंपदः ॥

शुभप्राप्तिः स्थाननाशो ह्यमोघार्थो वशीकृतिः ।
एवं चैत्रादिमासानां फलान्याहुर्मनीषिणः ॥

तत्रादौ गुरुः मन्त्राणां शिष्यस्य च नक्षत्रादिकोष्ठानां फलं परीक्ष्य दीक्षां कुर्यात् । तत्र नक्षत्रपरीक्षा —

राज्यलाभोपकाराय प्रारभ्यारी खरः कुरून् ।
गोपालककुटिप्रायात् फुल्लावेत्युदिता लिपिः ।
नक्षत्रेषु क्रमाद्योज्यौ स्वरान्त्यौ रेवतीयुतौ ॥

अस्यार्थः — रेवतीनक्षत्रयुक्तौ भवतः । रा इति द्वयम् । ज्य इति एकम् । ला इति त्रीणि । भो इति चतुष्टयम् । प इत्येकम् । का इत्येकम् । रा इति द्वयम् । य इत्येकम् । प्रा इति द्वयम् । र इति द्वयम् । भ्या इत्येकम् । री इति द्वयम् । ख इति द्वयम् । र इति द्वयम् । कु इत्येकम् । रू इति द्वयम् । गो इति त्रीणि । पा इत्येकम् । ल इति त्रीणि । क इत्येकम् । कु इत्येकम् । टि इत्येकम् । प्रा इति द्वयम् । या इत्येकम् । फु इति द्वयम् । ला इति त्रीणि । व इति चतुष्टयम् ॥

एतदुक्तं भवति—अ आ अश्विनी । इ भरणी । ई उ ऊ कृत्तिका । ऋ ॠ ऌ ॡ रोहिणी । ए मृगशीर्षम् । ऐ आर्द्रा । ओ औ पुनर्वसू । क पुष्यम् । ख ग आश्लेषा । घ ङ मघा । च पूर्वफल्गुनी । छ ज उत्तरफल्गुनी । झ ञ हस्तः । ट ठ चित्रा । ड स्वाती । ढ ण विशाखे । त थ द अनूराधा । ध ज्येष्ठा । न प फ मूलम् । ब पूर्वाषाढा ।

भ उत्तराषाढा । म श्रवणम् । य र धनिष्ठा । ल शततारा । व श पूर्वाभाद्रपदा । ष स ह उत्तराभाद्रपदा । ळ क्ष अं अः रेवती ॥ इत्येवमक्षरेषु नक्षत्रान् ज्ञात्वा मन्त्राद्यक्षरेण आत्मनामाद्यक्षरानुकूल्यं ज्ञातव्यम् ॥

जन्म संपद्विपत् क्षेमः प्रत्यरं साधको वधः ।
मैत्रं परममैत्रं च नवैतानि पुनः पुनः ॥

इति नक्षत्रयुक्तानि ज्ञातव्यानि ॥

अथ राशिपरीक्षा —

वेलागरुखरः शोणः शर्मणो वेति भेदतः ।
लिप्यर्णा राशिषु ज्ञेया षष्ठे शादींश्च योजयेत् ॥

अस्यार्थः — वे इति चतुष्टयम् । ला इति त्रीणि । ग इति त्रीणि । रु इति द्वयम् । ख इति द्वयम् । र इति द्वयम् । शो इति पञ्च । ण इति पञ्च । श इति पञ्च । म इति पञ्च । णो इति पञ्च । व इति चत्वारि । एतदुक्तं भवति । अ आ इ ई मेषः । उ ऊ ऋ वृषभः । ॠ ऌ ॡ इति मिथुनम् । ए ऐ कर्कटकम् । ओ औ सिंहः । अं अः श ष स ह ळ क्षाः कन्या । कवर्गः तुला । चवर्गो वृश्चिकः । टवर्गो धनुः । तवर्गो मकरः । पवर्गः कुम्भः । य र ल वा मीनः ॥

एकपञ्चनवबन्धुरक्षकाः द्वे च षष्ठदशमास्तु सेवकाः ।
त्रीणि रुद्रगणसप्तपोषकाः द्वादशाष्टचतुरस्तु घातकाः ॥

जपेन बन्धुः सिद्धः स्यात् सेवया च स सेवकः ।
मन्त्रस्य पोषको ज्ञानात् *घातयेत्तु स घातकः ॥

एवमक्षरेषु राशीन् ज्ञात्वा फलानि ज्ञातव्यानि ।

अथ भूतकूटपरीक्षा — अ इ उ ऋ ऌ पञ्चवर्णाः क्रमेण वाय्वग्निभू-

* घातयेत इति ख, ग, ङ, च, छ, पाठः ।

जलाकाशात्मकाः । तथा आ ई ऊ ॠ ॡ पञ्चवर्णाः, तथा ए ऐ ओ औ अं इति पञ्चवर्णाः, तथा क च ट त प पञ्च वर्णाः, य र ल व श पञ्च वर्णाश्च, ष क्ष ळ स ह पञ्च वर्णाश्च, वाय्वग्निभूजलाकाशात्मका भवन्ति। तदुक्तम् —

ह्रस्वाः पञ्च परेथ सन्धिविकृताः पञ्चाथ विन्द्वन्तिकाः
काद्याः प्राणहुताशभूकखमयाः याद्याश्शवर्णान्तिकाः ।
हान्ताः पक्षळसाः क्रमेण कथिता भूतात्मकास्ते पृथक्
तैस्तैः पञ्चभिरेव वर्णदशकैः स्युः स्तंभनाद्याः क्रियाः ॥ इति ॥

[1]पार्थिवे वारुणं मित्रं आग्नेयस्यापि मारुतम् ।
माहेन्द्रवरुणानां च शत्रुत्वे मारुतः स्थितः ॥

---

१ इति । इत्यनन्तरं ख, मातृकायामयमधिकः पाठः —

दशभिर्दशभिरमीभिः नमोन्तकैर्द्वन्द्वशश्च बिन्दुयुतैः ।
योनेर्मध्ये कोणत्रितये मध्ये च संयजेन्मन्त्री ॥
स्तम्भनाद्यमथ पार्थिवैरपामक्षरैश्च परिवर्षणादिकम् ।
दाहशोषणसशून्यतादिकान्वह्निवायुवियदुत्थितैश्चरेत् ॥ इति ॥

च, मातृकायां एतच्छ्लोकद्वयानन्तरमयमधिकः पाठः । एतदुक्तं भवति — अकारादिह्रस्वस्वराक्षराणि पञ्च क्रमेण प्राणहुताशभूकखमयाः वाय्वग्निभूजलाकाशात्मकाः भवन्ति । आकारादिदीर्घस्वराः पञ्च क्रमेण वाय्वग्निभूजलाकाशात्मका भवन्ति । तथा ए ऐ ओ औ अं इति पञ्च सन्ध्यक्षराणि क्रमेण वाय्वग्निभूजलाकाशात्मकाः । तथा कवर्गपञ्चवर्णाः क्रमेण, तथा चवर्गपञ्चवर्णाः क्रमेण, तथा टवर्ग तवर्ग पवर्ग यादिशान्त पञ्चवर्णाः क्रमेण, तथा हान्ताष्षक्षळसाः इति व्युत्क्रमेण षक्षळसहाः (ह) इति पञ्च वर्णाः क्रमेण प्राणहुताशभूकखमया भवन्ति । एवं स्थिते, वाय्वादिपञ्चभूतेषु एकैकस्मिन् भूते दश दश मातृकावर्णा भवन्ति ॥ एवं स्थिते पार्थिववर्णदशकं क्रमेणैकैकं पृथक् सबिन्दुकं नमोन्तं च कृत्वा, पुनस्ताम्रादिपट्टे त्रिकोणं विलिख्य तस्य मध्ये च कोणत्रितये च पुनरपि मध्ये च

आग्नेये वारुणं शत्रुः वारुणे तैजसं तथा ।
एतेषामेव सर्वेषां सामान्यत्वेन नाभसम् ।
मातृवन्मंत्रविद्यानां अविरोधे सदा स्थितम् ॥

एवं पञ्चभूतबलं ज्ञेयम् ॥

अथ सिद्धसाध्य[1]सुसिद्धारिपरीक्षार्थं कोष्ठोद्धारक्रमः कथ्यते —

तत्र चतुष्पदयुक्तकोष्ठं कृत्वा तत्र कोष्ठचतुष्टयाद्यपदेषु चतुर्षु प्रादक्षिण्यक्रमेण अकारादिस्वरचतुष्टयं विलिखेत् । अवशिष्टानपि तथा । एवमुक्तप्रदक्षिणक्रमेण ककारादितकारान्तान् षोडशवर्णान्विलिख्य पुनस्तेनैव क्रमेण थकारादिसकारान्तांश्च षोडशवर्णान् विलिख्य ह ळ क्ष इत्यवशिष्ट-वर्णत्रयं प्रोक्तक्रमेण प्रथम द्वितीय तृतीय कोष्ठेष्वाद्यपदेषु विलिखेत् । तत्र कोष्ठचतुष्टये स्वनामाद्यवर्णो यत्र कोष्ठे तिष्ठति तत्कोष्ठमादिं कृत्वा प्रदक्षिण-क्रमेण सिद्धसाध्यसुसिद्धारीन् कल्पयेत् । तत्रापि स्वनामवर्णयुक्तकोष्ठान्तर्गत-चतुष्पदेष्वपि तथाविधं पदमादिं कृत्वा सिद्धपूर्वकसिद्धादिचतुष्टयं कल्पयेत् । तथा चतुर्थकोष्ठचतुष्पदेष्वपि तथाविधपदमादिं कृत्वा अरिपूर्वकसिद्धादिचतुष्टयं कल्पयेत् । एतेषु षोडशस्थानेषु मध्ये मन्त्राद्यवर्णः यत्कोष्ठपदे तिष्ठति तत्कोष्ठपदनामाङ्कितः स मन्त्रो भवति । एतत्कोष्ठगतफलमुच्यते —

---

क्रमेण पार्थिववर्णद्वन्द्वेन गन्धपङ्कसिक्तेन करवीरपुष्पेण बहुवारं कार्यगौरवानुसारेण समर्पयेत् ॥ तथा कृते, सेनादिसर्वस्तम्भनफलं भवति ॥ एवमेवापामक्षरैश्च कृते सर्वत्र वृष्टिफलं भवति ॥ एवमेव वह्निवायुवियदक्षरैश्च कृते सर्वदा सर्वशोषणसर्व-शून्यताफलं भवति ॥ इति ॥ अथ भूतकोष्ठगतमन्त्राद्यवर्णसाधकनामाद्यकवर्णयोः फलमुच्यते ॥ (इति) ॥

१ सर्वास्वपि मातृकासु सुसिद्ध, स्वसिद्ध, इत्युभयथापि पाठो दृश्यते । अथापि सुसिद्ध इत्येव सङ्गतार्थो ज्ञेयः ।

सिद्धस्सिद्ध्यति कालेन साद्ध्यस्सिद्ध्यति वा न वा ।
सुसिद्धस्तत्क्षणादेव अरिर्मूलं निकृन्तति ॥

सिद्धसिद्धो यथोक्तेन द्विगुणात् सिद्धसाध्यकः ।
सिद्धसुसिद्धोर्धजपात् सिद्धारिर्हन्ति गोत्रजान् ॥

साध्यसिद्धो द्विगुणतः साध्यसाध्यो निरर्थकः ।
साध्यसुसिद्धोर्धजपात् साध्यारिर्हन्ति गोत्रजान् ॥

सुसिद्धसिद्धोर्धजपात् तत्साध्यस्साधिकाज्जपात् ।
*सुसिद्धसिद्धो ग्रहणात् तदरिर्ज्ञातिहा भवेत् ॥

अरिसिद्धस्सुतं हन्यात् अरिसाध्यस्तु कन्यकाम् ।
पत्नीमरिसुसिद्धस्तु शत्रुशत्रुरथात्महा ॥

दुष्टर्क्षराशिभूतारिवर्णप्रचुरमन्त्रकम् ।
सम्यक् परीक्षितं यत्नात् वर्जयेन्मतिमान्नरः ॥

आदौ सिद्धस्तथान्ते च सर्वसिद्धिफलप्रदः ।
आदावन्ते भवेत्साध्यः कृच्छ्रसाध्य उदाहृतः ॥

आदावन्ते सुसिद्धस्तु क्षिप्रमेव प्रसिद्ध्यति ।
आदावन्ते रिपुर्यस्तु साधकं संनिकृन्तयेत् ॥

आदौ सिद्धोन्त्यसाध्यो यः द्विगुणेन स सिद्ध्यति ।
आदौ साद्ध्यस्सुसिद्धोन्ते प्रोक्तमार्गेण सिद्ध्यति ॥

सुसिद्धादिस्तु साद्ध्यान्तश्चतुर्गुणमपेक्षते ।
आद्यन्तयोर्यदा सिद्धः मध्ये साध्यः प्रजायते ॥

आद्यन्तयोर्यदा साध्यः मध्ये सिद्धः प्रजायते ।
तावुभौ साध्यसिद्धौ हि जपाधिक्येन सिध्यतः ॥

---

* ग्रहणात् तत्सुसिद्धस्तु इति ख, ज पाठः ।

आदौ सिद्धेन संयुक्तः सुसिद्धेन तथान्ततः ।
श्रवणादेव सिद्ध्येत साधकस्य न संशयः ॥

सिद्धान्तरितसाध्यस्तु सुसिद्धान्तरितोऽथ वा ।
शीघ्रं सिध्यति मन्त्रो वै यथोक्तं मन्त्रवित्तमैः ॥

सिद्धेनान्तरितः शत्रुः सुसिद्धेनापि चेद्भवेत् ।
नासौ रिपुर्भवेन्मन्त्रः किन्तु कृच्छ्रेण सिध्यति ॥

साध्येनान्तरितः सिद्धः सुसिद्धोपि तथा यदि ।
सिध्यत्यतीव कष्टेन साधकस्य न चान्यथा ॥

रिपुणान्तरितं सिद्धं सुसिद्धं च तथा त्यजेत् ।
रिपुणान्तरितो मन्त्रः नैव ग्राह्यः कदाचन ॥

[1] नामाद्यक्षरमारभ्य यावन्मन्त्रादिदर्शनम् ।
त्रिधा कृत्वा स्वरैर्हृत्वा तदन्यद्विपरीतकम् ॥

कृत्वाऽधिको ऋणी ज्ञेयः ऋणी चेन्मन्त्र उत्तमः ।
स्वयं ऋणी चेत्तन्मन्त्रं त्यजेत्पूर्वं ऋणी यतः ॥

अस्यार्थः — त्रिभिर्गुणित्वा सप्तभिर्हरेत् । तद्विपरीते सप्तभिर्गुणित्वा त्रिभिर्हरेदित्यर्थः ॥ तत्र शर्मप्रसिद्धनाम्नोर्मध्ये किं वा ग्राह्यमित्याकांक्षायां कल्पान्तरे प्रोक्तम् —

प्रसिद्धनाम गृह्णीयात् सुप्तो येन तु [2] जाग्रति ॥ इति ॥

तत्र सिद्धादिशोधनविषये [3] अपवाद उच्यते —

प्रणवः त्र्यक्षरी माया व्योमव्यापी षडक्षरः ।

---

१ अथ मन्त्रोपासकयोः ऋणधनशोधनप्रकार उच्यते ।

२ जागृयात् इति ख-घ पाठः ।

३ तत्र अपवाद इति ख-ज पाठः ।

प्रासादो बहुरूपी च सप्त साधारणाः स्मृताः ॥

सौरमन्त्राश्च येपि स्युः वैष्णवा नारसिंहकाः ।
सिद्धसाध्यसुसिद्धारिविचारपरिवर्जिताः ॥

नृसिंहार्कवराहाणां प्रासादप्रणवस्य च ।
सपिण्डाक्षरमन्त्राणां सिद्धादीन् नैव शोधयेत् ॥

एकाक्षरस्य मन्त्रस्य मालामन्त्रस्य पार्वति ।
वैदिकस्य च मन्त्रस्य सिद्धादीन्नैव शोधयेत् ॥

हंसस्याष्टाक्षरस्यापि तथा पञ्चाक्षरस्य च ।
स्वप्नलब्धस्य मन्त्रस्य स्त्रिया दत्तस्य चैव हि ॥

नपुंसकस्य मन्त्रस्य सिद्धारीन्नैव शोधयेत् ।
एकद्वित्र्यादिबीजस्य सिद्धारीन्नैव शोधयेत् ॥

अकारादिक्षकारान्तबिन्दुमन्मातृकाक्षरैः ।
अनुलोमविलोमस्थैः क्लृप्तया वर्णमालया ॥

प्रत्येकवर्णसंयुक्ता जप्याः स्युः सर्वसिद्धिदाः ।
वैरिमन्त्रा अपि नृणामन्ये मन्त्रास्तु किं पुनः ।
मन्त्रादिषु च सर्वेषु हृल्लेखां कामबीजकम् ॥

श्रीबीजं वा विनिक्षिप्य जपेन्मन्त्रं विशुद्धये ।
तारसंपुटितो वाथ दुष्टमन्त्रोपि सिध्यति ॥

*स्त्रीपुंनपुंसकत्वेन त्रिधा स्युः मन्त्रजातयः ।
स्त्रीमन्त्रा वह्निजायान्ताः नमोन्ताश्च नपुंसकाः ॥

शेषाः पुमांसस्ते शस्ताः वश्योच्चाटनकेषु च ।
क्षुद्रक्रियायां विध्वंसे स्त्रियोन्येषु नपुंसकाः ॥

---

* अथ स्त्रीपुंनपुंसकादिमन्त्राः तेषां फलानि च कथ्यन्ते ।

तारान्त्याग्निवियत्प्रायो मन्त्र आग्नेय इष्यते ।
शिष्टस्सौम्यः प्रशस्तौ तु कर्मणोः क्रूरसौम्ययोः ॥

आग्नेयमन्त्रः सौम्यः स्यात्प्रायशोन्ते नमोन्वितः ।
सौम्यमन्त्रस्तथा ज्ञेयः फट्कारेणान्वितोऽन्ततः ॥

स्वापकालो वामवहो जागरो दक्षिणावहः ।
आग्नेयस्य मनोस्सौम्य मन्त्रस्यैतद्विपर्ययः ॥

प्रबोधकालं जानीयादुभयोरुभयोर्वहः ।
स्वापकाले तु मन्त्रस्य जपस्त्वर्धफलप्रदः ॥

वामदक्षिणोभयनाडिकागतश्वासमार्गेणैतत् प्रेक्षणीयम् ॥

[1]वश्याकर्षणसन्तापे होमे स्वाहां प्रयोजयेत् ।
क्रोधोपशमने शान्तौ पूजने च नमो वदेत् ॥

वौषट्संमोहनोद्दीपपुष्टिमृत्युञ्जयेषु च ।
ओंकारं प्रीतिनाशे च छेदने मारणे तथा ॥

उच्चाटने च विद्वेषे तथाधि(धी)विकृतौ च फट् ।
विघ्नग्रहविनाशे च हुंफट्कारं प्रयोजयेत् ॥

मन्त्रोद्दीपनकार्ये च लाभालाभे वषट्स्मृतः ।
एवं कर्मानुरूपेण तत्तन्मन्त्रं प्रयोजयेत् ॥

[2]ग्रथितादिप्रभेदश्च मन्त्राणां वक्ष्यतेऽधुना ।
ग्रथितं संपुटं ग्रस्तं समस्तं च विदर्भितम् ॥

तथा चाक्रान्तमाद्यन्तं गर्भस्थं सर्वतो वृतम् ।
तथा युक्तिविदर्भं च विदर्भग्रथितं तथा ॥

---

१ अथ प्रयोगार्थाः पल्लवाः उच्यन्ते ।

२ अथ प्रयोगार्थाः ग्रथितादिभेदाः निरूप्यन्ते ।

इत्येकादशधा मन्त्राः प्रयुक्ताः कार्यसिद्धिदाः ।
साध्यनामार्णमेकैकं मन्त्रार्णे संप्रयोजितम् ॥

ग्रथितं तत्समाख्यातं वश्याकृष्टिकरं परम् ।
मन्त्रमादौ वदेत्सर्वं साध्यसंज्ञामनन्तरम् ।
विपरीतं पुनश्चान्ते मन्त्रं तत् संपुटं स्मृतम् ॥

शान्तिपुष्टिकरं ज्ञेयं त्रैलोक्यैश्वर्यदायकम् ।
अर्धमर्धं तथाद्यन्ते मन्त्रं कुर्याद्विचक्षणः ॥

मध्ये चास्य भवेत्साध्यं ग्रस्तमित्यभिधीयते ।
अभिचारेषु सर्वेषु योजयेत् मारणेषु च ॥

अभिधानं वदेत्पूर्वं पश्चान्मन्त्रं तथा वदेत् ।
एतत्समस्तमित्युक्तं शत्रूच्चाटनकारकम् ॥

द्वौ द्वौ मन्त्राक्षरौ यत्र एकैकं साध्यवर्णकम् ।
विदर्भितं तु तत्प्रोक्तं दुष्टघ्नं वश्यलक्षणम् ॥

मन्त्रेणान्तरितं साध्यं समन्तात् तिष्ठते यदि ।
आक्रान्तं तद्विजानीयात् सर्वसर्वार्थसिद्धिदम् ॥

क्षोभस्तम्भसमावेशवश्योच्चाटनकर्मसु ।
सकृत्पूर्वं वदेन्मन्त्रं अन्ते चैव तथा पुनः ॥

मध्ये चास्य भवेत्साध्यं आद्यन्तमिति तद्विदुः ।
अन्योन्यप्रीतियुक्तानां विद्वेषणकरं परम् ॥

आदौ चान्ते तथा मन्त्रं द्विवारं संप्रयोजयेत् ।
साध्यनाम सकृन्मध्ये गर्भस्थं तु तदुच्यते ॥

मारणोच्चाटनं वश्यं प्रयुक्तं कारयेन्नृणाम् ।

हेतिनौसैन्यधीगर्भस्तंभनं च गतेस्तथा ॥

त्रिधा मन्त्रं वदेत्सर्वं तथैवान्ते पुनस्त्रिधा ।
सकृत्साध्यं वदेन्मध्ये तद्विद्यात्सर्वतोवृतम् ।
सर्वोपसर्गशमनं महामृत्युनिवारणम् ॥

सर्वसौभाग्यजनकं मृतानाममृतप्रदम् ।
आदौ मन्त्रं ततो नाम पुनर्मन्त्रं समालिखेत् ॥

एवमेव त्रिधा कृत्वा भवेत् युक्तिविदर्भितम् ।
सर्वव्याधिहरं प्रोक्तं भूतापस्मारमर्दनम् ॥

एकैकं साध्यवर्णं तु कृत्वा मन्त्रविदर्भितम् ।
पूर्ववत् ग्रथितं चान्यत्तस्याद्यन्ते प्रकल्पयेत् ॥

विदर्भग्रथितं नाम मन्त्रलक्षणमुत्तमम् ।
सर्वकर्मकरं प्रोक्तं सर्वैश्वर्यफलप्रदम् ॥

एवमेते प्रयोगाः स्युः सिद्धमन्त्रस्य सिद्धिदाः ।

एवमुक्तेषु शुभेषु मासेषु उपदेशं कुर्यात् ॥

तत्र प्रथमं प्राक् पञ्चमषष्ठयोः पटलयोरुक्तेन मार्गेण वा दीक्षाहोमकलशादीन्कृत्वा तत्र तत्र मन्त्रोक्तिसमये संकोचेन केवलकलशमात्रमुक्तेन प्रकारेण वा, अस्मिन्नेव पटले उपरि वक्ष्यमाणमातृकावर्णौषधीनां मध्ये तत्तत्साध्यमन्त्राणां ये वर्णास्तेषामेवौषधानि गृहीत्वा क्वाथयित्वा वा, केवलं निष्पीड्याद्रींकृत्य तेन जलेन वा, उपरि अष्टमे पटले स्वयंवराभिधाने वक्ष्यमाणदशमूलपुष्परसैर्वा, अश्वत्थवटौदुम्बरप्लक्षाणां त्वचः क्वाथयित्वा तैर्जलैर्वा, शुद्धजलैरेव वा कलशमापूर्य, उपरि सप्तविंशतिपटले प्रसंगाद्वक्ष्यमाणे धन्वन्तरिविधाने वक्ष्यमाणकलशसामान्यपूजया क्रमेण तत्तन्मन्त्रविधानोक्तविशेषपूजाक्रमेण च संपूज्य गुरुः शिष्यमभिषिच्य मन्त्रमुपदिशेत् ॥

अथवा चिदम्बरकल्पोक्तप्रकारेण दीक्षां कुर्यात्। तत्प्रकार उच्यते—

संपूज्य देवं पूजान्ते शिष्यमाहूय सद्गुरुः।
स्वर्णपुष्पैरर्चयित्वा देवं तत्र प्रणामयेत्॥

शंखतोयेन संप्रोक्ष्य पुरतस्थापयेत्तु तम्।
स्वयं परशिवो भूत्वा निस्सन्दिग्धमना गुरुः॥

निजहस्तेन शिष्यस्य समन्त्रं मूर्ध्नि संस्पृशेत्।
स्पर्शदीक्षेति सा प्रोक्ता मलत्रयविमोचनी॥ इति॥

अथवा शारदातिलकोक्तप्रकारेण दीक्षां कुर्यात्॥

अथ वर्णात्मिकां वक्ष्ये दीक्षामागमचोदिताम्।
पुंप्रकृत्यात्मका वर्णाः शरीरमपि तादृशम्॥

यतस्तस्मात्तनौ न्यस्येद्वर्णान् शिष्यस्य देशिकः।
तत्तत्स्थानयुतान्वर्णान् प्रतिलोमेन संहरेत्॥

स्वज्ञाने देवताभावविधानाद्देशिकोत्तमः।
तदा विलीनतत्वोयं शिष्यो दीप्यत्तनुर्भवेत्॥

परमात्मनि संयोज्य तच्चैतन्यं गुरुर्धिया।
पश्चादुत्पाद्य तान्वर्णान् न्यसेच्छिष्यतनौ पुनः॥

सृष्टिक्रमेण विधिवत् चैतन्यं च नियोजयेत्।
जायते देवताभावः परानन्दमयः शिशोः॥

निवृत्तिर्जानुपर्यन्तं तलादारभ्य संस्थिता।
जानुतो नाभिपर्यन्तं प्रतिष्ठा व्याप्य तिष्ठति॥

नाभेः कण्ठावधि व्याप्ता विद्या शान्तिरतः परम्।
कण्ठाल्ललाटपर्यन्तं व्याप्ता तस्मात् शिरोवधि॥

शान्त्यतीतकला ज्ञेया कलाव्याप्तिरितीरिता ।
संहारक्रमयोगेन स्थानात्स्थानान्तरे गुरुः ॥

संयोज्य वेधयेद्विद्वान् *ज्ञया तावत् शिवावधि ।
इयं प्रोक्ता कलादीक्षा दिव्यभावप्रदायिनी ॥

ततो वैधमयीं वक्ष्ये दीक्षां संसारमोचिनीम् ।
ध्यायेत् शिष्यतनोर्मध्ये मूलाधारे चतुर्दळे ॥

त्रिकोणमध्ये विमले तेजस्त्रयविजृंभिते ।
वलित्रितयसंयुक्तां तटित्कोटिसमप्रभाम् ॥

शिवशक्तिमयीं देवीं चेतनां मन्त्रविग्रहाम् ।
सूक्ष्मात् सूक्ष्मतरां शक्तिं भित्वा षट्चक्रमञ्जसा ॥

गच्छन्तीं मध्यमार्गेण दिव्यां परशिवावधि ।
वादिसान्तान्दळस्थार्णान् संहरेत्कमलासने ॥

तं षट्पत्रमये पद्मे बादिलान्ताक्षरान्विते ।
स्वाधिष्ठाने समायोज्य वेधयेदाज्ञया गुरुः ॥

तान्वर्णान्संहरेद्विष्णौ तं पुनर्नाभिपङ्कजे ।
दशपत्रे डादिफान्तवर्णाढ्ये योजयेद्गुरुः ॥

तान्वर्णान्योजयेद्रुद्रे तं पुनर्हृदयांबुजे ।
कादिठान्तार्कपत्राढ्ये योजयित्वेश्वरे गुरुः ॥

तान्वर्णान्संहरेत्तस्मिन् तं भूयः कण्ठपङ्कजे ।
स्वराढ्ये षोडशदले योजयित्वा स्वरान्पुनः ।
सदाशिवे तान्संहृत्य तं पुनर्भ्रूसरोरुहे ॥

---

* आज्ञया ताः शिवावधि । इति ख-ज पाठः ।

द्विपत्रे हक्षलसिते योजयित्वा तयोर्गुरुः ।
तदर्णौ संहरेद्बिन्दौ कलायां तान्नियोजयेत् ॥

तां नादे तं तथा नादं नादान्ते योजयेद्गुरुः ।
तद्व्यापिन्यां समायोज्य विष्णुवक्त्रान्तरे च ताम् ॥

तत्पुनर्गुरुवक्त्रे तु योजयेद्देशिकोत्तमः ।
सहैवमात्मना शक्तिं वेधयेत्परमे शिवे ॥

गुर्वाज्ञया छिन्नपाशः तदा शिष्यः पतेद्भुवि ।
संजातदिव्यबोधोऽसौ सर्वं वदति तत्क्षणात् ॥

साक्षात् शिवो भवत्येष नात्र कार्या विचारणा ।
एषा वेधमयी दीक्षा प्रोक्ता संवित्प्रदायिनी ।
क्रमाच्चतुर्विधा दीक्षा तन्त्रेऽस्मिन् सम्यगीरिता ॥

कल्पान्तरे प्रोक्तम्—

गुरोरालोकमात्रेण भाषणात्स्पर्शनादपि ।
सद्यस्सञ्जायते ज्ञानं सा दीक्षा शाम्भवी स्मृता ॥

चित्तं तत्वे समाधाय परतत्वोपबृंहितान् ।
उच्चरेत् संहतान्मन्त्रान् वाग्दीक्षेति निगद्यते ॥

निमील्य नयने ध्यात्वा परतत्वं प्रसन्नधीः ।
सम्यक् पश्येत् गुरुः शिष्यं दृग्दीक्षा सा भवेत्प्रिये ॥

तत्र दीक्षाकलशाभिषेकं स्तौति—

संक्षेपादिति कथिता हिताय दीक्षा जप्तॄणां प्रवरफलप्रदा चिराय ।
प्राप्यैनां जपविधिरादरेण कार्यो विद्वद्भिस्सहुतविधिर्निजेष्टसिध्यै ॥

प्रोक्तेनैवं कलशविधिनैकेन वाऽनेककुम्भैः
भक्त्या यो वा सुमतिरभिषिंचेन्नरो मन्त्रजापी ।

कामान्प्राप्नोत्ययमिह परत्रापि किं तत्र चित्रं
लोकैश्चिन्त्यो न खलु मणिमन्त्रौषधीनां प्रभावः ॥

अनेककुंभैरिति । पञ्चनवपञ्चविंशत्यादिसंख्याकैरित्यर्थः । पुनस्तस्मिन्नुपदेशसमये पूर्वं गुरुप्रणामविधिं वक्ष्ये --

दोर्भ्यां पदाभ्यामंसाभ्यां उरसा शिरसा दृशा ।
मनसा वचसा चेति प्रणामोऽष्टाङ्ग ईरितः ॥

बाहुभ्यां च सजानुभ्यां शिरसा वचसा धिया ।
पञ्चाङ्गकः प्रणामः स्यात्पूजासु प्रवराविमौ ॥

एवमष्टाङ्गनमस्कारं वा पञ्चाङ्गनमस्कारं वा कृत्वा गुरुमुपसर्प्य दक्षिणां च दद्यात् । तत्संख्याविशेष उच्यते —

वाससी च पुनरंगुळिभूषां होमकृत्सु मुखजप्रवरेषु ।
ईश्वरार्पणमिति प्रतिदत्वा वर्धितो द्विजमुखेरितवाग्भिः ॥

नत्वा पुनस्तनुभृते परमात्मने स्वं
द्रव्यार्धमेव गुरवे चतुरंशकं वा ।
दत्वा दशांशमथवापि च वित्तशाठ्यं
हित्वाऽर्पयेन्निजतनुं तदधीनचेताः ॥

एवं गुरुदक्षिणां कृत्वा दीक्षाकलशमभिषेचयित्वा पश्चाद्दक्षिणां दत्वा वोपदेशं गृह्णीयात् ॥

पुनरुपदेशविधिः तद्ग्रहणविधिश्चोच्यते — तत्र पूर्वं गुरुः शिष्यं षडङ्गादीन् कारयित्वा पश्चात् मन्त्रं शिष्याय उपदिश्यात् । तदुक्तं च रहस्योपनिषदि –

अङ्गहीनानि वाक्यानि गुरुर्नोपदिशेद्बुधः ॥ इति ॥

शांकरभाष्ये देवताधिकरणेऽप्युक्तम् –

यो ह वा [1]अविदितार्षेयछन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाध्यापयति वा स्थाणुं वर्च्छति गर्तं वाऽऽपद्यते। तस्मादेतानि मन्त्रे मन्त्रे विद्यादिति ॥

पुनरुभाभ्यां गुरुशिष्याभ्यां तस्मिन्समये कर्तव्यविशेषः अस्मिन्नेव कल्पे षष्ठपटलान्ते उक्तः—

विपुले परिधाय वाससी पुनराचम्य गुरुं प्रणम्य च ।
निकटे समुपासतो वदेत् अथ शिष्यस्य मनुं त्रिशो गुरुः ॥

गुरुणा समनुगृहीतं मन्त्रं सद्यो जपेत् शतावृत्त्या ।
गुरुदेवतामनूनां ऐक्यं संभावयन् धिया शिष्यः ॥

मन्त्रे मन्त्रगुरावपि मन्त्री मन्त्रस्य देवतायां च ।
त्रिषु विहितसततभक्तिः प्रेत्येह निजेप्सितं फलं लभते ॥

तत्र गुरुदेवतामनूनामैक्यमिति गुर्वादीनामात्मना ऐक्यं ध्यायन् इत्यर्थः ॥ तदुक्तं रामकल्पे—

देवतागुरुमन्त्राणां भावयेदैक्यमात्मना ।
एवं संचिन्तयन्मन्त्री मन्त्रं प्रतिदिनं जपेत् ॥ इति ॥

उपदेशानन्तरं तु गुरुः स्वशक्तिहानानवाप्तये सहस्रं जप्यादिति संप्रदायः। क्रमदीपिकायामप्येवमेवोक्त उपदेशविधिः—

परिविहितसिततरवसनद्वितयो वाचंयमः समाचान्तः ।
बहुशः प्रणम्य देशिकनामानं हरिमथोपसंगृह्य ॥
तद्दक्षिणत उपास्तामभिमुखमेकाग्रमानसः शिष्यः ।

न्यासैर्यथाविधि तमच्युतसाद्विधाय
गन्धाक्षतादिभिरलङ्कृतवर्ष्मणोऽस्य ।

---

१ अविज्ञात इति ङ पाठः ।

ऋष्यादियुक्तमथ मन्त्रवरं यथावत्
ब्रूयात्त्रिशो गुरुरनर्घ्यमवामकर्णे ॥

गुरुणा विधिवत्प्रसादितं तं मनुमष्टोर्ध्वशतं प्रजप्य भूयः ।
अभिवन्द्य ततः शृणोतु सम्यक् समयान्भक्तिभरावनम्रमूर्तिः ॥

दत्वा शिष्याय मनुं न्यस्त्वाऽथ गुरुः कृतात्मयजनविधिः ।
अष्टोत्तरं सहस्रं स्वशक्तिहानानवाप्तये जप्यात् ॥ इति ॥

मन्त्रदेवताप्रकाशिकायामुक्तम् — अथवा आचार्यः शिष्येण गुरुभक्ति-नमस्कारादि कारयित्वा, शिष्यस्य देहे प्रणव-मातृकाभुवनेश्वरी-न्यासपूर्वकं विघ्नेश-सरस्वतीमूलमन्त्रन्यासं कृत्वा, स्वहृदये स्थितां तेजोमयीं मन्त्रमूर्तिं दीपाद्दीपान्तरन्यायेनामृतनाडीमार्गतो निर्गमय्य शिष्यहृदयप्रविष्टां चिन्तयन् तन्मस्तकेऽमृतमयं स्वहस्तं निधाय तद्दक्षिणकर्णदेशे मन्त्रं त्रिवारमुच्चार्य आवयोरयं मन्त्रः सिद्धोऽस्त्वित्युपदिशेत् । तत्र स्त्रीशूद्रयोस्तु प्रणवं वैदिकमन्त्रं च विना मन्त्रान्तरमुपदिशेत् । तत्र प्रणवस्थाने चतुर्दशस्वराक्षरमौंकारं योजयेत् ॥ (इति)

अथ सर्वमन्त्राणां ग्रहणे गुरोरसंभवे कल्पान्तरोक्तप्रकारेण उपायविशेषो लिख्यते —

गुरोरभावे मन्त्राणां ग्रहणक्रम उच्यते ।
कृष्णपक्षे त्रयोदश्यां दक्षिणामूर्तिसन्निधौ ॥

लिखित्वा राजते पत्रे तालपत्रेऽथवा पुनः ।
मन्त्रन्तु स्थण्डिले स्थाप्य पूजयित्वा महेश्वरम् ॥

पायसादिनिवेद्यं च कृत्वा तं प्रणिपत्य च ।
शतकृत्वः पठेन्मन्त्रं दक्षिणामूर्तिसन्निधौ ॥

सर्वेषां चैव मन्त्राणां एवं ग्रहणमिष्यते ।

अथवा,

नद्यास्तु सिन्धुगामिन्यास्तीरे चोत्तरसंस्थिते ।
स्थण्डिलं कारयेत्तत्र शुचौ देशे शुभे दिने ॥

ताळपत्रे लिखित्वा तु मन्त्रं तत्र निधाय च ।
आवाह्य भास्करं तत्र यथाविधि सुपूजयेत् ॥

तत्सन्निधावष्टशतं पठेद्देशिकतो यथा ।
एवं गृह्णीत मतिमानपूर्वोयं विधिः स्मृतः ॥

इति (सद्गुरोरलाभे) मन्त्रग्रहणोपायः ॥

एवं यथोक्तलक्षणगुरोर्मुखात् श्रुत्वा मन्त्रं यथोक्ते स्थाने यथोक्ते काले यथोक्तेन नियमेन यथोक्तेन संकल्पप्रकारेण यथोक्तया मातृकया पुरश्चर्यां कुर्यात् । गुरुलक्षणं तु अस्मिन्नेव कल्पे त्रिपुराविधाने वक्ष्यति । सत्संप्रदायाद्गुरोर्लब्ध्वा मन्त्रमिमं जपन्निति विस्तरेण द्वात्रिंशत्पटले वक्ष्यति ॥ स्थाननियमं तु सुदर्शनविधाने वक्ष्यति—

समुद्रतीरेप्यथवाऽद्रिशृङ्गे
समुद्रगानां सरितां च पारे ।
जपेद्विविक्ते निज एव गेहे
विष्णोर्गृहे वा पुरुषो मनस्वी ॥ इति ॥

क्रमदीपिकायामप्युक्तम्—

अद्रेश्शृङ्गे नद्यास्तटे बिल्वमूले
ह्रदप्रे तोये गोकुले विष्णुगेहे ।
अश्वत्थाधस्तादम्बुधेश्चापि तीरे
स्थानेष्वेतेष्वासीन एकैकशस्तु ॥

प्रजपेदयुतचतुष्कं दशाक्षरं मनुवरं पृथक् क्रमशः ॥ इति ॥

शिवगीतायामुक्तम्—

बिल्ववृक्षं समाश्रित्य यो मन्त्रान् विविधान् जपेत् ।
एकेन दिवसेनैव तत्पुरश्चरणं भवेत् ॥

यस्तु बिल्ववने नित्यं कुटीं कृत्वा जपेन्नरः ।
सर्वे मन्त्राः प्रसिध्यन्ति जपमात्रेण केवलम् ॥

पर्वताग्रे नदीतीरे बिल्वमूले शिवालये ।
अग्निहोत्रे केशवस्य सन्निधौ च जपेत्तु यः ॥

नैवास्य विघ्नं कुर्वन्ति दानवा यक्षराक्षसाः ।
तं न स्पृशन्ति पापानि शिवसायुज्यमृच्छति ॥

मन्त्रदेवताप्रकाशिकायामपि पुरश्चरणविधिरुक्तः—

ग्रहणेऽर्कस्य चेन्दोर्वा शुचिः पूर्वमुपोषितः ।
नद्यां समुद्रगामिन्यां नाभिमात्रांभसि स्थितः ॥

ग्रहणादि तु मोक्षान्तं जपेन्मन्त्रं समाहितः ।
अनन्तरं दशांशं च क्रमात् होमं समाचरेत् ॥

तदन्ते मन्त्रसिद्ध्यर्थं गुरुं संपूज्य तोषयेत् ।
ततश्च मन्त्रसिद्धिस्स्याद्देवता च प्रसीदति ॥

अथवा देवतारूपं गुरुं भक्त्या प्रतोषयेत् ।
पुरश्चरणहीनोपि मन्त्रस्सिद्धो न संशयः ॥

एवं साधितमन्त्रस्तु काम्यकर्माण्यथाचरेत् ।
तत्तत्रोक्तमार्गेण काम्यसिद्धिस्ततो भवेत् ॥

कालनियमस्तु रामकल्पे उक्तः—

सर्वेषां श्रुतिमूलानां नित्यनैमित्तिकात्मनाम् ।

कर्मणामविरोधेषु कालेषु जप उच्यते ॥ इति ॥

शिवगीतायामप्युक्तम् –

ब्राह्मं मुहूर्तमारभ्य आमध्याह्नं जपेन्मनुम् ।
अत ऊर्ध्वं कृते जापे विनाशो भवति ध्रुवम् ॥

पुरश्चर्याविधावेनं सर्वकामफलेष्वपि ।
नित्यनैमित्तिके वापि तपश्चर्यासु वा पुनः ॥

सर्वदैव जपः कार्यो न दोषस्तत्र कश्चन ॥ इति ॥

नियमस्तु क्रमदीपिकायामुक्तः —

कृत्वा स्नानाद्यं कर्म देहार्चनान्तं
[1]सद्माश्रित्य प्रागीरितं मन्त्रिमुख्यः ।

देहार्चनं नाम बाह्यपूजावत् देहेपि मानसपूजा ।

शुक्लो मौनी सन्ब्रह्मचारी निराशीः
जप्यात् शान्तात्मा शुक्लपद्माक्षदामा ॥

कुर्वन् शुश्रूषां गोषु ताभ्यः प्रयच्छन्
ग्रासं भूतेषु प्रोद्वहंश्चानुकंपाम् ।

मन्त्राधिष्ठात्रीं देवतां वन्दमानः
दुर्गां दुर्बोधध्वान्तभानुं गुरुं च ॥

कुर्वन्नात्मीयं कर्म वर्णाश्रमस्थं
मन्त्रं जप्त्वाऽद्भिः स्नानकालेऽभिषिञ्चन् ॥

आचामन्पाथस्तत्वसंख्याभिजप्तं
भुञ्जानश्चान्नं सप्त जप्त्वाञ्जनाद्यम्[2] ॥ इति ॥

---

१ वर्त्मा इति ख – छ-पाठः । सद्म इति पाठो युक्त इति भाति ।

२ अथ साज्यम् । इति पाठेन भाव्यमिति भाति ।

पुनरपि क्रमदीपिकायामेवोक्तम्—

शाकं मूलं फलं गोस्तनभवदधिनी भैक्षमन्नं च सक्तुं
गौडान्नं चेत्यदानः क्षितिधरशिखरादौ क्रमात्स्थानभेदे ।
एकं वैषामशक्तौ गदितमिह मया ॥ इति ॥

संकल्पप्रकारस्तु अस्य प्रपञ्चसारस्यैव सत्संप्रदायसर्वस्वाभिधाने विवरणे उक्तः—

सर्वासां मन्त्रविद्यानां पुरश्चरणासमये साध्यदेवतां तदुक्तेन विधानेन समभ्यर्च्य, तदग्रे तां देवतां प्रतिदिवसमेवंसंख्यं जपहोमादिभिः त्वां भजामीति संकल्प्य, पश्चात्प्रतिदिवसमन्यूनानतिरिक्तमनुष्ठानं विधाय, परिपूर्णे संकल्पे प्राग्वदभ्यर्च्य, पुरतः प्राञ्जलिः प्राग्वत्प्रतिदिवसमेवंसंख्यं स्वामिन्नित्यं भजामीति विज्ञाप्य, प्रतिदिवसं जपस्य शनैश्शनैरारोहणावरोहणे कुर्यात् । तत्रारंभसमये एवं क्रियत इति उत्तरोत्तरसंख्यानुरूपेणैव प्रार्थ्य तथा कुर्यात् । समापनसमये तु तद्विपरीतेन प्रार्थ्य क्रमेण ह्रासयेदित्यर्थः ॥

तत्र मन्त्रदेवताप्रकाशिकोक्तप्रकारेण स्थाननियमपुरश्चरणादिविधिर्लिख्यते-

तत्र पुरश्चरणं नाम मन्त्रफलसिद्ध्यर्थमुपोद्घातत्वेन पूर्वसेवनम् ॥

तत्र स्थानादिनियमविशेषा उच्यन्ते —

पर्वताग्रे नदीतीरे बिल्वमूले जलाशये ।
गोष्ठे देवालयेऽश्वत्थे उद्याने तुळसीवने ॥

पुण्यक्षेत्रे गुरोः पार्श्वे चित्तैकाग्र्यस्थलेऽपि वा ।
पुरश्चरणकृन्मन्त्री सिद्ध्यत्येव न संशयः ॥

क्षीराहारी फलाशी वा शाकाशी वा हविष्यभुक् ।
भिक्षाशी वा भवेद्वाथ कृच्छ्रचान्द्रायणादिकृत् ॥

लवणं चारनाळं च गृञ्जनं कांस्यभोजनम् ।
ताम्बूलं च द्विभुक्तं च दुस्संवासं *प्रवृत्तिताम् ॥

श्रुतिस्मृतिविरोधं च जपं रात्रौ तु वर्जयेत् ।
भूशय्या ब्रह्मचारित्वं मौनचर्याऽनसूयता ॥

नित्यं त्रिषवणस्नानं क्षुद्रकर्मविवर्जनम् ।
नित्यपूजा नित्यदानं देवतास्तुतिकीर्तनम् ॥

नैमित्तिकार्चनं चैव विश्वासो गुरुदेवयोः ।
नैमित्तिकार्चनं संक्रान्त्यादिषु पूजनम् ।
जपनिष्ठा द्वादशैते यमास्स्युर्मन्त्रसिद्धिदाः ॥

नित्यं सूर्यमुपस्थाय तस्य चाभिमुखो जपेत् ।
देवताप्रतिमादौ वा वह्नौ वाऽभ्यर्च्य तन्मुखः ॥

अनिर्वेदस्तथा व्यग्रः शास्त्रोक्ताचारपालकः ।
स्नानपूजाजपध्यानहोमतर्पणतत्परः ॥

निष्कामो देवतायां च सर्वकर्मनिवेदकः ।
एवमादींश्च नियमान् पुरश्चरणकृच्चरेत् ॥

यदि ग्रामे जपेन्मन्त्री तत्र कूर्मं विरच्य च ।
सिध्यर्थं तन्मुखे तिष्ठेत् तत्कूर्माकृतिरुच्यते ॥

कूर्मस्याङ्गानि चाष्ट स्युर्मुखं हस्तौ च पार्श्वकौ ।
पादौ पुच्छमिति प्रोक्तं प्रशस्तं मुखमेव तु ॥

स्वरद्वन्द्वं क्रमाद्दिक्षु पूर्वादिष्वष्टसु न्यसेत् ।
तथा कादीन्सप्तवर्गान् न्यसेत् शैवदिशं विना ।
ग्रामनामाद्यवर्णस्तु यस्यां दिशि च तिष्ठति ॥

---

* प्रमत्तताम् । इति ख-छ पाठः ।

तत्र कूर्ममुखं ज्ञेयं अन्याङ्गानीतरत्र च ।
[1]मुखेन तत्फलं विन्द्यात् करयोरल्पकं फलम् ॥

नैष्फल्यं पादयोर्मध्ये त्वौदासीन्यं तु पार्श्वयोः ।
वधबन्धनदुःखानि पुच्छदेशे भवन्ति हि ॥

इत्थं ज्ञात्वा कूर्मचक्रं तत्तत्कर्माणि साधयेत् ।
आसनस्थो जपेत्सम्यक् मन्त्रार्थगतमानसः ।
कौशेयं चर्म वैय्याघ्रं चैलं नैल(ऐण)मथापि वा ॥

दारवं ताळपत्रं वा काम्बळं दार्भमासनम् ।
शय्येष्टकाश्मधरणी तृणपल्लवनिर्मितम् ॥

वर्जयेदासनं मन्त्री दारिद्र्यव्याधिदुःखदम् ।
वीरं वा स्वस्तिकं वापि बद्ध्वान्यतरदासनम् ॥

उदङ्मुखः प्राङ्मुखो वा जपहोमादिकं चरेत् ।
पद्मं वा स्वस्तिकं वापि बध्वा ध्यानादिकं चरेत् ॥

एकं पादमथैकस्मिन्विन्यस्योरुणि संस्थितः ।
इतरस्मिं[2]स्तथैवोरौ वीरासनमुदाहृतम् ॥

जानूर्वोरन्तरा सम्यक् कृत्वा पादतले उभे ।
ऋजुकायस्समासीत स्वस्तिकं तत्प्रचक्षते ॥

सीवन्या आत्मनः पार्श्वे गुल्फौ निक्षिप्य पादयोः ।
सव्ये दक्षिणगुल्फं तु दक्षिणे दक्षिणेतरम् ॥

एतद्वा स्वस्तिकं प्रोक्तं सव्ये न्यस्येतरं करम् ।

---

१ मुखे तु इति पाठेन भाव्यमिति भाति ।

२ तथैवोरुं इति ख, ग, घ. पाठः ।

अङ्गुष्ठौ तु निबध्नीयात् हस्ताभ्यां व्युत्क्रमेण तु ॥

ऊर्वोरुपरि विप्रेन्द्र कृत्वा पादतले उभे ।
पद्मासनं भवेदेतत् सर्वेषामपि पूजितम् ॥

संपीड्य सीवनीं सूक्ष्मां गुल्फेनैव तु सव्यतः ।
सव्यं दक्षिणगुल्फेन मुक्तासनमुदीरितम् ॥

एवमासनयुक्तस्सन् भूतशुद्धिं समाचरेत् ।

पृथिव्या मेरुपृष्ठ ऋषिः । सुतलं छन्दः । कूर्मो देवता । आसनार्थे विनियोगः ॥

आसनस्थश्च देवेशि ब्रह्मकर्म समारभेत् ।
उत्पतन्तीह भूतानि पृथिव्यां नागवासिनः ॥

पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ।
त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥

अपसर्पन्तु ये भूता ये भूता भुवि संस्थिताः ।
ये भूता विघ्नकर्तारस्ते *न सन्तु (गच्छन्तु) शिवाज्ञया ॥

ॐ ह्रीं अं अनन्ताय नमः आधारशक्तिकमलासनाय नमः हुं फट् इत्यासनमन्त्रः ॥

जपस्य मात्रानियमस्त्वस्मिन्नेव शास्त्रे उपरि वैष्णवाष्टाक्षरीपटले वक्ष्यते—नातिद्रुतं नातिविलम्बितं चेति । कल्पान्तरेप्युक्तम्—

उच्चैर्जपोऽधमः प्रोक्तः उपांशुर्मध्यमः स्मृतः ।
उत्तमो मानसो देवि त्रिविधः कथ्यते जपः ॥

अतिह्रस्वो व्याधिपीडा अतिदीर्घस्तपःक्षयः ।

---

* नश्यन्तु इति ख—छ पाठः ।

अक्षराक्षरसंयुक्तं जपेन्मौक्तिकहारवत् ॥

इत्येवं मातृकामन्त्रपुरश्चर्यां कृत्वा, तदन्ते मधुरत्रयसिक्तैस्तिलैरयुतं पुरश्चरणहोमं कुर्यात् ॥

अथवा प्रत्यहं जप्त्वा जुहुयात् तद्दशांशतः ।
नैरन्तर्यविधिः प्रोक्तः न दिनं प्रतिलङ्घयेत् ॥

दिवसातिक्रमात्पुंसो मन्त्रसिद्धिर्भवेन्न हि ।
यावत्संख्यं जपेदह्नि पूर्वस्मिंस्तावदेव तु ॥

दिनान्तरेऽपि प्रजपेदन्यथा सिद्धिरोधकृत् ।

तत्र मधुरत्रयं नाम क्षौद्रं गुडाज्यमिश्रितं, क्षौद्रं क्षीराज्यमिश्रितं वा इति पक्षविशेषः । तत्र विघ्नेशविषये चेत् प्रायेण इतरदेव । तत्र होमे अशक्तश्चेत् जपसंख्यापेक्षया वेदसंख्यागुणितो ब्राह्मणैर्मन्त्रो जप्तव्यः । षट्संख्यागुणितः क्षत्रियैः जप्तव्यः । अष्टसंख्यागुणितः वैश्यैः जप्तव्यः । होमेन साकं चेदेषां त्रयाणामपि समानैव संख्या । पुनर्वर्णानां त्रयाणां मध्ये, होमराहित्ये, यस्य वर्णस्य या विहिता संख्या सा तत्स्त्रीणां तद्वर्णमाश्रितस्य शूद्रस्यापि संख्या विहिता इति संप्रदायः । तदुक्तं क्रमदीपिकायाम्—

अशक्तानां होमे निगम-रस-नागेन्द्रगुणितो
जपः कार्यश्चेति द्विज-नृप-विशामाहुरपरे ।
सहोमश्चेदेषां सम इह जपो होमरहिते
य उक्तो वर्णानां स खलु विहितस्तच्चलदृशाम् ॥

यं वर्णमाश्रितो यः शूद्रस्स च तन्नतभ्रुवां विहितः ।
विदधीत विधिवदेनं श्रद्धावान्भक्तिभावनप्रतनुः ॥ इति ।

तत्राहुरपर इति । द्विगुणादिक्रमेणेति शेषः । तदुक्तम्—

यद्यदङ्गं विहीयेत तत्संख्याद्विगुणो जपः ।

कर्तव्यः स्याङ्गसिद्ध्यर्थं तदशक्तेन भक्तितः ॥
विप्राराधनमात्रेण व्यङ्गं साङ्गत्वमाप्नुयात् ॥ इति ॥

तत्र भक्तश्चेत् शूद्रस्यापि मन्त्रेऽधिकारोऽस्तीति वर्णयन्ति। तदुक्तं च क्रमदीपिकायाम् –

क्षितिसुर-नृप-वैश्य-*शूद्रजानां
मुनि-वनवासि-गृहस्थ-वर्णिनां च ।
जप-हुत-यजनादिभिर्मनूनां
फलति हि कश्चन कस्यचित्कथञ्चित् ॥

सर्वेषु वर्णेषु तथाऽऽश्रमेषु नारीषु नानाविधजन्मभेषु ।
दाता फलानामभिवाञ्छितानां द्रागेव गोपालकमन्त्र एवः ॥

नूनमच्युतकटाक्षपातने कारणं भवति भक्तिरञ्जसा ।
तच्चतुष्टयफलाप्तये ततो भक्तिमानधिकृतो हरौ गुरौ ॥ इति ॥

अथ होमार्थं कुण्डलक्षणविधिमस्मिन्नेव प्रपञ्चसारे प्राक् पञ्चमे दीक्षापटले उक्तेन प्रकारेण वक्ष्ये --

प्रागेव लक्षणयुतानि च मण्डपेऽस्मिन्
कुण्डानि कारयतु सम्यगथो दिशासु ।
आखण्डला-र्कसुत-वारि-धनाधिपानां
दोर्मात्रकानि विलसद्गुणमेखलानि ॥

चतुरश्रमर्धशशिबिम्बविलसितमथ त्रिकोणकम् ।
पद्मदलरुचिरवृत्तमिति ब्रुवते बुधा विधिषु कुण्डलक्षणम् ॥

त्रिंशद्भिश्चतुरधिकाभिरंगुलीभिः
सूत्रेणाप्यथ परिसूत्र्य भूमिभागम् ।

---

१ तुर्यजानां इति ख–छ पाठः ।

ताभिश्च प्रखनतु तावतीभिरेकां
त्यक्त्वा चांगुलमपि मेखलाश्च कार्याः ॥

सत्वपूर्विकगुणान्विताः क्रमात्
द्वादशाष्टचतुरंगुलोच्छ्रिताः ।
सर्वतोङ्गुलिचतुष्कविस्तृताः
मेखलास्सकलसिद्धिदा मताः ॥

योनिस्तत्पश्चिमस्यामथ दिशि चतुरश्रस्थलारब्धनाळात्
तन्मध्योल्लासिरन्ध्रोपरि परिविततश्वत्थपत्रानुकारा ।
उत्सेधायामकाभ्यां प्रकृतिविकृतिसंज्ञाङ्गुलाष्टाङ्गुला स्यात्
विस्तृत्या द्वादशार्धाङ्गुलिमितनमिताग्रा निविष्टेव कुण्डे ॥ इति ॥

अस्यार्थः—तत्र दीक्षाविधाने तु चतुर्दिक्षु चतुर्विधं कुण्डमुक्तम् । तेषां मध्ये चतुरश्रकुण्डं तु सार्वकामिकम् । तेन तत्सर्वहोमसाधारणम् । तेन तदेव कुण्डं कार्यम् ॥

तदुक्तं च तत्रैव दीक्षापटले—

अथवा दिशि कुण्डमुत्तरस्यां प्रविदध्याच्चतुरश्रमेकमेव ।
गदितैरपि लक्षणैस्समेतापघनं दृष्टिमनोहरं च कान्त्या ॥ इति ॥

तेन चतुरश्रकुण्डलक्षणमेवात्र कथ्यते । प्रथमं तावत् चतुर्विंशत्यंगुलप्रमाणमायामविस्तरेण तावदंगुलप्रमाणं निम्नेन च भूमिभागं सूत्रेण परिसूत्र्य निखन्य निम्नीकृत्य, पुनस्तस्मान्निम्नस्थलादेकांगुलतो बहिः परितः सूत्रमास्फाल्य तद्बहिस्ततो द्वादशांगुलमाने च परितस्सूत्रमास्फाल्य, अत्रानयोरास्फालितसूत्रयोर्मध्ये चतुरंगुलविभागेन तिस्रो मेखलाः कार्याः । इत्थं मेखलास्थानम् ॥

अथ मेखलालक्षणमुच्यते—दोःप्रमाणदीर्घेण द्वादशाङ्गुलोत्सेधेन चतुरङ्गुलविस्तारेण प्रथमां मेखलां विरचय्य, तस्या मेखलाया बहिः-

पार्श्वे अष्टाङ्गुलोत्सेधेन चतुरङ्गुलविस्तारेण द्वितीयां मेखलां, तद्बहिः तत्पार्श्वे चतुरङ्गुलोत्सेधविस्तारेण तृतीयां मेखलां च विरच्य, पुनस्तत्र कुण्डस्य पश्चिममेखलामध्यदेशे, भूमौ प्रथममेखलामध्यदेशसंश्लिष्टद्व्यङ्गुलायामविस्तारं एकाङ्गुलोत्सेधं चतुरश्रं कृत्वा, तस्य पूर्वदेशमारभ्य ऊर्ध्वक्रमेण दण्डवत् ऋजुतः द्वितीयमेखलाग्रान्तं वृत्ताकारेण नालं विरच्य, तत्र मध्यममेखलायां परिस्तरणार्थं छिद्रं विधाय, तस्माद्द्वितीयमेखलाग्रादारभ्य तृतीयमेखलाविस्तारस्य प्राग्भागावधि अश्वत्थपत्राकारां योनिं चतुर्विंशत्यङ्गुलप्रमाणां तृतीयमेखलातो यवमात्रसमुन्नतां तामश्वत्थपत्राकारां मध्यतोऽष्टाङ्गुलविस्तारामग्रात् षडङ्गुलतः पश्चिमभागादारभ्य उभाभ्यां पार्श्वाभ्यां क्रमेण संकोचवतीं मूलभागादग्रावधि क्रमेण किञ्चिन्निम्नस्थलामग्रतो यवमात्रेण किञ्चित्कुण्डस्यान्तर्निविष्टामिव कुर्यात्। तत्राश्वत्थपत्रस्य चतुर्विंशत्यङ्गुलप्रमाणत्वं तु, प्रथममेखलामारभ्य द्वितीयमेखलाग्रावधि खलु नाळम्। तदग्रादारभ्य खलु पत्रारंभः। तत्रैव द्वितीयमेखलातस्तृतीयमेखलोच्छ्रायश्चतुरंगुलः खलु। तेन तत्रैव पत्रस्य चतुरंगुलसंख्या जाता। पुनर्मेखलात्रयस्य विस्तारं प्रत्येकं चतुरंगुलप्रमाणं खलु। तत्र द्वादशांगुलप्रमाणं पत्रस्य जातम्। संभूय षोडशांगुलप्रमाणं जातम्। पुनरष्टांगुलविस्तारं च संभूय चतुर्विंशत्यंगुलप्रमाणा अश्वत्थपत्राकारा योनिः ॥

अथवा प्रथममेखलादावारभ्य द्वितीयमेखलाग्रावधि पत्रस्य नालं तदष्टांगुलप्रमाणं खलु। तत्रारभ्य तृतीयमेखलाग्रावधि चतुरंगुलप्रमाणम्। तत आरभ्य मेखलात्रयस्य विस्तारदेशं प्रत्येकं चतुरंगुलम्। संभूय द्वादशांगुलसंख्या जाता। एतानि सर्वाण्यंगुलानि संभूय चतुर्विंशत्यंगुलानि जातानि। एवं वा चतुर्विंशत्यंगुलप्रमाणा अश्वत्थपत्राकारा योनिः ॥ तस्मादुक्तेन प्रकारेण कुण्डस्य गर्त-याम-विस्तारो-च्छ्राय-योनीनां प्रत्येकं चतुर्विंशत्यंगुलमानेन निर्माणम्। तेन सर्वं चतुर्विंशतितत्वात्मकमिति संप्रदायः ॥ इति ॥

कर्तुर्दक्षिणहस्तस्य मध्यमांगुलिपर्वणोः ।
मध्यस्य दीर्घमानेन मात्रांगुलिरितीरिता ।
यवानामष्टभिः क्लृप्तं मानांगुलमितीरितम् ॥

इत्थं सर्वहोमसाधारणं कुण्डलक्षणमुक्तम् । तत्र मन्त्रदेवताप्रकाशिकायां तु होमसंख्यानुसारेण कुण्डस्य हस्तपरिमाणविशेष उक्तः । तत्प्रकारो लिख्यते –

कोटिहोमे अष्टहस्तं, अर्धकोटिहोमे सप्तहस्तं, दशलक्षहोमे षड्ढस्तं, पञ्चलक्षहोमे पञ्चहस्तं, एकलक्षहोमे चतुर्हस्तं, अर्धलक्षहोमे त्रिहस्तं, अयुते द्विहस्तं, सहस्रे एकहस्तं, कुण्डं कुर्यादिति केचित् । अत्यन्तक्रूरप्रयोगे दक्षिणदिशि त्रिकोणं कुर्यात् । व्याधिमृत्युपरिहारार्थं पश्चिमदिशि वर्तुलं कुर्यात् । उच्चाटने शोषणार्थं वायुदिग्भागे षट्कोणं कुण्डं कुर्यात् । श्रीसमृध्यै उत्तरदिशि पद्माकारं कुण्डं कुर्यात् । ज्ञानार्थमीशदिग्भागे अष्टकोणकुण्डं कुर्यात् । तत्र एकहस्तमानानुसारेण खलु पूर्वं कुण्डस्य गर्तमेखलादीनां चतुर्विंशत्यंगुलमानमुक्तम् । तदपि हस्तमानाधिक्यानुसारेण वर्धनीयम् ॥

अथ शारदातिलकोक्तप्रकारेण कुण्डस्य हस्तमानमुच्यते –

मुष्टिमात्रमितं कुण्डं शतार्धे संप्रचक्षते ।
शतहोमेऽरत्निमात्रं बाहुमात्रं सहस्रके ॥

द्विहस्तमयुते लक्षे चतुर्हस्तमुदीरितम् ।
दशलक्षे तु षट्हस्तं कोट्यामष्टकरं स्मृतम् ॥

एकहस्तमितं कुण्डं एकलक्षे विधीयते ।
लक्षाणां दशकं यावत् तावत् हस्तेन वर्धयेत् ॥

दशहस्तमितं कुण्डं कोटि* होमे तु शस्यते ।
सर्वसिद्धिकरं कुण्डं चतुरश्रमितीरितम् ॥

---

* होमेऽपि इति ख, ग, घ, पाठः ।

पुत्रप्रदं योनिकुण्डमर्धेन्द्वाभं शुभप्रदम् ।
शत्रुक्षयकरं त्र्यश्रं वर्तुलं शान्तिकर्मणि ॥

छेदमारणयोः कुण्डं षडश्रं पद्मसंनिभम् ।
पुष्टिदं रोगशमनं कुण्डमष्टाश्रमीरितम् ॥

विप्राणां चतुरश्रं स्याद्राज्ञां वर्तुलमिष्यते ।
वैश्यानामर्धचन्द्राभं शूद्राणां त्र्यश्रमीरितम् ॥

चतुरश्रं तु सर्वेषां केचिदिच्छन्ति तान्त्रिकाः ।
कुण्डस्य रूपं जानीयात्परमं प्रकृतेर्वपुः ॥

प्राच्यां शिरस्समाख्यातं बाहू दक्षिणसौम्ययोः ।
उदरं कुण्डमित्युक्तं योनिः पादौ तु पश्चिमे ॥

नित्यनैमित्तिकं होमं स्थण्डिले वा समाचरेत् ।
हस्तमात्रेण तत्कुर्यात् वालुकाभिः सुशोभितम् ॥

अंगुलोत्सेधसंयुक्तं चतुरश्रं समन्ततः ।

एवं कुण्डलक्षणान्युक्तानि ॥

अथ होमसामान्यविधिं विघ्नेशकल्पोक्तप्रकारेण वक्ष्ये —

विविक्ते रुचिरे रम्ये सुखासीनः समाहितः ।
आत्मानमात्मना ध्यात्वा जपहोमादिकाः क्रियाः ॥

स्वगृह्योक्तविधानेन अग्निं प्रज्वाल्य देशिकः ।
कुण्डे वा स्थण्डिले वापि ब्राह्मणैरथवा स्वयम् ॥
औपासने यदि स्वार्थमितरेषां तु लौकिके ॥ इति ॥

त्र्यम्बककल्पे —

तत्र कृत्वाऽऽज्यभागान्तं सर्वमुल्लेखनादिकम् ।
स्वगृह्योक्तविधानेन ततो होमं समाचरेत् ॥ इति ॥

स्वगृह्योक्तेति । आचार्यस्य कर्तुर्वेति विकल्पः । धन्वन्तरिविधाने उक्तम्—

अग्निमुखादिकमखिलं स्वचरणविहितक्रमेण कृत्वाऽग्नौ ।
आवाह्य वैद्यनाथं परिवारयुतं प्रपूज्य गन्धाद्यैः ॥ इति ॥

अस्मिन्नेव शास्त्रे प्राक् दीक्षापटले उक्तम्—

तत्राथो सद्दतुमतीमतीन्द्रियाभां
संस्मृत्वा सकलजगन्मयीं च शक्तिम् ।
तद्योनौ मणिभवमारणेयकं वा
तारेण क्षिपतु गृहोत्थमेव वाग्निम् ॥

चित्पिङ्गल हन हन दह दह पच पच सर्वज्ञ आज्ञापय स्वाहा ॥ अनेन अनलं ज्वालयेत् ।

अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् ।
सुवर्णवर्णमनलं समिद्धं सर्वतोमुखम् ॥

अनेन ज्वलितं मन्त्रेणोपतिष्ठेद्द्धुताशनम् ।
ततः प्रविन्यसेद्देहे जिह्वां मन्त्रैः विभावसोः ॥

सलिङ्गगुदमूर्धास्यनासानेत्रेषु च क्रमात् ।
सर्वाङ्गेषु च जिह्वाश्च वक्ष्यन्ते त्रिविधात्मिकाः ॥

हिरण्या कनका रक्ता कृष्णा चैव तु सुप्रभा ।
बहुरूपा*ऽतिरक्ता च जिह्वाससप्तेति सात्त्विकाः ॥

पद्मरागा सुवर्णा च तृतीया भद्रलोहिता ।
लोहिताख्या तथा श्वेता धूमिनी सकरालिका ।
राजस्यः कथिता जिह्वाः क्रमात्कल्याणरेतसः ॥

---

*अतिरिक्ता इति ग, घ, ङ, ज, मातृकापाठः ।

विश्वमूर्तिस्फुलिङ्गिन्यौ धूम्रवर्णा मनोजवा ।
लोहिता च करालाख्या काळी तामसजिह्विकाः ॥

अनलेरार्घिबिन्द्वन्ताः सादियान्ताक्षरान्विताः ।
सात्विका दिव्यपूजासु राजसाः काम्यकर्मसु ॥

तामसाः क्रूरकार्येषु प्रयोक्तव्या विपश्चिता ।
सुरास्सपितृगन्धर्वा यक्षा नागाः पिशाचकाः ॥

राक्षसाश्च क्रमादग्नेराश्रिता रसनास्त्वमी ।
जिह्वासु त्रिदशादीनां तत्तत्कार्यसमाप्तये ॥

जुहुयाद्वांच्छितां सिद्धिं दद्युस्ता देवता मताः ।
स्वनामसदृशाकाराः प्रायो जिह्वा हविर्भुजः ॥

तत्रानलेरार्घीत्यादेरयमर्थः —

अनल इति रेफः । ईर इति यकारः । अर्घीत्यूकारः षष्ठस्वरः । बिन्दुरित्यनुस्वारः । प्रतिलोमेन [1]सादियान्तैर्वर्णैर्योजयेत् । एतदुक्तं भवति । सकार-रेफ-यकार-षष्ठस्वर-बिन्दूनां कूटं स् र् य् ऊ म् इति प्रथमः । षादिष्वपि एवमेव योजयेत् । एवं सप्तजिह्वा मंत्रादौ योजयेत् ।

अथ श्रीविद्याकल्पसूत्रोक्तप्रकारेण अग्निजननविधिर्लिख्यते — अथ स्वेष्टमन्त्रस्य होमविधानं व्याख्यास्यामः । चतुरश्रं कुण्डमथवा हस्तायाममंगुष्ठोन्नतं स्थण्डिलं वा कृत्वा सामान्यार्घ्यमुपशोध्य; सामान्यार्घ्योपशोधनं नाम शङ्खपूरणविधिः । तेनावोक्ष्य प्राचीरुदीचीस्तिस्रस्तिस्रो रेखा लिखित्वा तासु रेखासु ब्रह्म-यम-सोम-रुद्र-विष्ण्विन्द्रान्, षट्तारनमःसंपुटितानभ्यर्च्य संपुटितानिति ऐं ह्रीं श्रीं ऐं क्लीं सौः ब्रह्मणे नमः । एवं यमादिष्वपि योजनीयम् । सहस्रार्चिषे हृदयाय नमः । स्वस्ति पूर्णाय शिरसे स्वाहा ।

---

१ सकारादि इति ख – च मातृकापाठः ।

उत्तिष्ठ पुरुषाय शिखायै वषट् । धूमव्यापिने कवचाय हुं । सप्तजिह्वाय नेत्रत्रयाय वौषट् । धनुर्धराय अस्त्राय फट् । इति स्वदेहे षडङ्गं विधाय, अग्निमन्त्रस्य भृगुर्ऋषिः । गायत्री छन्दः । हुताशनो देवता । इति ऋष्यादिकं विन्यस्य, अनेनैव षडङ्गेन कुण्डमभ्यर्च्य, तत्राष्टकोणषट्कोण-त्रिकोणात्मकमग्निचक्रमन्तरन्तः क्रमेण विलिख्य, पीतायै-श्वेतायै० अरुणायै० कृष्णायै० धूम्रायै० [1]तीव्रायै० स्फुलिङ्गिन्यै० रुचिरायै० ज्वालिन्यै० नमः । ९ इति त्रिकोणमध्ये वन्हेः पीठशक्तिं संपूज्य, तं तमसे० रं रजसे० सं सत्वाय० आत्मने० अन्तरात्मने० परमात्मने० ज्ञानात्मने नम इति तत्रैवाभ्यर्च्य, जनिष्यमाणस्य वह्नेः पितरौ वागीश्वरीवागीश्वरौ पीठेऽभ्यर्च्य, तयोर्मिथुनीभावं ध्यात्वा, ह्रां वागीश्वरीवागीश्वराभ्यां नम इति ध्यात्वा, अरणेः सूर्यकान्तात् द्विजगृहाद्वा वह्निमुत्पाद्य मृत्पात्रे ताम्रपात्रे वा आग्नेय्यामैशान्यां नैर्ऋत्यां वा निधाय, अग्निशकलं क्रव्यादांशं नैर्ऋते विसार्य, निरीक्षणप्रोक्षण ताडनावकुण्ठनादिभिः विशोद्ध्य; निरीक्षणं नाम हृदयमन्त्रेण निरीक्षणं, शिखामन्त्रेण प्रोक्षणं, अस्त्रमन्त्रेण ताडनं, कवचमन्त्रेण अवकुण्ठनमिति विशोद्ध्य, ॐ वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा इति मूलाधारोद्गतं संविदग्निं ललाटनेत्रद्वारा निर्गमय्य, तं बाह्याग्नियुक्तं पातयेत् ॥

ततोऽस्त्रेण संरक्ष्य संपूज्य, हौं वौषडिति मन्त्रेण धेनुमुद्रया अमृतीकृत्य आदाय कुण्डस्योपरि प्रदक्षिणं त्रिः परिभ्राम्य वागीश्वरबीजाय नमः वागीश्वरबीजमिदं ध्यात्वा, वागीश्वरीगर्भनाड्यां वागीश्वरेण क्षिप्तं विभाव्य कुण्डे अग्निं निधाय नाभिदेशे समूह्य परिधानस्य संवृतिं विभाव्य, शौचाचमनार्थं तोयबिन्दुं हृदयमन्त्रेण दत्वा, "अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् । सुवर्णवर्णमनलं समिद्धं विश्वतोमुखम् ॥" इत्युपस्थाय, कवचमन्त्रेण इन्धनैराच्छाद्य, उत्तिष्ठ पुरुष हरिपिङ्गल लोहिताक्ष सर्वकर्माणि

---

१ ज मातृकायां "तीव्रायै" इति न विद्यते ।

साधय स्वाहेति वन्हिमुत्थाप्य, चित्पिङ्गल हन हन दह दह पच पच सर्वज्ञाज्ञापय स्वाहा इति प्रज्वाल्य, वागीश्वरीगर्भे धृतं ध्यात्वा गर्भाग्नये नम इति गर्भस्थाग्निं संपूज्य, गर्भरक्षार्थमस्त्रमन्त्रेण सप्तदर्भकङ्कणं देव्या हस्ते बद्ध्वा गर्भाधान-पुंसुवन-सीमन्तोन्नयन-जनन-जातकर्म-नामकरणा-न्नप्राशन-चौलो-पनयन-व्रतसमावर्तन-विवाहकर्माणि षट्तारनमोन्तमन्त्रेण कुर्यात् ॥

तद्विशेषो लिख्यते — ऐंह्रींश्रीं ऐंक्लींसौः नमः इत्यभ्यर्च्य हृदयमन्त्रेण आहुतित्रयं तिलैः कुर्यात् इति गर्भाधानं विधाय, पुंसवनार्थं तृतीये मासि षट्तारैरभ्यर्च्य, शिरोमन्त्रेणाहुतित्रयं तिलैर्दत्वा, सीमन्तोन्नयननिमित्तं षष्ठे मासि षट्तारैरभ्यर्च्य शिखामन्त्रेण आहुतित्रयं तिलैर्दत्वा, जननार्थं दशमे मासि षट्तारैरभ्यर्च्य कवचमन्त्रेण आहुतित्रयं तिलैर्दत्वा, जातस्य गर्भमलापह-स्नानार्थं वन्हिं दर्भाग्रैः षट्तारमन्त्रेण संधुक्ष्य देवीहस्तस्थदर्भकङ्कणमुन्मुच्य, स्वर्णबन्धनादि देव्याः कृतमिति ध्यात्वा हृदयमन्त्रेण अभ्यर्च्य, सद्यस्सूतक-निवृत्तये कुण्डमस्त्रमन्त्रजप्ताम्भसा संसिच्य दर्भेणास्त्रमन्त्रेण ताडनं कृत्वा वन्हिरक्षार्थं पूर्वादिमेखलासु उत्तरपूर्वाग्रं दर्भेणास्तीर्य तेषु परिधिविष्टरान् संस्थाप्य वक्त्राणां लालापनोदनाय अग्नेः पुष्ट्यै च मूलाग्रयोः घृतसिक्ताः पालाशाः पञ्च समिधः अस्त्रमन्त्रेण हुत्वा, परिधिषु ब्रह्मणे नमः विष्णवे नमः रुद्राय नमः ईश्वराय नमः इति षट्तारनमस्संपुटितान् पूर्वादि-परिधिस्थान् संपूज्य, विष्टरेषु पूर्वादीशानान्तं इन्द्रादीनभ्यर्च्य, अर्घ्याद्युप-चारान् दत्वा इति विघ्नसंघातं निवार्य, ततः स्रुक्स्रुवौ याज्ञियवृक्षकृतौ वा ताम्रकृतौ वा सकुशौ ऊर्ध्ववदनाधोमुखौ गृहीत्वा, तत्र जुह्वाः ऊर्ध्ववदनत्वं स्रुवस्याधोवदनत्वं चेत्यर्थः। अस्त्रमन्त्रेण संप्रोक्ष्य कवचमन्त्रेणावकुण्ठयाग्नौ प्रताप्य परिभ्राम्य, कुशाग्रेण तदग्रं संमृज्य, पुनः परिभ्राम्य, मध्येन मध्यं संमृज्य पुनः परिभ्राम्य, मूलेन मूलं संमृज्य, प्रताप्य पुनः परिभ्राम्य, तयोः कुशसंमार्जितप्रदेशेषु अग्रे शिवतत्वाय नमः। मध्ये विद्यातत्वाय

नमः। मूले आत्मतत्त्वाय नमः। इति तद्दर्भेण विन्यस्य, शक्तिरूपां स्रुचं पुरुषात्मकं स्रुवं भावयित्वा तद्ग्रीवायां कवचमन्त्रेण त्रिस्सूत्रेणावेष्ट्य, आत्मनः सव्यभागे कुशोपरि संस्थाप्य, तद्दर्भान् अग्नौ प्रक्षिप्य, स्रुक्स्रुवौ हृदयमन्त्रेण पूजयेत् ॥

अथ गव्यमाज्यं दारुपात्रे मृत्पात्रे ताम्रपात्रे वाऽऽदाय, वीक्षणप्रोक्षण-ताडनावकुण्ठनैः प्रागुक्तमन्त्रैः विशोध्य स्वदेहं ब्रह्ममयं विचिन्त्याज्यमादाय कुंडस्योर्ध्वं त्रिधावृत्याग्नेय्यामधिश्रित्य कुशाग्रेण घृतबिन्दुमादाय ॐ हां ब्रह्मणे स्वाहेति हुत्वा, पुनर्विष्णुमयं स्वदेहं विचिन्त्याज्यमादाय ऐशान्या-मधिश्रित्य कुशाग्रेणाज्यबिन्दुमादाय ॐ ह्रीं विष्णवे स्वाहा इति हुत्वा पश्चात् स्वदेहं रुद्रमयं ध्यात्वा नाभिस्थाने अधिश्रित्य ॐ हु (हूं) रुद्राय स्वाहेति आज्यबिन्दून् कुशाग्रेण जुहुयात्। उदगुद्वास्य कुण्डनाभौ संस्थाप्य ग्रन्थियुक्तपवित्रेणास्त्रमन्त्रेणोत्पूय ग्रन्थिमुन्मुच्याग्नौ क्षिपेत्। हृदयमन्त्रेण दग्धदर्भोल्कं घृते प्रदर्श्यास्त्रमन्त्रेणाग्नौ क्षिपेत्। दीप्तेनान्येन दर्भेण कवच-मन्त्रेण नीराज्याग्नौ क्षिपेत्। ततः प्रादेशमात्रं मध्यग्रन्थिकुशद्वयं प्रणवेन घृतमध्ये न्यस्त्वा दक्षिणवामक्रमेण शुक्लपक्षकृष्णपक्षद्वयं विभाव्य, पुनर्दक्षिण-वाममध्यभागेषु पिङ्गलेडासुषुम्नानाडीत्रयं च संभाव्य, सव्यभागात् स्रुवेणाज्य-मादाय ओं हां अग्नये स्वाहा इत्यग्निदक्षिणनेत्रे हुत्वा, वामभागादाज्यमादाय ॐ हां सोमाय स्वाहा इति वामनेत्रे हुत्वा, मध्यादाज्यमादाय ॐ हां अग्नीषोमाभ्यां स्वाहा इत्यग्निमध्यनेत्रे हुत्वा, ॐ हां अग्नये स्विष्टकृते स्वाहा इति अग्निवक्त्रे च स्वेति किञ्चित् हुत्वा, शेषमाज्यं तद्वदाज्य-स्थाल्यां हेति क्षिपेत्। कृष्णपक्षे एवमाहुतिः ॥

शुक्लपक्षे तु ॐ हां सोमाय स्वाहा। ॐ हां अग्नये स्वाहा। ॐ हां सोमाग्निभ्यां स्वाहा। (ॐ हां) अग्नये स्विष्टकृते स्वाहेति वामदक्षिण-मध्यनेत्रेषु च वक्त्रेषु च हुत्वा, आज्यस्थालीं वेदादिनाभिमन्त्र्य अस्त्रमन्त्रेण

संरक्ष्य कवचमन्त्रेणावकुण्ठ्य तन्मूलमन्त्रेण धेनुमुद्रयाऽमृतीकृत्य मूलमन्त्रेण संपूज्य असंस्कृताज्ये संस्कृताज्यं किञ्चिद्विसृज्य शोधयेत् ॥

अथ नामकरणार्थं षट्तारैरभ्यर्च्य अस्त्रमन्त्रेण तिलैराहुतित्रयं दत्वा अन्नप्राशनमप्येवं चौलोपनयनव्रतसमावर्तन विवाहकर्मणां षट्तारैः पृथक्-पृथगभ्यर्च्य षट्तारपूर्वकैस्तन्मूलमन्त्रैः पृथक् पृथक् तिलैस्सप्ताहुतीर्जुहुयात् । एवं गर्भाधानादिद्वादशसंस्कारैरग्निमुपचर्य हृदयमन्त्रेण वागीशावभ्यर्च्य विसृज्य,

त्रिनयनम[1]रुणाभं बद्धमौलिं सुशुक्लां-
शुकमरुणमनेकाकल्पमम्भोजसंस्थम् ।
अभिमतवरशक्तिस्वस्तिकाभीतिहस्तं
नमत कनकमालालङ्कृतांसं कृशानुम् ॥

इति ध्यात्वा पूर्वोक्ताग्निचक्राष्टकोणे जातवेदसे० सप्तजिह्वाय० हव्यवाहनाय० अश्वोदरजाय० वैश्वानराय० कौमारतेजसे० विश्वमुखाय० देवमुखाय नमः । इत्यभ्यर्च्य षट्कोणे पूर्वोक्ताग्निषडङ्गमभ्यर्च्य, त्रिकोणे अग्निं पूजयित्वा उत्तिष्ठ पुरुष हरिपिङ्गल लोहिताक्ष देहि मे दापय स्वाहेत्यनेनाग्निमन्त्रेणाग्निं संपूज्य, हिरण्यायै० कनकायै० रक्तायै० कृष्णायै० सुप्रभायै० अतिरक्तायै० बहुरूपायै नम इति अग्नेः सप्तजिह्वामन्त्रैराज्येन पृथक् पृथक् सप्ताहुतीर्जुहुयात् । गर्भाधानादि-संस्कारपूरणार्थं वौषडन्ताग्निमूलमन्त्रेण पूर्णाहुतिं कुर्यात् ॥ तद्यथा —

सर्पिषा स्रुचमापूर्य पुष्करोपर्यधोमुखं स्रुवं निधाय, पुष्करोपरि स्रुच उपरि इत्यर्थः । तदग्रे पुष्पमारोप्य वामदक्षिणहस्ताभ्यां शङ्खवत् सक्ताभ्यां पुरस्सव्येन लग्नौ तावुभौ स्रुक्स्रुवावादाय समपादः समुत्थाय ऊर्ध्वकायो नाभ्यां तिर्यग्विधाय स्रुगग्रदत्तदृष्टिः वौषडन्तमूलमुच्चरन् वामस्तनान्तं स्रुचमानीय यवप्रमाणधारया समस्तमाज्यं वह्नौ क्षिपेत् । इति पूर्णाहुतिः । वैश्वानरोत्तिष्ठ चितिपिङ्गल हन हन दह दह पच पच सर्वज्ञाज्ञापय स्वाहा ।

---

१ अरुणं त्वा इति ख – ज मातृका पाठः ।

इति (आज्य) आहुतित्रयं विधाय, बहुरूपायां जिह्वायां इष्टां देवतामावाह्य आवरणैस्सह समर्चयेत् ॥

अथाग्निसाध्यदेवतयोरैक्यभावनाप्रकारः—

अग्ने त्वमैश्वरं तेजः पावनं परमं यतः ।
तस्मात् त्वदीयहृत्पद्मे संस्थाप्य तर्पयाम्यहम् ॥

इत्यग्निं संप्रार्थ्य, अग्नेर्विग्रहमध्यनाड्यां स्वयं प्रविश्य, तदीयहृत्पद्मे स्वेष्टां देवतामावाह्य, तत्र भास्वरं देवं सावरणमभ्यर्च्य, तन्मूलमन्त्रमुच्चार्य, वह्निस्थदेवतानासाग्रनिर्गतां ज्योतीरूपशिखामग्नौ लीनां रश्मिमालावियोगेनाविच्छिन्नामुभयत्र कृतास्पदां एकेनैवात्मना ध्यायेत् । एवं कुण्डयागाग्न्यात्मनां ऐक्यं भावयेत् । एवं अग्निजननं कृत्वा अस्मिन्नग्नौ पीठावरणार्चनादिपूर्वकं होमं कुर्यात् ॥

अथ महालक्ष्मीरत्नकोशे प्रोक्तहोमसामान्यविधिर्लिख्यते—

कुण्डस्य मध्यमे भागे हुतभुग्वर्तते पुनः ।
अग्निरूपमहं वक्ष्ये सिद्ध्यर्थं सर्वकर्मणाम् ॥

यतो यस्मिन्नविज्ञाते होमो भवति निष्फलः ।
हिरण्या कनका रक्ता कृष्णा चैव तु सुप्रभा ॥

अतिरक्ता बहुरूपा जिह्वास्सप्त प्रकीर्तिताः ।
हिरण्या वारुणे जिह्वा वायव्ये कनका तथा ॥

रक्ता चोत्तरजिह्वा तु कृष्णा याम्यदिशि स्थिता ।
सुप्रभा पूर्वजिह्वा स्यात् अतिरक्ताऽनले स्थिता ॥

बहुरूपा तु नैर्ऋत्यां जिह्वास्थानं प्रकीर्तितम् ।
जिह्वाभेदं वदन्त्यन्ये शृणु वक्ष्ये विधानतः ॥

कुण्डस्य पूर्वदिग्भागे काली जिह्वा प्रकीर्तिता ।

आग्नेय्यान्तु कराली स्याद्दक्षिणे तु मनोजवा ॥

सुलोहिता च नैर्ऋत्यां धूम्रवर्णा तु वारुणे ।
स्फुलिङ्गिनी तु वायव्ये सौम्ये विश्वरुचिस्स्मृता ॥

काल्यां कराल्यां जिह्वायां शान्तिकं पौष्टिकं भवेत् ।
मनोजवायां जिह्वायां आभिचारो विधीयते ॥

भूतप्रेतपिशाचादिशान्तिर्लोहितजिह्वके ।
जुहुयाद्धूम्रवर्णायां वृष्टिकामो विधानतः ॥

स्फुलिङ्गिन्यान्तु जिह्वायां तस्यामुच्चाटनं विदुः ।
या तु विश्वरुचिर्जिह्वा कुण्डस्योत्तरभागतः ॥

सर्वार्थसाधनी जिह्वा लक्ष्मीस्तत्र प्रतिष्ठिता ।
एवं ज्ञात्वा तु जुहुयात्तत्तत्कार्यानुरूपतः ॥

अथ तन्त्रसमुच्चयोक्तप्रकारेणापि होमसामान्यविधिर्मूलग्रन्थैर्विना केवलमर्थतो लिख्यते —

प्रथमं तावदाज्यभागान्तं कृत्वा इध्मात्प्रागेव वा गन्धपुष्पाभ्यामग्न्याराधनमभितः पर्युक्षणपूर्वकं कृत्वा, पीठपूजावाहनावरणपूजां नि(नै)वेद्यपर्यन्तां कृत्वा, नि(नै)वेद्यस्थाने होमं समाचरेत्। प्रथमं प्रणवव्याहृतिपूर्वकं पीठमन्त्रैः सकृत् सकृत् आज्याहुतिं कृत्वा, आवाहनस्थाने मूलेन चतुर्वारमाज्यं हुत्वा, अकार-उकार-मकारैः बिन्द्वन्तैर्हुत्वा, प्रणवेन च हुत्वा, जितं ते इत्यादितत्तदुपचारमन्त्रैर्हुत्वा, तत्तन्मूलेन चतुर्वारं हुत्वा, षडङ्गमन्त्रैर्हुत्वा तत्तन्मन्त्रवर्णैः हुत्वा, किरीटादिभिर्भूषणैर्जटादिभिर्वा तत्र तत्रोक्तायुधैश्च हुत्वा, पुनरङ्गाद्यावरणैः निर्माल्यधार्यवसनैश्च हुत्वा, आज्येन चतुर्गृहीतपूर्वकमुत्थाय पूर्णाहुतिं मूलमन्त्रेण वौषडन्तेन हुत्वा, तत्र तत्रोक्तद्रव्यहोमं समारभेत्। तत्रापि द्रव्यान्तरारंभे च मन्त्रान्तरारम्भे च पूर्णाहुतिं कुर्यात्।

पुनर्होमावसाने मूलेन चतुर्वारं प्रसन्नपूजार्थं आज्यं हुत्वा वक्ष्यमाणब्रह्मार्पणमन्त्रेण चाज्यं हुत्वा, व्याहृत्या प्रणवेन च हुत्वा संस्रावं कृत्वा होमं समापयेत् । पुनरग्नौ प्रसन्नपूजां कृत्वा, अग्न्यलङ्करणादिकं कृत्वा साध्यमाहूय तेनाग्निसमर्चनादि कारयित्वा तस्य मूर्ध्नि मूलमन्त्रं जप्त्वा तस्मात् दक्षिणां गृहीत्वा अग्निं विसृजेत् ॥

अथ होमद्रव्यप्रमाणं शारदातिलकोक्तप्रमाणेन लिख्यते –

अथात्र होमद्रव्याणां प्रमाणन्तु विधीयते ।
कर्षमात्रं घृतं होमे शुक्तिमात्रं पयः स्मृतम् ॥

कर्षं षोडशमाषपरिमितम् । तद्द्विगुणं शुक्तिः ।

उक्तानि पञ्चगव्यानि तत्समानि मनीषिभिः ।
तत्समं मधुदुग्धान्नमक्षमात्रमुदाहृतम् ॥

अक्षमात्रं कर्षद्वयमात्रम् ।

दधि प्रसृतिमात्रं स्याल्लाजाः स्युर्मुष्टिसम्मिताः ।

पलद्वयं प्रसृतिः ।

पृथुकास्तत्प्रमाणास्स्युः सक्तवोऽपि तथोदिताः ।
गुळं पलार्धमानं स्यात् शर्करापि तथा स्मृता ॥

ग्रासार्धं चरुमानं स्यात् इक्षुः पर्वावधिः स्मृतः ।
एकैकं पत्रपुष्पाणि तथाऽपूपानि कल्पयेत् ॥

कदलीफलनारङ्गफलान्येकैकशो विदुः ।
मातुलिङ्गं चतुःखण्डं पनसं दशधा कृतम् ॥

अष्टधा नाळिकेराणि खण्डितानि विदुर्बुधाः ।
त्रिधा कृतं फलं बैल्वं, कपित्थं खण्डितं द्विधा ॥

उर्वारुकफलं होमे चोदितं खण्डितं त्रिधा ।
फलान्यन्यान्यखण्डानि समिधः स्युर्दशांगुलाः ॥

दूर्वात्रयं समुद्दिष्टं गळूची चतुरंगुला ।
व्रीहयो मुष्टिमात्रास्स्युः मुद्गमाषयवा अपि ॥

तण्डुलाः स्युस्तदर्धांशाः कोद्रवा मुष्टिसम्मिताः ।
गोधूमा रक्तकलमा विहिता मुष्टिमानतः ।
तिलाश्चुलुकमात्रास्स्युः सर्षपास्तत्प्रमाणकाः ॥

शुक्तिप्रमाणं लवणं मरीचान्यपि विंशतिः ।
पुरं बदरमानं स्याद्रामठं तत्समं विदुः ॥

चन्दनागरुकर्पूरकस्तूरीकुंकुमानि च ।
तिन्त्रिणीबीजमानानि समुद्दिष्टानि देशिकैः ॥

वैश्वानरं स्थितं ध्यायेत् समिद्धोमेषु देशिकः ।
शयानमाज्यहोमेषु निषण्णं शेषवस्तुषु ॥

आस्यान्तर्जुहुयाद्वन्हेः विपश्चित्सर्वकर्मसु ।
कर्णहोमे भवेद्व्याधिः नेत्रेऽन्धत्वमुदीरितम् ॥

नासिकायां मनःपीडा मस्तके धनसंक्षयः ।
काष्ठानि कर्णं धूमस्तु नासिकाऽङ्गारका दृशः ॥

भस्म मूर्धा मुखं ज्वाला विज्ञेया यत्र [1] यत्र च ।
स्वर्णसिन्दूरबालार्ककुंकुमक्षौद्रसन्निभाः ॥

सुवर्णरेतसो वर्णाः शोभनाः परिकीर्तिताः ।
भेरीवारिदहस्तीन्द्रध्वनिर्वह्नेः शुभावहः ॥

---

१ तत्र च इति ख - छ पाठः । कुत्रचित् इति ज पाठः ।

नागचम्पकपुन्नागपाटलीयूथिकानिभः ।
पद्मेन्दीवरकह्लारसर्पिर्गुग्गुलसन्निभः ॥

पावकस्य शुभो गन्धः इत्युक्तं तन्त्रवेदिभिः ।
प्रदक्षिणास्त्यक्तकंपाः छत्राभाः शिखिनः शिखाः ॥

शुभदा यजमानस्य राज्यस्यापि विशेषतः ।
कुन्देन्दुधवळो धूमः वह्नेः प्रोक्तश्शुभावहः ॥

कृष्णः कृष्णगतेर्वर्णः यजमानं विनाशयेत् ।
श्वेतो राष्ट्रं निहन्त्याशु वायसस्वरसन्निभः ॥

खरस्वरसमो वह्नेः ध्वनिस्सर्वविनाशकृत् ।
पूतिगन्धो हुतभुजो होतृदुःखप्रदो भवेत् ॥

छिन्नवृत्ताः शिखाः कुर्युः मृत्युं धनपरिक्षयम् ।
शुकपक्षनिभो धूमः पारावतसमप्रभः ॥

हानिं तुरङ्गजातीनां गवां च कुरुतेऽचिरात् ।
एवंविधेषु दोषेषु प्रायश्चित्तानि देशिकः ॥

मूलेनाज्येन जुहुयात्पञ्चविंशतिमाहुतेः ।

अथास्या मातृकासरस्वत्याः पूजार्थं यन्त्रं वक्ष्ये । सर्वाश्च देवता यन्त्रे खलु संपूज्याः । तदुक्तं रामकल्पे—

यन्त्रं मन्त्रमयं प्रोक्तं मन्त्रात्मा देवतेरिता ।
पुरा भगवताप्युक्तं तन्त्रे संमोहनाह्वये ॥

देहात्मनोर्यथाऽभेदो मन्त्रदेवतयोस्तथा ।
तस्मात्पीठे महायन्त्रं लिखित्वा तत्र पूजयेत् ॥

विना यन्त्रेण चेत्पूजा देवता न प्रसीदति ।

क्रमदीपिकायामप्येवमेवोक्तम् —

सालग्रामे मणौ यन्त्रे मण्डले प्रतिमासु वा ।
नित्यं पूजा हरेः कार्या न तु केवलके तले ॥ इति ॥

तस्माद्यन्त्रप्रकारो लिख्यते —

व्योमाविस्सचतुर्दशस्वरविसर्गार्णस्फुरत्कर्णिकं
किञ्जल्कालिखितस्वरं प्रतिदलप्रारब्धवर्गाष्टकम् ।
क्ष्माबिम्बेन च सप्तमार्णवयुजाश्राशासु संवेष्टितं
वर्णाब्जं शिरसि स्मृतं विषगदप्रध्वंसिमृत्युञ्जयम् ॥

अस्यार्थः — प्रथमं अष्टदलं पद्मं विलिख्य, तन्मध्ये कर्णिकायां हकारसकारचतुर्दशस्वराख्यौकारविसर्गाणां कूटं ह्सौः इत्येतत् विलिख्य, तन्मध्ये साध्यनामयन्त्रन्यायादीन् उपरि त्रिंशत्पटले त्र्यम्बकमन्त्रविधाने प्रसङ्गाद्वक्ष्यमाणेन क्रमेण विलिख्य, पुनरेतस्मात्कर्णिकावृत्ताद्बहिरष्टसु दिक्षु एकैकस्यां दिशि तिर्यग्रेखाद्वन्द्वं ह्रस्वरेखारूपेण विलिखेत् । एवं विलिखिते षोडशरेखासंख्या भवन्ति । तत्र द्वयोर्द्वयो रेखयोस्तिर्यग्रूपेण विलिखितयोरन्तरालं किञ्जल्ककेसरादिसंज्ञं भवति । सर्वमन्त्रेऽपि केसरस्थानमिदमेव । तत्र चतुर्दलपक्षेऽपि षोडशादिदलपक्षेपि अष्टदलपक्षोक्तरीत्या तत्तद्दलसंख्यानुगुण्येन केसरस्थानसंख्याऽपि वर्धनीया इत्येव विशेषः ॥

एवं किञ्जल्कस्थानं संपाद्य तेष्वष्टसु किञ्जल्कस्थानेषु षोडशस्वरवर्णान् सबिन्दुकानेकैकस्मिन् स्थाने द्वौ द्वौ विलिखेत् । एवमेव सर्वत्र केसरस्थाने स्वराक्षरलेखनविषये न्यायः । पुनरष्टसु दलेषु क्रमेण कवर्गं प्राग्दले विलिख्य, तदनन्तरदलमारभ्य क्रमेण चवर्गं टवर्गं तवर्गं पवर्गं यादिचतुष्टयं शादिचतुष्टयं ळादिद्वयं चेत्येतानि सबिन्दुकानि आलिखेत् । सर्वयन्त्रविषयेपि दळेषु वा केसरेषु वा कादिवर्गाक्षरलेखनविधौ सबिन्दूनेव वर्गान् विलिखेत् ।

यत्र यत्र केसरेषु कादिवर्गा लेखनीया भवन्ति, तत्र सर्वत्र प्रायेण यथास्थानं विभज्याक्षराणि विलिखेत् । अवशिष्टाक्षराणि मा लिखेत् । उपरि वक्ष्यमाणाघोरयन्त्रे तु अवशिष्टाक्षराणि च विलिखेत् । एवं सर्वत्र यन्त्रन्यायः ॥

पुनः अस्मिन्नेव प्रकृते मातृकायन्त्रे पक्षविशेषोऽस्ति । तत्र षष्ठसप्तमयोर्दळयोः यादिपञ्चकं षादिपञ्चकं चालिख्याष्टमे दळे प्रथमतृतीयपञ्चमपञ्चदशषोडशस्वराक्षराणि पञ्च विलिखेत्, इत्येकेषामाचार्याणां पक्षः । पुनर्बहिश्चतुरश्रं सशूलाग्रं विलिखेत् । तत्र तु यत्र यत्र चतुरश्रलेखनविधिः तत्र सर्वत्रानुक्तेऽपि सशूलाग्रमेव चतुरश्रं विलिखेत् । एवमत्र चतुरश्रं विलिख्य तस्य पूर्वादिदिक्चतुष्टये वमिति, आग्नेयादिकोणचतुष्टये [1]लंकारं उभावप्येवं सबिन्दुकौ विलिखेत् । एवमक्षररूपमम्बुजं साध्यशिरसि स्मृतमुक्तफलदं स्यादिति अस्मिन्यन्त्रे पीठार्चनं कुर्यात् ॥

अथ सकलदेवतासमर्चनासाधारणपीठपूजाविधानमुच्यते —

गुं गुरुभ्यो नमः । गं गणपतये नमः । इति पीठस्य दक्षिणवामयोः समभ्यर्च्य, आधारशक्त्यै०, मूलप्रकृत्यै०, आदिकूर्माय० अनन्ताय०, पृथिव्यै०, क्षीरसमुद्राय०, श्वेतद्वीपाय०, रत्नमण्डपाय०, कल्पकवृक्षाय०, श्वेतच्छत्राय०, सितचामराभ्यां०, रत्नसिंहासनाय०, १२ इत्येतैराधारशक्त्यादिभिः रत्नसिंहासनान्तैर्मन्त्रैः नमोन्तैस्सर्वाधस्तादारभ्य उपर्युपरि क्रमेण पीठमध्ये समर्चयेत् । तत्र [2]विघ्नेशविषये चेत् क्षीरसमुद्रस्थाने इक्षुसमुद्रायेति योजयेत् । शैवादिविषये तदुभयं नास्ति । पुनरपि केवलवैष्णवविषये, श्वेतद्वीपायेति तत्राप्यैश्वर्यप्रधानविषये रत्नद्वीपायेति योजयेत ॥

शैवादिविषये कैलासगिरयें इति योजयेत् । पुनरपि केवलशैवादौ कल्पवृक्षादयश्च न सन्ति । तत्राप्यैश्वर्यप्रधानविषये चेद्यथायोग्यं योजनीयम् । इतरत्सर्वं सर्वदेवतापीठार्चनेपि तुल्यमेव ।

---

१ ठंकारं इति ख – झ पाठः । २ वैघ्नपीठविषये इति ख – झ पाठः ।

पुनः, धर्माय नमः, ज्ञानाय नमः, वैराग्याय नमः, ऐश्वर्याय नमः इत्येतान्पीठपादरूपान् पीठस्य आग्नेयादिकोणेषु समर्चयेत् । तत्र कल्पान्तर-मते, धर्मकन्दाय नमः, ज्ञाननाळाय नमः, वैराग्यकर्णिकायै नमः, ऐश्वर्य-दळेभ्यो नमः, इत्येतस्मिन्मते उपर्युपरि कन्दादीन्यथोचितस्थानेषु समर्चयेत् । पुनरधर्माय, अज्ञानाय, अवैराग्याय, अनैश्वर्याय इत्येतान्पीठस्य फलकरूपान् प्रागादिदिक्षु समर्चयेत् ॥

सं सत्वाय०, रं रजसे०, तं तमसे०, मं मायायै०, विं विद्यायै०, अं अनन्ताय०, पं पद्माय०, अं सूर्यमण्डलाय०, उं सोममण्डलाय०, मं वह्नि-मण्डलाय०, अं आत्मने०, उं अन्तरात्मने०, मं परमात्मने०, ओं ह्रीं ज्ञानात्मने नमः १४ । सं सत्वायेत्याद्यैः ज्ञानात्मने नम इत्यन्तैरास्तरणरूपैर्मन्त्रैः पीठमध्ये समर्चयेत् । तत्र वैष्णवपूजायां (मध्ये) अनन्तः । पुनर्मध्ये अष्टदलपद्मं संचिन्त्य प्रागादिदलेषु कर्णिकायां च नवशक्तयश्च आसनमन्त्रदेवताश्च समर्चनीयाः । क्वचित्क्वचित् आसनमन्त्रो नास्ति । तत्र सर्वत्र केवलपद्मे समर्चयेत् । इतरपीठमन्त्रास्सर्वत्र समाना एव । अयमेव सर्वदेवताविषयेपि पीठार्चनान्यायः । तत्र तु नवशक्त्यासनमन्त्राणामेव सर्वत्र विशेषः । इतरत्सर्वं सकलदेवतापूजाविषयेपि तुल्यमेव । तत्र तु वैष्णवे पीठे समर्चये-दित्युक्ते, तन्नवशक्त्यासनमन्त्रा एव विवक्षिताः । तथा दौर्गे वैनायके सौरादौ सारस्वते च ॥

अथ पुनरत्र मातृकाया नवशक्तय उच्यन्ते— मेधायै, प्रज्ञायै, प्रभायै, विद्यायै, धियै, धृत्यै, स्मृत्यै, बुद्ध्यै, विद्येश्वर्यै, इति ९ नवशक्तयः । ॐ ह्रीं स्वर्णाब्जाय सरस्वत्यासनाय नमः इति पीठमन्त्रः । एतासु अष्टसु केसरेषु अष्टौ शक्तयः । नवमी तु कर्णिकायां देवतास्थाने । एवमेव सर्वत्र नवशक्तिस्थानानि । आसनमन्त्रश्च कर्णिकायामेव ॥

इत्थं पीठं संपूज्य, अस्मिन्मातृकासरस्वतीमूलमन्त्रेण समावाह्य आवरणैस्सह समर्चयेत् । प्रथमं मातृकाषडङ्गैः प्रथमावरणे केसरेषु समर्चयेत् । तत्प्रकारस्तु

तत्र तत्राङ्गन्यासे उक्तं मन्त्रमुच्चार्य हृदयाय नमः, शिरसे नमः, शिखायै नमः, कवचाय नमः, नेत्राभ्यां नमः, अस्त्राय नमः, इत्येवंप्रकारेण चतुर्थ्यन्तत्वेन समर्चयेत् । सर्वत्राङ्गार्चनाविधावेवमेव न्यायः । तत्र हृदयादि-चतुष्टयमाग्नेयादिकोणचतुष्टयकेसरेषु, पुरतो नेत्रं, चतसृषु दिक्षु अस्त्रं समर्चयेत् । क्वचित्क्वचित् अन्यथा । पूर्वादिदिक्षु हृदयादि विदिक्षु अस्त्रम् । यथा वराहादि-विधाने । तन्त्रसमुच्चये तु शैवे आग्नेयैशान्यनैर्ऋत्यादिषु हृदयादि, वैष्णवे प्रागादीति विशेष उक्तः । अङ्गावृतौ सर्वत्रैवमेव स्थाननियमः । तदुक्तं चास्मिन्नेव प्रपञ्चसारे प्राग्दीक्षापटले—'हृदयाद्यश्रिषु पुरतो नेत्रं दिशां क्रमात्पुनरस्त्रं च समर्चये" दिति । पुनरेतासामङ्गदेवतानां रोचींषि उच्यन्ते —

हार-स्फटिक-कलायाऽञ्जन-पिङ्गलवह्निरोचिषो ललनाः ।
अभयवरोद्यतहस्ताः प्रधानतनवोऽङ्गदेवताः कथिताः ॥ इति ॥

क्रमदीपिकायामप्येवमेवोक्तम् —

तेजोरूपास्तद्बहिरङ्गानि च केसरेषु समभियजेत् ।
हुतवहनिर्ऋतिसमीरण शिवदिक्षु हृदादिवर्मपर्यन्तम् ॥

पूर्वादिदिक्ष्वथास्त्रं क्रमेण गन्धादिभिस्सुशुद्धमनाः ।
मुक्तेन्दुकान्तकुवलयहरिनीलहुताशनप्रभाः प्रमदाः ॥

अभयवरस्फुरितकराः प्रसन्नमुख्योङ्गदेवतास्स्मार्याः ॥ इति ॥

तत्र तेजोरूपा इत्यस्य पदस्य पूर्वत्रान्वयः । अत्र पूर्वादिदिङ्नियम उच्यते —

पूज्यपूजकयोर्मध्यं पूर्वमित्यभिधीयते ।
प्रादक्षिण्येन विज्ञेया प्राच्याग्नेयादिकल्पना ॥

यत्रैव भास्वानुदयं प्रयाति प्राचीमिमां वेदविदो वदन्ति ।
मध्ये तथा पूजकपूज्ययोश्च सदागमज्ञाः प्रवदन्ति तां तु ॥

इन्द्रादीनां विकल्पितदिक्क्रमेणैव पूजाक्रमः। न तु यथास्थितदिक्क्रमेण। पुनः अं क ख ग घ ङ आं नमः। इं च छ ज झ ञ ईं नमः। उं ट ठ ड ढ ण ऊं नमः। ऋं त थ द ध न ॠं नमः। ऌं प फ ब भ म ॡं नमः। एं य र ल व ऐं नमः। ओं श ष स ह औं नमः। अं ळ क्ष अः नमः। एतेन सानुस्वारस्वरद्वन्द्वपुटितेन वर्गाष्टकेन द्वितीयावृतिः। पुनः ब्रह्माण्यै, माहेश्वर्यै, कौमार्यै, वैष्णव्यै वाराह्यै, इन्द्राण्यै, चामुण्डायै, इत्येताभिस्तृतीयावृतिः। तत्र मातरः सप्तसंख्याकाः किल। पूजाविषये तु सर्वत्राष्टसंख्याकाः। तस्मादत्राष्टमस्थाने महालक्ष्मीं पूजयेत् महालक्ष्म्यै नमः इति। क्वचित्क्वचिदन्यथा। सौरादिविषये अरुणाय नमः इत्यष्टमे स्थाने। दुर्गाविषये चेत् चण्डिकायै नमः इत्यष्टमी। अन्यत्र सर्वत्राष्टमी तु महालक्ष्मीः। तदुक्तं चास्मिन्नेव प्रबन्धे—

ब्रह्माणी माहेशी कौमारी वैष्णवी च वाराही।
इन्द्राणी चामुण्डा समहालक्ष्मीश्च मातरः प्रोक्ताः॥

इति सर्वत्र मातॄणामष्टमसंख्याकत्वम्। प्रागुक्तं चास्मिन्नेव शास्त्रे त्रिगुणात्मिकायाः शक्तेस्सकाशात् सर्वस्य जगत उत्पत्तिकथनप्रकरणे॥

यदाऽष्टधा सा गुणिता तदा प्रकृतिभेदिनी।
अष्टाक्षरा हि वस्वाशा मातृमूर्त्यादिभेदिनी॥

इत्यष्टसंख्याकानां प्रकृत्यष्टाक्षरादीनां मध्ये मातॄणां परिगणितत्वात्। तत्र मातॄणां वर्णादय उच्यन्ते। ताश्च श्वेताक्षवलयपुस्तकधारिण्यः। ब्रह्माणी, कनकवर्णा अक्षसूत्रकमण्डलुवराभयधरा। शूलपरशुदुन्दुभिकपालधरा माहेश्वरी। अंकुशदण्डखट्वाङ्गपाशधरा कौमारी। चक्रघण्टाकपालशङ्खधरा वैष्णवी। मुसलखड्गखेटाभयधरा वाराही। अंकुशतोमरपाशकुलिशधरा इन्द्राणी। शूलकपालनृशिरःकृपाणधरा चामुण्डा। रक्ताक्षस्रक्बीजपूरकपालपङ्कजधरा महालक्ष्मीः॥

पुनर्व्यापिन्यादिभिश्चतुर्थ्यावृतिः । व्यापिन्यै, पालिन्यै, चापिन्यै क्लेदिन्यै, धारिण्यै, मालिन्यै, हंसिन्यै, शान्त्यै, ८, इत्येतास्तु कलाः युग्मशश्चाष्टवर्गानीति मूलग्रन्थस्थचशब्देन चतुर्थावरणत्वेन सूचिता इति विवरणकारैरुक्तम् ॥

पुनरिन्द्रादिभिः पञ्चमी । इन्द्राय सुराधिपतये कुलिशधराय ऐरावतवाहनाय सरस्वतीपार्षदाय नम इति पूर्वदिशि उक्तविशेषणैस्सहेन्द्रं समर्चयेत् । पुनरग्नये तेजोधिपतये शक्तिधराय मेषवाहनाय सरस्वतीपार्षदाय नमः । यमाय प्रेताधिपतये दण्डधराय महिषवाहनाय सरस्वतीपार्षदाय नमः । निर्ऋतये रक्षोधिपतये खड्गधराय प्रेतवाहनाय सरस्वतीपार्षदाय नमः । वरुणाय जलाधिपतये पाशधराय नक्रवाहनाय सरस्वतीपार्षदाय नमः । वायवे प्राणाधिपतये अंकुशधराय हरिणवाहनाय सरस्वतीपार्षदाय नमः । सोमाय नक्षत्राधिपतये गदाधराय शशवाहनाय सरस्वतीपार्षदाय नमः । ईशानाय विद्याधिपतये त्रिशूलधराय वृषभवाहनाय सरस्वतीपार्षदाय नमः । अनन्ताय नागाधिपतये चक्रधराय कूर्मवाहनाय सरस्वतीपार्षदाय नमः । ब्रह्मणे लोकाधिपतये पद्मधराय हंसवाहनाय सरस्वतीपार्षदाय नमः । एतानिन्द्रादीन् लमादितत्तद्बीजपुरस्सरं उक्तविशेषणैस्सहैव सर्वत्र प्रागादिषु ऊर्ध्वान्तासु दिक्षु समर्चयेत् । यकारादयोऽष्टौ वर्णा वाय्वग्नीन्द्रवरुणेश्वरराक्षसेन्दुप्रेतेशबीजानि भुवनेशीपाशबीजे च । तत्तद्बीजयोगस्तु विवरणकारैरुक्तः । तदुक्तं चास्मिन्नेव कल्पे —

इन्द्राग्नियमनिशाचरवरुणानिलशशिशिवाहिपतिविधयः ।
जात्यधिपहेतिवाहनपरिवारान्ताः क्रमेण यष्टव्याः ॥ इति ॥

तत्र क्वचित्क्वचित् अनन्तान्ता लोकपालाः । अस्मिन् शास्त्रे तु अहिपतिविधय इति विध्यन्तत्वेनोक्ताः । क्रमदीपिकायामप्येवमेवोक्तम् हरिहव्यवाट्तरणिज क्षपा वार्पतिवायु सोमशिव शेष पद्मजान् प्रयजेत् । स्वदिक्ष्वमलधीरिति ॥

तत्र तु सरस्वतीपूजाविषये चेत् सरस्वतीपार्षदायेति योजयेत् । इतरत्र तु तत्तद्देवतापार्षदत्वेन योजयेदिति विशेषः । पुनरेतेषामिन्द्रादीनां रोचींष्युच्यन्ते —

पीतः पिङ्गः कृष्णो धूम्रः श्वेतश्च धूम्रसितशुक्लाः ।
काशारुणाम्बुजाभा लोकेशा वासवादयः प्रोक्ताः ॥

एवं क्रमेण तेषां रोचींषि ध्येयानि । क्रमदीपिकायामप्येवमेवोक्तम् —

कपिशकपिलनीलश्यामलश्वेतधूम्रा-
मलसितशुचिरक्ता वर्णतो वासवाद्याः ।
करकमलविराजत्स्वायुधा दिव्यवेषा
विविधमणिगणस्रक्स्रस्फुरद्भूषणाढ्याः ॥ इति ॥

लोकपालपूजाविधौ सर्वत्रैवमेव न्यायः । पुनस्तत्र तु, यत्रावृतिविधौ इन्द्रादिभिरेवावृत्त्यवसानमुच्यते, इन्द्रादिभिस्तृतीया, इन्द्रादिभिः पञ्चमी इति पञ्चमावरणमीरितम् । इन्द्रादिभिस्सप्तमी इति सप्तमावरणमीरितम् । इत्यादि एवंप्रकारेण । तत्रापि यत्र पुनः इन्द्रादिभिश्चतुर्थी इन्द्रादिभिः षष्ठी इत्येतावदेवोक्त्वा आवरणावसानग्रहणं च न क्रियते, वज्राद्यावरणग्रहणं च न क्रियते, तत्रोभयत्र एतैर्वज्रायुधवाहनपरिषत्पदादिविशेषणैर्विशिष्टानामेवेन्द्रादीनां समर्चितत्वात् वज्रादयः न पृथगावरणे समर्चनीयाः । यत्र पुनरिन्द्रादिभिः पंचमी वज्रादिभिः षष्ठी, इन्द्रादिभिस्सप्तमी वज्रादिभिरष्टमी इत्येवंप्रकारेण वज्राद्यावृतिः पृथगेवोच्यते, तत्र तु सर्वत्र यद्यपि वज्राद्यायुधधृतिविशेषणयुक्ता एवेन्द्रादयः समर्चिताः, तथापि वज्रादयस्तु पृथगावृतौ समर्चनीयाः । तत्प्रकार उच्यते —

वज्राय, शक्त्यै, दण्डाय, खड्गाय, पाशाय, अंकुशाय, गदायै, त्रिशूलाय, चक्राय, नलिनाय, इत्येतानीन्द्रादीनामस्त्राणि प्रागादिक्रमेण समर्चनीयानि । तदुक्तं चास्मिन्नेव कल्पे —

वज्रं शक्तिर्दण्डः खड्गः पाशांकुशौ गदाशूलौ ।
रथचरणनलिनसंज्ञौ प्रोक्तान्यस्त्राणि लोकपालानाम् ॥ इति ॥

क्रमदीपिकायामप्येवमेवोक्तम् —

दम्भोलिशक्त्यभिधदण्डकृपाणपाश-
चण्डांकुशाह्वयगदात्रिशिखारिपद्माः ।
अर्च्या बहिर्निजसुलक्षितमौलियुक्ताः
स्वस्वायुधाभयसमुद्यत पाणिपद्माः ॥ इति ॥

एतेषां रोचींष्युच्यन्ते —

पीतहिमजलदगगनाऽचिरप्रभारक्तकुन्दनीलरुचः ।
*कुरुविन्दारुणवर्णाः प्रोक्तास्स्युर्वर्णतोपि वज्राद्याः ॥ इति ॥

क्रमदीपिकायामुक्तम् —

कनकरजत तोयदाभ्र शङ्खारुण हिम नील जपा प्रवाल भासः ।
क्रमत इति रुचा तु वज्रपूर्वा रुचिरविलेपनवस्त्रमाल्यभूषाः ॥ इति ॥

तैर्वज्रादिभिः पञ्चम्यावृतिः । एवं दिनशो मातृकासरस्वतीं पूजयेत् ॥

अथ सकलदेवतापूजासामन्यक्रमं वक्ष्ये ॥ तत्र पूजा पञ्चविधा । तदुक्तं च मन्त्रदेवताप्रकाशिकायाम् —

अभिगमनमुपादानमिज्या स्वाध्यायो योग इति श्रीपाञ्चरात्रे पञ्चविधमभिहितम् । तत्र अभिगमनं नाम देवतास्थानमागत्य संमार्जनोपलेपनादिनिर्माल्यनिर्हरणादिकरणम् । उपादानं नाम गन्धपुष्पादिपूजासाधनसंपादनम् । इज्या नाम पीठपूजादिकप्रधानदेवतापरिवारदेवतापूजनम् ।

---

* करवन्द इति ख, ग, घ, ङ, च पाठः ।

स्वाध्यायो नाम अर्थानुसन्धानपूर्वकमन्त्रजपसूक्तस्तोत्रपाठनामकीर्तनतत्व-प्रतिपादकशास्त्राभ्यासश्च । योगो नाम देवतास्वरूपं स्वस्वरूपं, देवतामूर्तिरूपं स्वस्य मूर्तिरिति भावना । एवं पञ्चविध*प्रकारपूजानां, सालोक्य-सामीप्य-सारूप्य-सार्ष्टि-सायुज्य-रूपाणि पञ्च फलानि यथाक्रमं भवन्ति इत्येतच्च पाञ्चरात्रेऽभिहितमिति । तत्र प्रथमं प्रागस्मिन्नेव मातृकाविधाने आदौ सामान्येन सकलदेवतासाधारणजपपूजारम्भविधिरुक्तः किल । तेन प्रकारेण स्वासने उपविश्य, सर्वं गुरुगणपतिवन्दनादिकं कृत्वा पूजामारभेत । तत्र प्रथमं तावत् सकलदेवतापूजासाधारणशङ्खपूरणविधिं क्रमदीपिकोक्त-प्रकारेण वक्ष्ये —

आरचय्य भुवि गोमयाम्भसा स्थण्डिलं निजममुत्र विष्टरम् ।
न्यस्य तत्र विहितास्पदोम्भसा शङ्खमस्त्रमनुना विशोधयेत् ॥

तत्र गन्धसुमनोक्षतानथो निक्षिपेत् हृदयमन्त्रमुच्चरन् ।
पूरयेद्विमलपाथसा सुधीरक्षरैः प्रतिगतैश्शिरोन्तिकैः ॥

पीठशङ्खसलिलेषु मन्त्रवित् वह्निवासरनिशाकृतां क्रमात् ।
मण्डलानि विपकश्रवोक्षरैरर्चयेद्वदनपूर्वदीपितैः ॥

तत्र तीर्थमनुनाऽभिवाहयेत् तीर्थमुष्णरुचिमण्डलात्पुनः ।
स्वीयहृत्कमलतो हरिं तथा गालिनीं च शिखया प्रदर्शयेत् ॥

तज्जलं नयनमन्त्रवीक्षितं कर्मणा समवकुण्ठ्य दोर्भुजा ।
मूलमन्त्रसकलीकृतं न्यसेत् अङ्गकैश्च कलयेद्दिशोस्त्रशः ॥

अक्षतादियुतमच्युतीकृतं संस्पृशन् जपतु मन्त्रमष्टशः ।
किञ्चन क्षिपतु वर्धनीजले प्रोक्षयन्निजतनुं ततोऽमुना ॥

त्रिः करेण मनुनाऽखिलं तथा साधनं कुसुमचन्दनादिकम् ।

---

* प्रकार इति घ-मातृकायां न विद्यते ।

शङ्खपूरणविधिस्समीरितो गुप्त एष यजनाग्रणीरिह ॥

गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धु कावेरि जलेऽस्मिन्सन्निधिं कुरु ॥

एष तीर्थमनुः प्रोक्तः दुरितौघनिवारणः ।
कनिष्ठांगुष्ठकौ सक्तौ करयोरितरेतरम् ॥

तर्जनीमध्यमानामास्संहता भुग्नसज्जिताः ।
मुद्रैषा गालिनी प्रोक्ता शङ्खस्योपरि चालिता ॥ इति ॥

'आरचय्य भुवि गोमयाम्भसा स्थण्डिलं निजममुत्र विष्टरं' इत्यादीनां, 'मुद्रैषा चालिनी प्रोक्ता शङ्खस्योपरि चालिता' इत्यन्तानां ग्रन्थानामयमर्थः –

प्रथमं निजासने उपविश्य तत्पुरतो गोमयाम्भसा स्थण्डिलशब्दवाच्यं मण्डलं विलिप्य, पुनर्यद्यद्देवताविषया पूजा तत्तद्देवतामूलमन्त्रस्य ये षडङ्ग-मन्त्राः तेषामन्ते योऽस्त्रमन्त्रः अस्त्राय फडित्यन्तः तेनास्त्रमन्त्रेण शङ्खं प्रक्षाल्य, पुनस्तस्याङ्गस्य हृदयस्थानोक्तेन हृदयाय नम इत्यन्तेन मन्त्रेण शङ्खे गन्धपुष्पाक्षतान् निक्षिप्य, पुनर्मातृकावर्णं प्रतिलोममुच्चार्य तदन्ते पूर्वोक्ताङ्गमन्त्राणां मध्ये शिरस्स्थाने उक्तं शिरसे स्वाहेत्यन्तं मन्त्रमुच्चरन् जलेन शङ्खमापूर्य, पुनर्विषशब्दवाच्येन मकारेण वदनपदवाच्य बिन्दुयुक्तेन मं वह्निमण्डलाय दशकलात्मने नम इत्येवं शङ्खपीठे समभ्यर्च्य, पुनः ककारेण सूचितं मातृकान्यासे शिरस्स्थाने उक्तं अकारं, तदपि वदनपद-वाच्येन बिन्दुना युक्तं वासरकृन्मण्डलपदोत्तरं च अं सूर्यमण्डलाय द्वादश-कलात्मने नमः इत्येवंप्रकारेण शङ्खं समभ्यर्च्य, पुनः श्रवःपदसूचितं मातृकान्यासे श्रोत्रस्थाने उक्तं उकारं, तदपि वदनपदवाच्यं मातृकान्यासे मुखस्थाने वृत्ताकारन्याससूचितं बिन्दुं, तेन बिन्दुना युक्तं निशाकृन्मण्डल-पदोत्तरं च उं सोममण्डलाय षोडशकलात्मने नमः इत्येवंप्रकारेण शङ्खस्थजले समर्चयेत् ॥

गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धु कावेरि जलेऽस्मिन्सन्निधिं कुरु ॥

इत्यनेन तीर्थमन्त्रेण तीर्थमादित्यमण्डलात् शङ्खे समावाह्य, पुनर्हृदयकमलात् विष्णुं च साध्यमन्त्रेण तस्मिन् जले समावाह्य, पुनः पूर्वोक्ताङ्गमन्त्राणां मध्ये शिखायै वषडित्यन्तेन शिखामन्त्रेण गालिनीमुद्रां तस्मिन् जले प्रदर्शयेत् । गालिनीमुद्राप्रकारस्तु —

कनिष्ठाङ्गुष्ठकौ सक्तौ करयोरितरेतरम् ।

इत्याद्युक्तप्रकारः । पुनः पूर्वोक्ताङ्गमन्त्राणां मध्ये नेत्राभ्यां वौषडित्यन्तेन नेत्रमन्त्रेण तज्जलं संवीक्षयेत् । तदुक्तं —

ईक्षणं नेत्रमन्त्रेण न चेन्मूलेन मन्त्रवित् ।

पुनः पूर्वोक्ताङ्गमन्त्राणां मध्ये वर्मस्थाने उक्तेन कवचाय हुं इत्यन्तेन कवचमन्त्रेण तत्तीर्थं हस्तद्वयेन समवकुण्ठ्याधोमुखेन गृहीत-तर्जनीद्वयेन परितो भ्रामणमवकुण्ठनमुद्रा । पुनस्तत्तीर्थस्थदेवतां तत्तन्मूल-मन्त्रव्यापकेन सकलीकृत्य मूलमन्त्रस्याङ्गैः अङ्गन्यासं च कृत्वा, अस्त्राय फडित्यन्तेन दशदिग्बन्धनं कुर्यात् । पुनरक्षतादियुतं अच्युतस्वरूपीकृतं तज्जलं स्पृशन् मूलमन्त्रमष्टवारं जपेत् । पुनस्तज्जलं किञ्चिदुपस्थितवर्धनी-पात्रे *क्षिपेत् । अवशिष्टेन निजतनुं संप्रोक्ष्य पुनरप्यवशिष्टेन तीर्थजलेन त्रिवारं मूलमन्त्रमुच्चरन् गन्धकुसुमादीन् संप्रोक्षयेत् । एवं शङ्खपूरणविधिः सर्वपूजासाधारणोयम् ॥

एवं शङ्खपूरणं कृत्वा पुनस्तद्वर्धनीपात्रस्थजलं शङ्खे किञ्चिद्विक्षिप्य, तेन जलेन प्रथममात्मपूजां कुर्यात् । आत्मस्फूर्त्यर्थं, पुनरावाहनार्थं च ।

---

*क्षिपतु इति ख-घ, च, पाठः ।

तदुक्तं च शिवपूजाकल्पे — ‘नारुद्रो रुद्रमर्चयेत्’ ‘नाविष्णुर्विष्णुमर्चयेत्’ इति । पुनरपि तत्रैवोक्तम् — आत्मपूजां कृत्वा हृदयकमलस्थस्यान्तर्यामिणः अभिव्यक्तिं संपाद्य दीपाद्दीपान्तरमिव अरण्यां मथनेनाभिव्यक्तमग्निमाहव-नीयादाविव हृदयकमलात् प्रतिमादावावाहयेत् ॥ इति ॥

अथात्मपूजाविधिस्तन्त्रसमुच्चयोक्तप्रकारेण लिख्यते —

न्यासक्रमान्निजतनौ प्रयजेत पीठं
हृद्वारिजन्मनि समर्च्य परं महस्तत् ।
त्र्याधारभाञ्ज्यणुमहांसि निरञ्जनांशै-
रिष्ट्वा नयेत् प्रणवतः क्रमवित्तदैक्यम् ॥

आयम्य वायुमणुना सकलीक्रियां च
कृत्वाऽऽसनाद्युपहृती क्रमशः समर्च्य ।
तारोपचारनिजमूलतदक्षराद्यैः
न्यासक्रमादभियजेज्जलगन्धपूर्वैः ॥

मूलेन गन्धरसलिप्ततनुर्मुरारौ
स्वैर्मूर्तिपञ्जरपदेष्वणुभिर्द्विषड्भिः ।
फाले गळेंसयुगळे हृदि पञ्चमन्त्रै-
रीशेनुलिंपतु परेष्विति मूलतोऽथ ॥

मूलेन मूर्ध्नि मनुना निखिलेन पञ्च-
कृत्वः किरीटमनुना च रथाङ्गपाणौ ।
स्थाण्वात्मकेन कुसुमाञ्जलिमीश्वरे च
कृत्वा यजेद्विविधस्रनवरैरथेति ॥

श्वेतारुणक्रमकृतोभयपार्श्वयोगान्
कुर्याद्धरौ द्वितुलसीकरवीरपद्मान् ।

नाभ्यात्मचिन्त्यवधिके षडशेषमङ्ग-
ऽशेषे शिवेर्कयुगपूर्वकमेतदिष्टम् ॥

धूपं च दीपं च समर्प्य तस्मै निवेद्य बुध्या परचित्सुधार्घ्यम् ।
दत्वाऽर्चयित्वा परितोष्य चैनं लयाङ्गनिष्ठं च समादधीत ॥

इत्यात्मपूजायाः [1] समुच्चयेनोक्तो मूलग्रन्थः । अस्य विवरणं । इदानीमात्माराधनमाह न्यासक्रमादिति । हृद्वारिजन्मनि हृत्पद्मे समर्च्य परमं महस्तदिति । प्राक् तस्मिन् परिकल्प्य चेत्यत्र कल्पनामात्रं चेदिहापि कल्पनैव । तत्रावाहनादि कृतं चेदिहापि तत्कर्तव्यं । नात्र विग्रहः, किन्तु तेजोरूपमेवेति । परमं महस्तदिति । यदेवोक्तं मूलमन्त्रेणैव समर्चनं त्र्याधारभाञ्ज्यणुमहांसीति तदेव मान्त्रं महो मूलाधारे हृदये पुनर्भ्रूमध्ये ब्रह्मरन्ध्रे वा तदीयपद्मकर्णिकायां प्रणवांशैरकारादिभिस्तारपुटितैर्नमोन्तैः विहृत्य, तैरेव जलगन्धादिभिः पूजयेत् । पीठपूजायां कृतायां, मूर्तिपूजां कृत्वा तस्यामाधारत्रयमपि शक्त्यंशैर्विभाव्य, पुनर्हृदि मान्त्रं महः पूजनीयम् । क्रमवित्पदेनैतत्सर्वमुक्तं प्रणवतस्तदैक्यं नयेदिति । पुरतः प्रणवमुच्चरन् मूलाधारगतमहसो हृदवधि नीवारशूकाभतयोद्गमनं, तदा तन्महसैकीभावः, ततश्च तदुपर्याधारावधितयोद्गमनं तदा च तद्गतेनैकीभावः, पुनर्द्वादशान्तावधि वा तथोद्गमनं च विभावयेदिति भावः । पुनर्मूलमन्त्रेण त्रिवारं प्राणायामं कृत्वा, देहत्रयव्याप्तिं विभाव्य, व्यापककराङ्गायुधन्यासैः सकलीकुर्यात् ॥

जलगन्धपूर्वैरिति दीपान्तानां ग्रहणम् । तत्र पुष्पानन्तरं किञ्चित्कर्तव्यमस्तीत्याह मूलेनेति । लिप्तेति ॥ मूर्धादि पादान्तं गन्धार्द्रकरतलद्वयेन व्यापकाभिप्रायं मुरारौ स्वैर्द्विषड्भिः अणुभिः मूर्तिपञ्जरपदेष्वनुलिंपत्विति संबन्धः । द्वादशमूर्तिमन्त्राः केशवनारायणादिमन्त्राः । तत्स्थानानि च

१ समुच्चयोक्तः इति ख, ग, घ, च, छ पाठः ।

अलीककुक्ष्योर्हृद्गले इत्याद्युक्तानि । द्वादशार्णवर्णयोगस्तु इहापीष्यते । द्वादशार्णेति वासुदेवद्वादशाक्षरीत्यर्थः । ऊर्ध्वपुण्ड्रानुलेपनं चैतत् ईशे, फाले गलेंसयुगले हृदि पञ्चमन्त्रैरनुलिपत्विति । ईशानादिपञ्चब्रह्माणीह पञ्चमन्त्राः । तिर्यक्पुण्ड्रानुलेपनं चैतत् । यदुक्तं—

आत्मानमभ्यर्च्य सुगन्धपिष्टैरालिप्य पुण्ड्राणि ललाटमध्ये ।
कण्ठे च चांसद्वितये सितेन हृदन्तरे पञ्चपवित्रमन्त्रैः ॥ इति ॥

पुनर्भस्मनिक्षेपोपि कार्यः । [1] तथोक्तम्—

के वक्त्रे हृदि गुह्ये च पादयोर्वदने तथा ।
ईशादिपञ्चमन्त्रैस्तु निक्षिपेत् भस्म मन्त्रितम् ॥

अष्टत्रिंशत्कलास्थानेष्वादराद्वाभिरेव च ।
जप्त्वाग्निहृदयं तेन रक्षार्थं दिक्षु निक्षिपेत् ॥ इति ॥

स्नात्वाचम्य विधानत इत्यनन्तरं चैवं कृत्वा सुगन्धपिष्टैरित्याद्यु[2]क्तेन येन तेन भस्मनैव सर्वं विधाय पुनरपि विधानेनाचम्य सुगृहं प्राप्येत्यादि सर्वं कार्यम् । पुनरिह चैतावद्विधेयमिति । परेष्विति । मूलत इति । हरिहरादिषु एवं गन्धरसालेपनपूर्वकं फालगळादिपञ्चस्थानेषु मूलतोऽनुलिंपत्वित्यर्थः । दुर्गायां हरिवत् । स्कन्दगणपत्योः शिववत् । इतरयोस्तिर्यगूर्ध्वपुण्ड्रविकल्प इति । किरीटमनुना चेति, स्थाण्वात्मकेन मनुना चेत्यत्रापि पञ्चकृत्व इति संबध्यते । स्थाण्वात्मकः स्थाणुमन्त्रः ॥

अथ विविधसूनवरैरिति । यजेदित्यन्वयः । विविधानि सूनवराणि विशिष्टकुसुमानि । इतिशब्दो वक्ष्यमाणप्रकारार्थः । तदेवाह – श्वेतारुणेति । हरौ द्वितुळसीकरवीरपद्मान् नाभ्यात्मचिह्नयवधि कुर्यादित्यन्वयः ।

१. यथोक्त इति ख, ग, घ, च पाठः ।

२. उक्तनयेन भस्मना इति ग, घ, छ पाठः ।

पादतलादिनाभ्यन्तं तुलसीद्वयम् । तदादि हृदयान्तं करवीरद्वयम् । तदादि चिल्लिपर्यन्तं पद्मद्वयं च कुर्यात् ॥

श्वेतारुणक्रमकृतोभयपार्श्वयोगानिति । तेषां तत्कालविशेषणम् । श्वेतारुणक्रमकृत उभयपार्श्वयोगो येषामिति समासः । यथा तुळसीद्वये श्वेततुळसीं पादतळादिनाभ्यन्तं दक्षिणभागे रक्ततुळसीं वामभागे च कुर्यादित्यादि- दक्षिणवामकरयोर्गन्धार्द्रं श्वेतरक्ततुळसीद्वयं पृथगादाय प्रणवोपचारमूलान्ते तुळसीद्वयं समर्पयामि, मूलं चोच्चरन् दक्षिणवामपादतलादितन्नाभ्यन्तं आरोपक्रमेण पूरयित्वा आराधयेदिति । एवं करवीरद्वयं पद्मद्वयमपि । के षडिति । षडिमानि कुसुमानि कुर्यात् । प्राग्विशेषणयोजना । दक्षिणकरे श्वेततुळसीकरवीरपद्मनिचयं वामकरे रक्ततुळसीकरवीरपद्मनिचयं चादाय तेनैव मन्त्रेण चिल्यादिकेशावधि कुर्यादिति भावः ॥

अशेषमङ्गेश इति । अशेषे इति पदं करद्वयेनोच्चावचं कुसुमनिचयमादाय तेनैव मन्त्रेण पादतलादिकेशान्तं आराधयेदिति भावः । श्वेतरक्ततुलस्याद्यसंभवेऽपि तत्तत्प्रतिपत्त्यैव तुलसीमात्रेणाप्येतत्कार्यम् । शिवेर्कयुगपूर्वकमेतदिष्टमिति । तुलसीद्वयस्थाने अर्कद्वयं पुनः करवीरद्वयं पद्मद्वयं च । एवमेतत्पुष्पपूरणमागमविद्भिः इष्टमित्यर्थः । दुर्गायां हरिवत् । स्कन्दविघ्नेश्वरयोः शिववत् । हरिहरे समुच्चयः । शास्तरि विकल्पः ॥

पुष्पेज्या तावदेवमुक्ता । पुनर्धूपादीज्यामाह — धूपं चेति । तारोपचारनिजमूलतदक्षराद्यैरित्यनुवर्तत एव । मुद्रयैव मानमिति बोद्धव्यम् । निवेद्य बुध्या परचित्सुधार्घ्यं दत्वेति ॥ शङ्खे जलं गृहीत्वा, तच्छक्त्या निवेद्यं रसयित्वा संपूज्य मूलेनापीष्ट्वा तत्प्रणवोपचारमूलपूर्वकं सर्वरसमयमर्घ्यं समर्पयामीति, स्वात्मनि देवे तद्धोक्तरि तदमृते तत्तेजसि जुह्वन्निव तच्छिरसि विनियोगधिया समर्पयेदिति भावः ॥ पुनर्मानसपूजां कुर्यात् । अर्चयित्वेति

प्रसन्नपूजोक्ता । परितोष्येति ताम्बूलादिसमर्पणम् । पुष्पाञ्जलिजपस्तुतिप्रणामाद्यपि मनसा शक्तितोऽनुष्ठेयमिति उक्तम् । लयाङ्गनिष्ठं च समादधीतेति । सम्यग्विदध्यादित्यर्थः । ब्रह्मार्पणं प्रसन्नार्घ्यमवसानीयार्घ्यं च कृत्वा लयाङ्गेनात्माराधनं समापयेदिति भावः ॥

एतदुक्तं भवति – सप्तदशपटले गोपालकविधाने वक्ष्यमाणपीठन्यासस्थानेषु निजदेहे पीठमन्त्रैः जलगन्धादिभिः समभ्यर्च्य —

प्रत्यक्चितिं परिजपन् हहहेति मूल-
चक्रादुदस्य परमात्मनि संविलाप्य ।
मन्त्रात्मना परिणमय्य सुधीर्हृदब्ज-
मध्ये सुयोजयतु सादिमनुप्रजापी ॥

सादिमनुरिति प्रणवसहितमूलमन्त्रः ।

तस्यैशलैङ्गिकविराण्मयविग्रहात्म-
भावक्रमात्परिणतिं विधिवद्विधाय ।

हृत्पुण्डरीकेऽर्चनवक्ष्यमाणन्यायेन पद्मादिसमष्टिनिष्ठम् ।
विन्यस्य तस्मिन्परिकल्पयेच्च मातश्चितानन्दघनं महस्तत् ॥

इति मन्त्रोदये प्रोक्तं तन्महः हृत्पद्मे समर्चयेत् । तत्र मन्त्रोदये परिकल्पयेच्चेत्यत्र कल्पनामात्रं चेदिहापि कल्पनैव कर्तव्या । तत्रावाहनादि कृतं चेदिहाप्यावाहनादि कृत्वा समर्चनीयम् ॥

[1]तत्र मूलाधारे हृदये भ्रूमध्ये वा ब्रह्मरन्ध्रे वा तत्तत्पद्मकर्णिकायां स्थानत्रये पीठं संपूज्य, हकाररेफईकाररूपैश्शक्त्यंशैराधारत्रयं संभाव्य, तत्र स्थूलसूक्ष्माखण्डरूपान् यथाक्रमेण तेजोरूपान् ध्यात्वा, अकारउकारमकारैस्तार-

१ पुनः इति ख – ज – मातृकापाठः ।

पुटितैर्नमोन्तैर्विहृत्यन्तैरेव मन्त्रैः पूजयेत् । ॐ अं ॐ नमः । ॐ उं ॐ नमः । ॐ मं ॐ नमः । इति । ततः प्लुतप्रणवमुच्चरन् मूलाधारगतमहसः हृदवधि नीवारशूकाभतयोद्गमनं तदा तन्महसैकीभावं च संभाव्य, ततो हृदयाधारगततेजसः तदुपरिकल्पितभ्रूमध्याधारे वा ब्रह्मरन्ध्राधारे वा तदवधि नीवारशूकाभतयोद्गमनं संभाव्य, तन्महसैकीकृत्य, पुनर्मूलमन्त्रेण त्रिवारं प्राणायामं कृत्वा स्थूलादिमूर्तित्रयस्य ऐक्यं संभाव्य, ततो मूलाधारादारभ्य ब्रह्मरन्ध्रपर्यन्तं दण्डायमानेन तेजोरूपं ध्यात्वा तत्तेजः प्लुतप्रणवेन पूजयेत् । पुनस्तन्महः हृदयकमले संभाव्य, अभीष्टमन्त्रात्मना परिणमय्य, मूलमन्त्रेण प्राणायामत्रयं कृत्वा, मूलमन्त्रेण व्यापकत्रयकरन्यासाङ्गन्यासायुधन्यासैः सकलीकुर्यात् । ततः आसनादिपुष्पान्तान् क्रमेण दत्वा, ॐ नमः अं नमः उं नमः मं नमः ॐ नमः इति समभ्यर्च्य, जितं ते इत्यादि तत्तदुपचारमन्त्रैरभ्यर्च्य, अभीष्टमन्त्रेण चाभ्यर्च्य, अभीष्टमन्त्राक्षरैस्तन्न्यासस्थानेषु समभ्यर्च्याङ्गमन्त्रेण तत्तत्स्थानेषु समभ्यर्च्यायुधानि भूषणानि च समभ्यर्च्य, श्रियै नमः, पुष्ट्यै नमः, इति देवताहृदये समभ्यर्च्य, पुनर्गन्धरसालिप्तहस्ततलद्वयेन मूलमन्त्रं जपन् व्यापकं कृत्वा, गन्धेन द्वादशाक्षरमन्त्रवर्णपूर्वकैः केशवादिद्वादशनामाभिः ललाटादिस्थानेषु ऊर्ध्वपुण्ड्रं धारयेत् ॥

फालोदरहृद्गलकूपतले वामेतरपार्श्वभुजादिगळे ।
वामत्रयपृष्ठककुत्सु तथा मूर्धन्यपि षड्युगवर्णमनुः ॥

इति स्थानानि । पुनर्द्वादशाक्षरमन्त्रं सकलमुक्त्वा त्रयोदशस्थाने शिरसि धारयेत् ॥ शिवविषये ईशानादिपञ्चब्रह्ममन्त्रैः फाले गलेंसयुगळे हृदि भस्मना तिर्यक्पुण्ड्रं कुर्यात् । तदुक्तं च—

आत्मानमभ्यर्च्य सुगन्धपिष्टैः आलिप्य पुण्ड्राणि ललाटमध्ये ।
कण्ठे च चांसद्वितयें सितेन हृदन्तरे पञ्चपवित्रमन्त्रैः ॥ इति ॥

पुनर्भस्मनिक्षेपोऽपि कार्यः । तदुक्तं च—

के वक्त्रे हृदि गुह्ये च पादयोर्वदनेषु च ।
ईशादिपञ्चमन्त्रैस्तु निक्षिपेद्भस्म मन्त्रितम् ॥

अष्टत्रिंशत्कलास्थानेष्वादरात्ताभिरेव च ।
जप्त्वाऽग्निहृदयं तेन रक्षार्थं दिक्षु निक्षिपेत् ॥

अग्निहृदयमिति अग्निरिति भस्म इत्यादिमन्त्रः अग्निबीजं वा ॥ अष्टत्रिंशत्कलाः पञ्चत्रिंशपटले वक्ष्यन्ते ॥ स्नात्वाऽऽचम्य विधानत इत्यनन्तरं चैवं कृत्वा सुगन्धपिष्टेनेत्यादि उक्तनयेन भस्मनैव सर्वं विधाय, पुनरपि विधानेनाचम्य, अमरगृहं प्राप्येत्यादि सर्वं कार्यम् । पुनरिहात्मार्चनाविधावप्येतत् सर्वं कार्यमिति । हरिहरादिषु एवं गन्धरसालेपनपूर्वकं फालादिपञ्चस्थानेषु मूलमन्त्रेणानुलिंपतु । दुर्गायां हरिवत् । स्कन्दगणपत्योः शिववत् । हरिहरे शास्तरि च तिर्यगूर्ध्वपुण्ड्रविकल्प इति । पुनर्मूलमन्त्रेण मूर्ध्नि पञ्चवारं पुष्पाञ्जलिं कुर्यात् । शिवविषये नमोस्तु स्थाणुभूतायेति मूर्ध्नि पञ्चवारं पुष्पाञ्जलिं कुर्यात् ॥

विष्णुविषये किरीटमन्त्रेण मूर्ध्नि पञ्चवारं पुष्पाञ्जलिं कुर्यात् । पुनर्विष्णुविषये श्वेततुलसीं दक्षिणहस्तेन कृष्णतुलसीं वामहस्तेनादाय, मूलमन्त्रमुच्चार्य, तुलसीद्वयं समर्पयामीति पार्श्वद्वयेऽपि पादादिकटिपर्यन्तं संयजेत् । एवं श्वेतकरवीरं दक्षिणहस्तेन रक्तकरवीरं वाहस्तेनादाय मूलमन्त्रमुच्चार्य, करवीरद्वयं समर्पयामीति पार्श्वद्वये कट्यादिकर्णपर्यन्तं यजेत् । एवं श्वेतपद्मं दक्षिणहस्तेन रक्तपद्मं वामहस्तेनादाय मूलमन्त्रमुच्चार्य पद्मद्वयं समर्पयामीति पार्श्वद्वयेपि कण्ठादिब्रह्मरन्ध्रपर्यन्तं संयजेत् । पूर्वोक्तसर्वकुसुमानि हस्ताभ्यामादाय मूलमन्त्रमुच्चार्य पादादिब्रह्मरन्ध्रपर्यन्तं सर्वाङ्गेषु संयजेत् । शिवे तुलसीस्थाने अर्कयुगमिति विशेषः ॥

मूलमन्त्रेण धूपदीपौ मुद्रया दत्वा, मूलमन्त्रमुक्त्वा सर्वरसमयं परचित्सुधार्घ्यं दत्वा, पुनः प्रसन्नपूजां दत्वा, ब्रह्मार्पणं च प्रसन्नार्घ्यं चावसानीयार्घ्यं च दत्वा लयाङ्गं कृत्वा पूजां समाप्य बाह्यपूजामारभेत ॥

एवमात्मानमभ्यर्च्य, गन्धपुष्पादिभिरलंकृत्य, पुनरपि तद्वर्धनीपात्रस्थजलं शंखे किञ्चिद्विक्षिप्य, तेन जलेनास्मिन्नेव पटले प्रागुक्तेन क्रमेण पीठपूजां कुर्यात्। पुनस्तथैव गन्धपङ्केनापि तेनैव पीठमन्त्रेण समर्चयेत्। पुनः पुष्पैश्च समर्चयेत्। पुनस्तान् पीठमन्त्रान् सर्वान् जपन्, धूरसीत्यादि-वक्ष्यमाणमन्त्रं वा जपन्, गन्धादिभिस्समर्चितघण्टां वामकरेण वादयन् धूपं प्रदद्यात्। पुनरेकवारं तूष्णीं जलं दत्वा, धूपमुद्रां च ॐ धूपं कल्पयामीत्यनेन मन्त्रेण प्राङ्मानसपूजोक्तविधिना प्रदर्शयेत्। पुनरपि तेनैव पीठमन्त्रजपेन वा उद्दीप्यस्वेति वक्ष्यमाणदीपमन्त्रजपेन वा दीपं च तथैव घण्टां वादयन् प्रदर्श्य, पुनरपि तूष्णीं जलं दत्वा, दीपमुद्रां च तन्मन्त्रेण प्राक् मानसपूजोक्तविधिना प्रदर्शयेत्। पुनस्तस्मिन्पीठे देवताविग्रहं समभिषिच्य निधाय, एकवारं मूलमन्त्रेण पुष्पमाराध्य केवलं मनुविग्रहरूपं संभाव्य, तस्मिन्देवतां समावाहयेत्। तत्रावाहनविधानमुच्यते।

जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन।
सुब्रह्मण्य नमस्तेऽस्तु नमः पुरुषपूर्वज॥

इत्यन्ते प्रणवपूर्वकं मूलमन्त्रमुच्चरेत्। अनेन मन्त्रेण वैष्णवदेवतां साक्षत-पुष्पहस्त आत्मनः समावाहयेत्। शैवदेवतावाहनं चेत् त्रिवारप्रणवपूर्वकम्,

नमोऽस्तु स्थाणुभूताय ज्योतिर्लिङ्गामृतात्मने।
चतुर्मूर्तिवपुश्छायाभासिताङ्गाय शंभवे॥

इत्यस्य मन्त्रस्यान्ते प्रणवपूर्वकं मूलमन्त्रमुच्चरेत्। अनेन मन्त्रेण समावाहयेत्।

विनायकं चेत् पूर्ववदेव त्रिवारप्रणवपूर्वकं, गणानां त्वा गणपति-मित्यृगन्ते प्रणवपूर्वकं मूलमुच्चरेत्। अनेन मन्त्रेण गणपतिं समावाहयेत्। दौर्गे तामग्निवर्णामित्यृगन्ते मूलमन्त्रमुच्चार्यावाहयेत्। तत्र सर्वत्र मन्त्रान्ते ओं भगवन्नागच्छागच्छ ओं आवाहयामीत्युच्चार्य आत्मन आवाहयेत्। तत्र प्रणवोपचारमूलानां विनियोगस्तन्त्रसमुच्चयोक्तप्रकारेण लिख्यते—

मूर्तिं च तत्र मनुविम्बमयीं प्रकल्प्य
तत्राभिवाहयतु मन्त्रचितिं च मन्त्री ।
तारत्रयं चलनसंग्रहणोल्ग(द्ग)मार्थ-
मुक्तोपचारनुतिकृन्निजहृत्सरोजात् ॥

उन्नीय चेतनकलां विरहय्य बन्धात्
तारेण चात्मनि परे ध्रुवतो विलाप्य ।
मन्त्रात्मना परिणमय्य सुधीः सुसंबु-
ध्यागच्छयुग्ममभिधाय ततोऽञ्जलिस्थे ॥

आवाहयामि मनुना हृतगन्धपुष्प-
तोयेऽवतार्य तनुयादथ मन्त्रमूर्तौ ॥ इति ॥

तत्रवाहनभावनाप्रकारः कल्पान्तरोक्तः कथ्यते ॥ जलगन्धपुष्पाक्षतान् हस्ताञ्जलौ गृहीत्वा स्वहृदयकमलस्थितं देवमञ्जलिमुद्रया सह प्राणवायुमार्गेण भ्रूमध्यमण्डपकृतविश्राणनपूर्वकं ब्रह्मरन्ध्रं नीत्वा हृदयपर्यन्तमवरोप्य प्राणवायुना सह पुष्पाञ्जलावाकृष्य विग्रहमूर्ध्नि देवतामावाहयेत् ॥

तत्रावाहनविषयो मन्त्रदेवताप्रकाशिकायामुक्तः —

स्थण्डिले नित्यमेवं स्यात् प्रतिमायां कृताकृतम् ।
चलायामचलायान्तु सालग्रामशिलासु वा ॥
न कर्तव्यमिहावाहप्रमुखं पूर्वमेव तत् ॥ इति ॥

एवमावाह्यावाहनमुद्राः प्रदर्शयेत् । आवाहनमुद्राप्रकारः कल्पान्तरोक्तप्रकारेण लिख्यते—तत्रावाहनमुद्रा स्थापनीमुद्रा सन्निधापनमुद्रा संरोधिनीमुद्रा संमुखीमुद्रा प्रार्थनीमुद्रा इत्येवं षड्विधा आवाहनमुद्राः । इदानीं तत्प्रकाराः कथ्यन्ते ॥

हस्तौ तु प्राञ्जली कृत्वाऽनामिकामूलपर्वगोः ।
अङ्गुष्ठौ निक्षिपेत्सेयं मुद्रा त्वावाहनी मता ॥

अधोमुखी त्वियं चेत्स्यात्स्थापिनी मुद्रिका मता ।
उच्छ्रितांगुष्ठमुष्ट्योस्तु संयोगस्सन्निधायिनी ॥

अन्तःप्रवेशितांगुष्ठा सैव संरोधिनी मता ।
मुष्टिद्वयस्थितांगुष्ठौ सम्मुखौ तु परस्परम् ॥

संश्लिष्टावुच्छ्रितौ कुर्यात्सेयं सम्मुखमुद्रिका ।
प्रसृतांगुलिकौ हस्तौ मिथश्श्लिष्टौ च सम्मितौ ॥

कुर्यात्स्वहृदये सैव मुद्रा प्रार्थनिसंज्ञिता ।
सर्वासां देवतानां च षण्मुद्राः पूजने स्मृताः ॥ इति ॥

[1]तत्तन्मुद्राप्रदर्शनेन तत्र तत्र आवाहितो भव, स्थापितो भव, सन्निहितो भव, सन्निरुद्धो भव, संमुखो भव, प्रसीद प्रसीद इत्येवमुच्चरेच्च। एवमेव सर्वदेवतावाहनेऽपि इमाः षण्मुद्राः प्रदर्शनीयाः। पुनर्मूलमन्त्रेण त्रिवारं व्याप्य सकलीकृत्य, पुनर्मातृकान्यासः कर्तव्यः। तदुक्तं च क्रमदीपिकायाम् —

समलङ्कृतेऽत्र कुसुमादिभिरप्यभिवाहयेत्परतरं च महः ।
सकलीविधाय कलशस्थममुं हरिमर्णतत्त्वमनुविन्यसनैः ॥ इति ॥

पुनः पञ्चतत्वन्यासं कुर्यात् । तत्प्रकार उच्यते — षों नमः पराय परमेष्ठ्यात्मने वासुदेवाय नमः । यं नमः पराय पुरुषात्मने संकर्षणाय नमः । [2]रां नमः पराय विश्वात्मने प्रद्युम्नाय नमः। वं नमः पराय

---

१ तत्र तत्तन्मुद्राप्रदर्शने आवाहितो भव इति ख-ज-पाठः ।

२ प्रकरणानुरोधेन तत्वानुरोधेन च, रं नमः, लं नमः इत्येव युक्तः पाठः ।

निवृत्त्यात्मने अनिरुद्धाय नमः । लां नमः पराय सर्वात्मने नारायणाय नमः । एतैर्मूर्धास्यहृदयगुह्यपादेषु न्यस्य, पुनः क्ष्रौं नमः पराय कोपतत्त्वात्मने नृसिंहाय नमः । इति देवताविग्रहे व्यापयेत् । तदुक्तं च क्रमदीपिकायाम् —

अथ परमेष्ठिपुमांसौ विश्वनिवृत्ती च सर्व इत्युपनिषदः ।
न्यस्येदाकाशादिस्थानस्थान् पोयरावलार्णकैस्सलवैः ॥

वासुदेवस्संकर्षणः प्रद्युम्नश्चानिरुद्धकः ।
नारायणश्च क्रमशः पारमेष्ठ्यादिभिर्युतः ॥

ततः कोपतत्त्वं क्ष्रौंबीजयुक्तं
नृसिंहं न्यसेत् सर्वगात्रेषु तज्ज्ञः ।
क्रमेणेति तत्त्वात्मको न्यास उक्तः
सुसान्निध्यकृद्विम्बमूर्त्यादिषु स्यात् ॥ इति ॥

शैवतत्त्वं तु हौं नमश्शिवाय शान्त्यतीतात्मने नमः । [1]हैं नमश्शिवाय शान्त्यात्मने नमः । हरूं नमश्शिवाय विद्यात्मने नमः । [2]ह्रीं नमश्शिवाय प्रतिष्ठात्मने नमः । [3]ह्रां नमश्शिवाय निवृत्त्यात्मने नमः । स्थानानि तु वैष्णवतत्त्ववत् । गाणपत्येऽप्येतदेव तत्त्वम् । दौर्गे तु पुनः षौं नमः पराय श्रेष्ठाशक्त्यात्मने नमः । यौं नमः पराय पौरुषीशक्त्यात्मने नमः । रौं नमः पराय विश्वरूपाशक्त्यात्मने नमः । वौं नमः पराय निवृत्तिरूपाशक्त्यात्मने नमः । लौं नमः पराय सर्वरूपाशक्त्यात्मने नमः । इति । पुनः तत्तन्मूलमन्त्रोक्ताक्षरन्यासपदन्यासादींश्च कृत्वा, पुनस्तत्तद्विधानोक्तपञ्चाङ्गं वा षडङ्गन्यासं वा दशाङ्गं वा कुर्यात् ॥ दशाङ्गन्यासप्रकारस्तु उच्यते । तत्तु दशाक्षरीगोपालकमन्त्रेण कुर्यात् । गों हृत् । पीं

१ हौं इति छ पाठः । २ ह्रीं इति ख ज पाठः । ३ ह्रां इति ख-ज पाठः ।

शिरः । जं शिखा । नं कवचं । वं नेत्रं । लं अस्त्रं । भां पार्श्वाभ्यां नमः । यं कटीभ्यां नमः । स्वां पृष्ठाय नमः । हां मूर्ध्ने नमः । इति ॥ तदुक्तं च क्रमदीपिकायाम्—

मन्त्रार्णैर्दशभिरुपेतचन्द्रखण्डै-
रङ्गानां दशकमुदीरितं नमोन्तम् ।
हृच्छीर्षं तदनु[1] शिखातनुत्रमस्त्रं
पार्श्वद्वन्द्वकटिपृष्ठमूर्धयुतम् ॥ इति ॥

पुनः ऋषिच्छन्दोदेवताः कृत्वा, उपचारान् दद्यात् । तत्र षोडशोपचारः दशोपचारः पञ्चोपचारश्चेति त्रिविधाः पूजोपचाराः । तान् क्रमेण वक्ष्ये—

आसनस्वागते सार्घ्यपाद्ये साचमनीयके ।
मधुपर्काचमस्नानवसनाभरणानि च ॥

सगन्धसुमनोधूपदीपनैवेद्यवन्दनान् ।
प्रयोजयेदर्चनायां उपचारास्तु षोडश ॥

अर्घ्यपाद्याचमनकमधुपर्काचमान्यपि ।
गन्धादयो निवेद्यान्ता उपचारा दश क्रमात् ॥

गन्धादिका निवेद्यान्ता पूजा पञ्चोपचारिका ।
सपर्यास्त्रिविधाः प्रोक्ताः तासामेकां समाचरेत् ॥

अथार्घ्याद्युपचाराणां द्रव्यमुच्यते—

गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपाः ।
दूर्वा चेति क्रमादर्घ्यद्रव्याष्टकमुदीरितम् ॥

---

१ वर्मनेत्रमस्त्रं इति ख—ज पाठः । शिखातनुत्रमस्त्रं इत्येव क्रमदीपिकापाठः ।

पाद्यं श्यामाकदूर्वाब्जविष्णुक्रान्ताभिरीरितम् ।
जातीलवङ्गतक्कोलैर्मतमाचमनीयकम् ॥

मधुपर्कं च सक्षौद्रं दधि प्रोक्तं मनीषिभिः ।
शुद्धाभिरद्भिर्विहितं पुनराचमनीयकम् ॥

चन्दनागरुकर्पूरपङ्कं गन्धमिहोच्यते ।
तुलस्यौ पङ्कजे जात्यौ केतक्यौ करवीरकौ ॥

शस्तानि दश पुष्पाणि तथा रक्तोत्पलानि च ।
उत्पलानि च नीलानि कल्हारकुमुदानि च ॥

मालतीकुन्दमन्दारनन्द्यावर्तादिकानि च ।
सुगन्धीनि सुरूपाणि स्वागमोक्तानि यानि च ॥

मुकुलैः पतितैर्म्लानैः जीर्णैर्वा जन्तुदूषितैः ।
आघ्रातैरङ्गसंस्पृष्टैः पर्युषितैश्च नार्चयेत् ॥

सगुग्गुल्वगरूशीरसिताज्यमधुचन्दनैः ।
साराङ्गारविनिक्षिप्तैर्मन्त्री नीचैः प्रधूपयेत् ॥

नीचैरिति । देवताया अधः प्रदेशे इत्यर्थः ।

गोसर्पिषा वा तैलेन वर्त्या च लघुगर्भया ।
दीपितं सुरभि शुद्धं दीपमुच्चैः प्रकल्पयेत् ॥

उच्चैरिति । देवताया उच्चैः प्रदेशे इत्यर्थः ।

[1] सुसितेन सुशुद्धेन पायसेन च सर्पिषा ।
सितोपदंशकदलीदध्याद्यैश्च निवेदयेत् ॥

---

१ शाल्यन्नेन इति युक्तः पाठः ।

एतैर्द्रव्यैरर्घ्यादयो दातव्याः। तत्रार्घ्यं शिरसि। मधुपर्कं मुखे। एवमुपचारान् उक्तैर्द्रव्यैस्साकं भूषणान्तं जलैरेव तत्तद्देवताचतुर्थ्यन्तनमोन्त-पूर्वकं विष्णवे नमः आसनं समर्पयामीत्यादिप्रकारेण दत्वा, पुनर्गन्धाद्युप-चारान् स्वरूपेणैव दद्यात्। तत्प्रकार उच्यते ॥

प्रथमं मूलमन्त्रेण जलैस्त्रिवारं मूलदेवतां समभ्यर्च्य, किरीट-गङ्गाजटादिभूषणायुधाङ्गमन्त्रवर्णान् समभ्यर्च्य, पुनरावृतिमन्त्रैस्तत्तदावृति-देवतामेकैकवारं जलेन समभ्यर्च्य, पुनर्गन्धैश्चापि एवमेव मूलदेवतासमर्चना त्रिवारपूर्वकमावृतीश्च समर्चयेत्। पुनः पुष्पैश्चाप्येवमेव समभ्यर्च्य, पुनर्मूल-मन्त्रपुरस्सरं आवृतिमन्त्रान् सर्वान् जपन् वा धूरसीत्यादि वक्ष्यमाणं मन्त्रं जपन्वा गन्धादिभिस्समर्चितघण्टां वामकरेण वादयन् धूपं प्रदर्शयेत्। पुनस्तथैव सर्वान्मन्त्रान् जपन्वा वक्ष्यमाणदीपमन्त्रं जपन्वा घण्टां वादयन्दीपं च प्रदर्शयेत्। तत्र धूपदीपप्रदर्शनानन्तरमेव तूष्णीमेकैकवारं जलं दत्वा, अस्मिन्नेव पटले प्रागुक्तमानसपूजोक्तप्रकारेण धूपमुद्रां दीपमुद्रां च तत्तन्मन्त्रेण ओं धूपं कल्पयामि ओं दीपं कल्पयामीति प्रदर्शयेत् ॥

अथ क्रमदीपिकोक्तप्रकारेणापि धूपदीपप्रदर्शनप्रकार उच्यते—

सारङ्गैर्धृतविलुलितैर्झर्झरैस्संविकीर्णैः
गुग्गुल्वाद्यैर्घनपरिमलं धूपमापाद्य मन्त्री।
दद्यान्नीचैर्दनुजमथनायापरेणाथ दोष्णा
घण्टां गन्धाक्षतकुसुमकैरर्चितां वादयानः ॥

तद्वद्दीपं सुरभिघृतसंसिक्तकर्पूरवर्त्या
दीप्तं सृष्ट्याद्यतिविशदधीः पद्मपर्यन्तमुच्चैः।
दत्वा पुष्पाञ्जलिमपि विधायार्पयित्वा च पाद्यं
साचामं कल्पयतु विपुलस्वर्णपात्रे निवेद्यम् ॥ इति ॥

एवं धूपदीपौ प्रदर्श्य पुनर्निवेद्यं समर्पयेत् । अथ सकलदेवतानिवेद्यविधिं क्रमदीपिकोक्तप्रकारेण वक्ष्ये—

दत्वा पुष्पाञ्जलिमपि विधायार्पयित्वा च पाद्यं
साचामङ्कल्पयतु विपुलस्वर्णपात्रे निवेद्यम् ।
सुरभितरेण दुग्धहविषा सुसितेन सता
सममुपदंशकैरुचिरहृद्यविचित्ररसैः ॥

दधि नवनीतनूतनसितोपलपूवळिका-
घृतगुळनाळिकेरफलपुष्परसैः ।

पूवळिका अपूपम् ।

अस्त्रोक्षितं तदरिमुद्रिकयाऽभिरक्ष्य
वायव्यतोयपरिशोषितमग्निदोष्णा ।
सन्दह्य वामकरसौधरसाभिपूर्णं
मन्त्रामृतीकृतमथाभिमृशन्प्रजप्यात् ॥

मनुमष्टशः सुरभिमुद्रिकया परिपूर्णमर्चयतु गन्धमुखैः ।
हरिमर्चयेदथ कृतप्रसवाञ्जलिरास्यतोऽस्य विसरेच्च महः ॥

वीतिहोत्रदयितां तमुच्चरन्मूलमन्त्रमथ निक्षिपेज्जलम् ।
अर्चयेत्तदमृतात्मकं हविर्दोर्युजा सकुसुमं समुद्धरन् ॥

निवेदयामि भवते जुषाणेदं हविर्हरे ।
निवेद्यार्पणमन्त्रोयं सर्वार्चासु निजाख्यया ॥

ग्रासमुद्रां वामदोष्णा विकचोत्पलसन्निभाम् ।
प्रदर्शयन्दक्षिणेन प्राणादीनां च दर्शयेत् ॥

स्पृशेत्कनिष्ठोपकनिष्ठिके द्वे स्वांगुष्ठमूर्ध्ना प्रथमेह मुद्रा ।

तथाऽपरा तर्जनिमध्यमे स्यात् अनामिकामध्यमिके च मध्या ॥

अनामिका तर्जनिमध्यमा स्यात्तद्वच्चतुर्थी सकनिष्ठिकास्ताः ।
स्यात्पञ्चमी तद्वदिति प्रदिष्टा प्राणादिमुद्रा निजमन्त्रयुक्ताः ॥

प्राणापानव्यानोदानसमानाः क्रमाच्चतुर्थ्या युक्ताः ।
ताराधारा अपि वध्वन्ताः कृष्णाध्वन एव ते मनवः ॥

ततो निवेद्य मुद्रिकां प्रधानया करद्वये
स्पृशन्ननामिकां निजं मनुं जपन्प्रदर्शयेत् ॥ इति ॥

दत्त्वा पुष्पाञ्जलिमित्यादि निवेद्यविधिग्रन्थानामयमर्थः ॥

तत्र पुष्परसमिति मधु । प्रथमं स्वर्णपात्रे दुग्धहविरादियुक्तं द्रव्यं निधाय, तत्सुदर्शनमन्त्रेण जलेन संप्रोक्ष्य तत्सुदर्शनमुद्रया अस्मिन्नेव पटले उपरि न्यासविधाने वक्ष्यमाणया अभिरक्ष्य, यंयमिति वायुबीजयुक्तेन तोयेन प्रोक्ष्य तदन्नं परिशोष्य, पुनरग्निबीजेन रंरमित्यनेन युक्तेन दोष्णा तत्सन्दह्य वंवमिति सुधाबीजयुक्तेन वामदोष्णा स्पृष्ट्वा जप्त्वा, पुनर्मूलमन्त्रेण अष्टवारं दक्षिणेन स्पृष्ट्वा जप्त्वा पुनस्सुरभिमुद्रां प्रदर्शयेत् । सुरभिमुद्राप्रकार उच्यते—

करयोरंगुलीस्सम्मुखमन्योन्यं व्यत्यस्ताः कृत्वा, वामतर्जन्यग्रं दक्षिणमध्यमाग्रेण वलितमभिमुखं संयोज्य, दक्षिणतर्जन्या वाममध्यमामूलाग्रं संमुखं संयोज्य, वामानामिकाग्रेण वलितं दक्षिणकनिष्ठिकाग्रमभिमुखं संयोज्य, दक्षिणानामिकया वामकनिष्ठिकामामूलाग्रमभिमुखं योजयेत् । एषा सुरभिमुद्रा ॥

"अमृते अमृतोद्भवे अमृतेश्वरि अमृतवर्षिणि अमृतं स्रावय स्रावय स्वाहा" इत्यनेन मन्त्रेण सुरभिमुद्रां प्रदर्श्य, तन्निवेद्यं परिपूर्णं कृत्वा, पुनस्तन्निवेद्यमर्चयतु (यन्) गन्धपुष्पाद्यैः पुनर्हरिमपि पुष्पैस्समभ्यर्च्य हरं वा, तत्तद्विषयानुसारेण पुनरुद्धृतपुष्पहस्तः मूलमन्त्रं स्वाहान्तमुच्चरन् तस्य

देवस्य आस्यात्तेज आनीय निवेद्ये निक्षिपेत्। पुनर्जलं दत्त्वा तदमृतात्मकं हविरर्चयेत्। पुनर्दोर्युजा सगन्धाक्षतं कुसुममुद्धरन् इमं मन्त्रं जपन्, निवेदयामि भवते जुषाणेदं हविर्हरे, इति जपन्, पुष्पेणाराध्य, पश्चान्निवेदयेत्। जुषाणेदं हविर्हरे इत्यत्र तत्तद्देवताख्यया योजयेत्। पुनर्वामदोष्णा ग्रासमुद्रां विकचोत्पलसन्निभां प्रदर्शयन् दक्षिणहस्तेन प्राणाहुतिमुद्राः प्रदर्शयेत्। तत्प्रकार उच्यते—

प्रथमं स्वांगुष्ठाग्रेण कनिष्ठानामिका द्वयाग्रं संस्पृश्य प्राणाहुतिमुद्रा। पुनरंगुष्ठाग्रेण तर्जनीमध्यमाग्रद्वयं संस्पृश्य द्वितीया मुद्रा। पुनरंगुष्ठाग्रेणानामिकामध्यमाग्रद्वयं संस्पृश्य तृतीया मुद्रा। पुनरनामिकामध्यमातर्जनिकाग्रत्रयं अंगुष्ठेन संस्पृश्य चतुर्थी मुद्रा। पुनरंगुष्ठाग्रेण कनिष्ठिकाद्यखिलांगुल्यग्राणि संस्पृश्य पञ्चमी मुद्रा॥

एवं प्राणादिमुद्राभिः प्रणवपूर्वकैः स्वाहान्तैः प्राणापानादिभिः चतुर्थ्यन्तैः ओं प्राणाय स्वाहेत्येवंप्रकारैर्युक्ताभिर्निवेद्यं कृत्वा पुनर्निवेद्य, मुद्रां चांगुष्ठद्वयाग्रेण अनामिकाद्वयमध्यदेशे स्पृशन् निवेद्यं समर्पयामीत्यनेन मन्त्रेण निवेद्यं समर्पयेत्। एवं क्रमदीपिकोक्तनिवेद्यविधिः। सकलदेवतानिवेद्यसाधारणोयम्। तत्र अस्त्रमन्त्रमूलमन्त्रादि सर्वं तत्तद्देवतानुसारेण योजनीयमिति विशेषः॥

एवं निवेद्यं कृत्वा, पुनर्दक्षिणभागे अग्निं समाधाय तत्संस्काररूपमग्निमुखं कृत्वा, तस्मिन्नग्नौ साध्यदेवतां समावाह्य, सिताघृतमिळितेन पयोन्नेन अष्टोत्तरसहस्रं तत्तन्मूलमन्त्रेण प्रणवव्याहृतिपूर्वकं व्याहृतिप्रणवोत्तरं च वैश्वदेवहोमं कृत्वा, वह्निस्थदेवतां पीठस्थदेवतायां संयोज्य, समाप्य च होमं बहिर्बलिं दत्वा, पुनरागत्य पानीयमिदं समर्पयामीति पानीयामृतं दत्वा, पुनः पूर्वं मुखादानीतं तेज अन्नान्मुखे योजयेत्। पुनरपि जलं दत्वा, निर्माल्य-

पुष्पैर्विष्वक्सेनाय निवेद्यशेषं समर्पयेत्। शैवे चेत् चण्डेश्वराय दौर्गे चेत् चण्डिकायै इति विशेषः ॥

एवं समर्प्य पुनरुत्तरतोऽन्नं, विसृज्य पुनर्गण्डूषादीन्समर्पयेत्। गण्डूषमिदं समर्पयामि। दन्तधावनमिदं, जिह्वानिर्लेखनमिदं, गण्डूषमिदं, हस्तमार्जनं इदं पाद्यमाचमनीयं, पुनरास्यशुद्ध्यर्थं एलाशुण्ठीजीरकादिभक्ष्यरूपं मुखवासाख्यं तत्तन्नाम्ना दत्वा, पुनः प्रसन्नपूजां केवलमूलमन्त्रैरेव वा तत्तद्विधानोक्तैरावरणमन्त्रैः सर्वैरेव वा पुनरपि जलगन्धपुष्पधूपदीपैः कुर्यात्। तत्र केवलमूलमन्त्रैः प्रसन्नपूजापक्षे, पूर्वं निवेद्यविधेः प्रागेव विश्वतश्चक्षुरुतेत्यादिकृचा समभ्यर्च्यावरणदेवताः सर्वाश्च प्रधानदेवतायां योजयेदिति विशेषः। पुनः राजोपचारान्समर्पयेत्। तत्कथम्। ताम्बूलक्रमुककर्पूरचूर्णछत्रचामरदर्पणनृत्यगीतवाद्यादीन् तत्तन्नामपूर्वकं समर्पयेत्। तत्र प्रसन्नपूजायाः प्रागेव वा राजोपचारान्कुर्यादिति पक्षविशेषः। एतत्सर्वं क्रमदीपिकायामुक्तं च—

अथ संस्कृते हुतवहेऽमलधी-
रभिवाद्य सम्यगभिपूज्य हरिं।
जुहुयात् सिताघृतेन पयः-
परिसाधितेन सितदीधितिना ॥

अष्टोत्तरं सहस्रं समाप्य होमं पुनर्बलिं दद्यात्।
राशिष्वथ नाथेभ्यो नक्षत्रेभ्यस्ततश्च करणेभ्यः ॥

संपाद्य पानीयसुधां समर्प्य
दत्वाम्भ उद्वास्य मुखाद्द्विरास्यैं।
नैवेद्यमुद्धृत्य निवेद्य विष्वक्-
सेनाय पृथ्वीमुपलिप्य भूयः ॥

गण्डूषदन्तधवनाचमनास्यहस्त-
मृज्यानुलेपमुखवासकमाल्यभूषाः ।
ताम्बूलमप्यभिसमर्प्य सुवाद्यनृत्त-
गीतैस्सुतृप्तमभिपूजयतात्पुरेव ॥

गन्धादिभिस्सपरिवारमथार्घ्यमस्मै
दत्वा विधाय कुसुमाञ्जलिमादरेण ।
[*स्तुत्या प्रणम्य शिरसा चुलुकोदकेन
स्वात्मानमर्पयतु तच्चरणाब्जमूले] इति ॥

तत्र राजोपचारान् सर्वानपि, द्रव्यालाभे जलेनैव समर्पयेत् । तत्तद्द्रव्यलाभे तु तेन तेन द्रव्येणैव समर्पयेत् । तत्र धूपदीपछत्रचामरादिसमर्पणमन्त्राः क्रमेण कथ्यन्ते । तत्र धूपदीपछत्रचामरादिसमर्पणमन्त्राः सर्वदेवताविषयेपि समानाः । रथदीप-पञ्चदीप-स्थालीदीपादयस्तु शैवविषया एव । तत्र प्रथमं धूपप्रदर्शनमन्त्रः उच्यते । धूरसि धूर्व धूर्वन्तमित्यादिना धूपं प्रदर्शयेत् । उद्दीप्यस्व जातवेद इत्यादिश्रिया मा परिपातय इत्यन्तं प्रदीपप्रदर्शनमन्त्रः । अर्चत प्रार्चत इत्यादि अहृणीयमान इत्यन्तं रथदीपप्रदर्शनमन्त्रः । ईशानः सर्वविद्यानामित्यादि पञ्चमन्त्रैः पञ्चवक्त्रेषु पञ्चदीपान्प्रदर्शयेत् । पुनरेतैरेव ईशानादिभिः पञ्चशक्तिदीपान् प्रदर्शयेत् । हिरण्यपात्रं मधोः पूर्णं दधाति इत्यादिना पूर्णकुम्भस्थदीपं प्रदर्शयेत् । ऋषभेण यजामहे इत्यादि जयामसीत्यन्तं वृषभदीपमन्त्रः । नमो अस्तु सर्पेभ्य इत्यृचा सर्पदीपं प्रदर्शयेत् । दूरमस्मच्छत्रवो यन्तु भीताः इत्यादि अभयं नो अस्तु इत्यन्तं छत्रप्रदर्शनमन्त्रः । राजाधिराजायेत्यादि महाराजाय नमः इत्यन्तं चामरमन्त्रः । वायुस्तामग्रे इत्यृक् व्यजनमन्त्रः । मूर्धानं

*अयमुत्तरार्धः क्रमदीपिकायां विद्यते । एकस्यामपि मातृकायां न दृश्यते ।

दिवो अरतिं इति दर्पणमन्त्रः । त्र्यम्बकमिति ऋक् भस्मना व्यापकमन्त्रः । बृहत्साम क्षत्रभृत् इत्यृक् भस्मधारणमन्त्रः । त्वमग्ने रुद्रो असुरो महो दिव इत्यादिसूक्तैश्च, यो देवानामित्यादिसूक्तैश्च मन्त्रपुष्पं दद्यात् ॥

ईश्वरीविषये चेत् देवीं वाचमजनयन्त देवाः इत्यादिसूक्तैः मन्त्रपुष्पं दद्यात् ॥ विष्णुविषये चेत् चरणं पवित्रं विततं पुराणं इत्यादिसूक्तैः मन्त्रपुष्पं दद्यात् ॥ पुनः किरीटमन्त्रेण च पञ्चपुष्पाञ्जलिमन्त्रेण च पञ्चीकरणमन्त्रेण तत्तन्मूलमन्त्रेण च पुष्पाञ्जलिं कुर्यात् ॥ ते किरीटादिमन्त्राः क्रमेण लिख्यन्ते — ॐ नमो भगवते वासुदेवाय किरीटकेयूरहारमकरकुण्डलालंकृत शङ्खचक्रगदाब्जहस्त पीताम्बरधर श्रीवत्साङ्कितवक्षस्स्थल श्रीभूमिसहित स्वात्मज्योतिर्द्वयदीप्तिकराय सहस्रादित्यतेजसे परमात्मने नम इति किरीटमन्त्रः ॥

अथ पञ्चपुष्पाञ्जलिमन्त्रः — ॐ अं ॐ रजोपाधये स्थूलविराट्शरीराय विश्ववैश्वानरात्मने सर्वजगत्स्रष्ट्रे ब्रह्मणे सरस्वतीसहिताय सर्वज्ञाय सदात्मने असङ्गाखण्डाद्वयापरोक्षसंविदे नमो नारायणाय नमः शिवाय परमात्मने नमः ॥

ओं उं ओं सत्वोपाधये सूक्ष्महिरण्यगर्भशरीराय तैजससूत्रात्मने सर्वजगत्पालकाय विष्णवे लक्ष्मीसहिताय सर्वज्ञाय चिदात्मने असङ्गाखण्डाद्वयापरोक्षसंविदे नमो न.रायणाय नमः शिवाय परमात्मने नमः ॥

ओं मं ओं तमोपाधये सौषुप्तज्ञानशरीराय प्राज्ञेश्वरात्मने सर्वजगत्संहर्त्रे रुद्राय उमासहिताय, सर्वज्ञायानन्दात्मने असङ्गाखण्डाद्वयापरोक्षसंविदे नमो नारायणाय नमः शिवाय परमात्मने नमः ॥

ॐ ॐ ॐ गुणत्रयोपाधये व्याकृताव्याकृतशरीराय प्रत्यक्ब्रह्मात्मने

सर्वोत्पत्तिस्थितिसंहारकर्त्रे सर्वेश्वराय मूलप्रकृतिमायासहिताय सर्वज्ञाय सच्चिदानन्दात्मने असङ्गाखण्डाद्वयापरोक्षसंविदे नमो नारायणाय नमः शिवाय परमात्मने नमः ॥

ॐ निरवद्यनिर्गुणाशीर्या(तीत)शरीरायासङ्गप्रत्यगद्वयाय स्वभासावभासितकृत्स्नायासङ्गबोधाय सच्चिदानन्दानन्तात्मने असङ्गाखण्डाद्वयापरोक्षसंविदे स्वबोधध्वस्ताखिलानर्थव्राताय निरालंबनविंबायाहीनमहोदयाय नमो नारायणाय नमः शिवाय परात्मने नमः । इत्येवं पञ्चपुष्पाञ्जलिमन्त्रः ॥

अथ पञ्चीकरणपुष्पाञ्जलिमन्त्रः कथ्यते — ॐ पञ्चीकृतपञ्चमहाभूतानि तत्कार्यं स्थूलविराट्शरीरं तदभिमानिनं विश्वात्मानं च जलोपहाररूपेणाकारवाच्ये ब्रह्मण्युपसंहृत्य तमपि, तल्लक्ष्ये परब्रह्मण्योंतत्सन्नारायणाय परमात्मने नमः । ॐ अपञ्चीकृतपञ्चमहाभूतानि तत्कार्यं सूक्ष्महिरण्यगर्भशरीरं तदभिमानिनं तैजससूत्रात्मानं च गन्धोपहाररूपेण उकारवाच्ये विष्णावुपसंहृत्य, तमपीत्यादि नमः इत्यन्तम् । ॐ भगवन् पुष्पोपहाररूपेण मकारवाच्ये रुद्रे उपसंहृत्य तमपीत्यादि नमः इत्यन्तम् । ॐ भगवन् धूपोपहाररूपेण बिन्दुवाच्ये ईश्वरे उपसंहृत्य, तमपीत्यादि नमः इत्यन्तम् । ॐ भगवन् दीपोपहारात्मना सुकृतं दुष्कृतं तत्सर्वं दीपोपहाररूपेण नादवाच्ये सदाशिवे उपसंहृत्य, तमपीत्यादि नमः इत्यन्तम् । ॐ नैवेद्योपहारात्मना सुकृतं दुष्कृतं सर्वं नैवेद्योपहाररूपेण शक्तिवाच्यभूतायां परसंविदि परशक्तावुपसंहृत्य, तामपीत्यादि नमः इत्यन्तम् । ॐ तमप्यखण्डास्पदे परमेश्वरे उपसंहृत्य, तमपि तल्लक्ष्ये परब्रह्मण्यों तत्सत् नारायणाय परमात्मने नमः । एवं सप्तभिः पञ्चीकरणमन्त्रैः पुष्पाञ्जलिं कुर्यात् ॥

अथ पुष्पाञ्जलिमन्त्रप्रसङ्गात् पुष्पाञ्जल्यर्थं सालिग्राममन्त्रोऽपि लिख्यते—

साध्यनारायण ऋषिः। अनुष्टुप्छन्दः लक्ष्मीनारायणो देवता। श्रीं बीजम्। ह्रीं शक्तिः। सौः कीलकम्। मम सर्वाभीष्टे विनियोगः। ॐ नमो भगवते हृत्। विष्णवे शिरः। सालिग्रामनिवासिने शिखा। सर्वाभीष्टफलप्रदाय कवचम्। सकलदुरितनिवारिणे नेत्रम्। सालिग्रामाय स्वाहा अस्त्रम्॥ ध्यानम्—

तुल्यप्रभं तपनकोटिभिरब्जचक्र-
कौमोदकीदरविराजितपाणिपद्मम्।
लक्ष्मीमहीसहितमात्तविचित्रभूषं
नारायणं कपिशवाससमाश्रयामि॥

ॐ नमो भगवते विष्णवे श्रीसालिग्रामनिवासिने सर्वाभीष्टफलप्रदाय सकलदुरितनिवारिणे सालिग्रामाय स्वाहा इति मन्त्रः॥ अनेनापि सालिग्राम-मन्त्रेण सर्ववैष्णवजपपूजादिषु पुष्पाञ्जलिश्च दशांशं जपश्च कर्तव्यः तत्तन्मन्त्र-सान्निध्यार्थम्। एवमुक्तैर्मन्त्रैः पुष्पाञ्जलिं कृत्वा स्तुत्वा प्रागुपदेशविधावुक्तेन प्रकारेण अष्टाङ्गादिनमस्कारं कृत्वा, प्रसन्नार्घ्यमिदं समर्पयामीति प्रसन्नार्घ्यं दत्वा पुनश्चुलुकोदकेन स्वात्मानमर्पयतु तच्चरणाब्जमूले। चुलुकोदकमन्त्रस्तु—इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतः जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत् स्मृतं यदुक्तं यत्कृतं तत्सर्वं ब्रह्मार्पणं भवतु स्वाहा। मां मदीयं च सकलं अस्मत्स्वामिने हरये सम्यगर्पये ॐ तत्सदिति। तत्र हरये इत्यत्र तत्तद्देवतानुसारेण योजनीयम्॥

एवं चुलुकोदकं दत्वा, अग्नेर्मन्व इत्यृचा, यज्ञेन यज्ञमित्यृचा च सजलं शङ्खं नीराज्य, तज्जलेन,

शङ्खमध्यस्थितं तोयं भ्रामितं केशवोपरि।

अङ्गलग्नं मनुष्याणां ब्रह्महत्यायुतं दहेत् ॥

इति मन्त्रेणात्मानं संप्रोक्ष्य,

अकालमृत्युहरणं सर्वव्याधिविनाशनम् ।
सर्वपापक्षयकरं विष्णुपादोदकं शुभम् ॥

इति तीर्थं स्वीकृत्य विभूतितुलस्यादिप्रसादं स्वीकृत्यावसानार्घ्यं समर्पयामीत्यवसानार्घ्यं दत्वा, पुनर्देवतायां लयाङ्गाख्यांगऋष्यादिकं कृत्वा, पुनस्सगन्धपुष्पहस्तः पूर्वोक्तावाहनमन्त्रमुक्त्वा तदन्ते भगवन् क्षमस्व ॐ भगवन्तमुद्वासयामि इति स्वात्मन्युद्वास्य, स्वस्य चाङ्गऋष्यादिकं न्यसेत् । एवं पूजासामान्यक्रमः ॥

अथ मातृकामन्त्रस्य प्रयोगविधिं वक्ष्ये —

वर्गस्वरयाद्यंशाः क्रमेण कलधौतरजतताम्राः स्युः ।
इति रचितं रुचकमिदं साधकसर्वार्थदायि सततं स्यात् ॥

अस्यार्थः — वर्गस्वरयाद्यंशा इति । वर्गांशाः स्वरांशा याद्यंशा इति । एतदुक्तं भवति — वर्गांश इत्यनेन कादिवर्गस्य सूर्यात्मकत्वात् आदित्यांश इत्यर्थः । तेन द्वादशकलात्मकत्वात् सूर्यस्य द्वादशांशं सूर्यात्मकं हिरण्यमुक्तम् । स्वरांशस्य चान्द्रमसत्वात् चन्द्रमसः षोडशकलात्मकत्वात् षोडशांशं चन्द्रात्मकं रजतमुक्तम् । यादिवर्गस्य वन्ह्यात्मकत्वात् वह्नेर्दशकलात्मकत्वात् दशांशं वन्ह्यात्मकं ताम्रमुक्तम् । तत्र पणस्य षोडशांशमंश इत्युच्यते । एवं द्वादशांशं हिरण्यं षोडशांशं रजतं दशांशं ताम्रं च एकीकृत्य रचितांगुलीयकमभिषेककलशेषु निधापनमंगुलीषु धारणं च उक्तफलदायीति ॥

**प्रयोगान्तरम्** —

त्रिवारमम्भः परिजप्तमेतया
पिबेद्दिनादावपि विद्यया सुधीः ।

अनेन मूकोपि कवित्वगर्वितः
परां च कीर्तिं लभतेऽर्कमासतः ॥ इति ॥

एतया मातृकयेत्यर्थः । अस्त्यत्रोपदेशः — स्वयं देवताविग्रहो भूत्वा लिपिपद्मे जलमादाय ऐं क्लीं सौः अं वद वद वाग्वादिनी स्वाहा आं सौः क्लीं ऐं एवं एकैकवर्णवृध्द्या आकारादि क्षकारान्तं सबिन्दुकं जपित्वा, क्षकाराद्यकारान्तं विसर्गान्तं जप्त्वा सबिन्दुविसर्गं आदिक्षान्तं जपित्वा पिबन्, बडवाकारकुक्षावष्टदळपत्रेषु वर्णानां दीपशिखावत् दीप्तिं ध्यायन् त्रिवारं दिनशः संवत्सरपर्यन्तं पिबेदित्यर्थः ॥

**प्रयोगान्तरम् —**

कमलोद्भवौषधिरसे वचया पयसा च पक्वमथ सर्पिरपि ।
अयुताभिजप्तमनुना दिनशो लिहतां कविर्भवति वत्सरतः ॥

कमलोद्भवौषधिः ब्राह्मी । वचा वेखण्ड । अस्यार्थः — ब्राह्मीरसे स्वसमानं क्षीरं च सर्पिश्च स्वचतुर्थांशां वचां च निष्पीड्य, त्रिभिर्दिनैः कथनपाकसिध्दं सर्पिरनया मातृकया अयुतसंख्यमभिजप्तं प्रतिदिनं मात्रया लिहतां संवत्सरात् कवित्वसिध्दिः ॥

**प्रयोगान्तरम् —**

वर्णौषध्या श्रिताभिः कलशममलधीरद्भिरापूरयित्वा
प्रातस्तेनाभिषिञ्चेत् दशशतपरिजप्तेन यं वापि मासम् ।
सः स्यान्मेधेन्दिरायुः प्रशमकवियशोविश्वसंवादयुक्तो
नारी वन्ध्यापि नानागुणगणनिलयं पुत्रवर्यं प्रसूते ॥

अस्यार्थः — अत्रैव वक्ष्यमाणाभिः पञ्चाशद्वर्णौषधिभिः क्वथितकषायजलेन वा केवलं निष्पीड्य तद्रसेन वा कलशमापूर्य मातृकाविधानेन

संपूज्य सहस्रसंख्यं मातृकां जप्त्वा, तेन कलशेन दिनशो मासपर्यन्तं यं कंचित् पुरुषमभिषिञ्चेत् स उक्तफलवान् स्यात्। नारी चेत् साप्युक्तफलवती स्यात् ॥

अथ वर्णौषधीनां नामान्युच्यन्ते -- तानि तु अस्मिन्नेव शास्त्रे प्राक् तृतीयपटले उक्तानि। योग्यतावशादत्रैवाकृष्य लिख्यन्ते --

चन्दन-कुचन्दना-गरु-कर्पूरो-शीर-रोग-जल-घुसृणाः ।
तक्कोल-जाति-मांसी-मुर-चोर-ग्रन्थि-रोचना-पत्राः ॥

पिप्पल-बिल्व-गुहारुग तृणक-लवङ्गाह्व-कुम्भि-वन्दिन्यः ।
सोदुम्बरि-काश्मरिका-स्थिराब्ज-दरपुष्पिका-मयूरशिखाः ॥

प्लक्षा-ग्निमन्थ-सिह्मी-कुशाह्व-दर्भाश्च-कृष्णदरपुष्पी ।
रोहिण-डुण्डुक-बृहती-पाटलि-चित्रा-तुलस्य-पामार्गाः ॥

शतमखलता-द्विरेफौ-विष्णुक्रान्ती-मुसल्य-थाञ्जलिनी ।
दूर्वा-श्रीदेवि-सहे तथैव लक्ष्मी सदाभद्रे ॥

आदीनामिति कथिता वर्णानां क्रमवशादथौषधयः ।
गुलिका कषाय भसित प्रभेदतो निखिलसिद्धिदायिन्यः ॥

एतासामोषधीनां नामानि तत्तद्देशभाषया गुरुमुखादेव श्रोतव्यानि। तथाप्यत्रात्यन्ताप्रसिद्धानां नामानि लोकप्रसिद्धपर्यायनामभिरुच्यन्ते ॥

तत्र कुचन्दनं रक्तचन्दनम्। रोगः-कुष्ठम्। उशीरं-प्रसारिणी। जलं-ह्रबेरम् (ह्रीबेरं) घुसृणं-कुंकुमम्। ग्रन्थीति-ग्रन्थिपर्णी। रोचनेति-गोरोचना। पत्रेति-तमालपत्रम्। पिप्पलः अश्वत्थः। रोहिणः-वटः। चित्रेति-वह्निः। द्विरेफः-मधुपाख्यः। मुसलीति वाराहि-निलप्पनाख्यः। सिह्मी-कृङ्गणी। तत्र आदीना-

मिति अकारादीनामित्यर्थः। तत्र ककारषकारयोः प्रागेव कथितौषधत्वात् क्षकारे पृथक् नाङ्गीकृतः। एतदुक्तं भवति। उपर्यस्मिन् तन्त्रे ये ये मन्त्रा उपदिष्टाः तेषां तेषां तत्तद्वर्णौषधानि तत्तदक्षरसंख्यामानेन संगृह्य गुलिका-कषायभसितभेदैः अभिषेकधारणादीनि कुर्यात् ॥

अथैतासामेव वर्णौषधीनां नामानि स्वरूपेणापि लिख्यन्ते —

चन्दनमिति-शुद्धचन्दनम्। कुचन्दनमिति-रक्तचन्दनम्। अगरु इति-कृष्णागरु। कर्पूरमिति-कापूर। उशीरमिति-वाला। रोग इति-कोष्ठम्। जलमिति-काला वाला। घुसृणमिति-कुंकुमकेसरम्। तक्कोलमिति-तक्कोलपि। जातिरिति-जायफल। मांसीति-जटामांसी। मुरमिति-दवना। मुरमिति-मुर-संज्ञमेव वा। चोर इति-अम्बे हळेदे। ग्रन्थीति-पिप्पलिमूल। रोचनेति-गोरोचनम्। पत्र इति-पत्रि। पिप्पलमिति-अश्वत्थम्। बिल्वमिति-तत्संज्ञमेव। गुहारुण इति-तिर्वाटपिशिन्। तृणकमिति-कावटं पिल्लु। लवङ्गमिति-लवङ्गा। कुम्भिवन्दिनीति-आनेवणके। सोदुम्बरेति-उदुम्बर। काश्मरीति-शिरुकुमुल। स्थिराब्जमिति-वोरदलातामरे। दरपुष्पीति-शङ्ख कुपी। मयूरशिखेति-तत्संज्ञक-मूलिकाविशेषः। प्लक्ष इति-इत्तिल। अग्निमन्थेति मुन्ने। सिह्मीति-कण्डङ्-कत्तरी। कुशेति-काशदर्भ। दर्भेति-दर्भ। कृष्णदरपुष्पेति-करुप्पुकाक्कणंपु। रोहिणमिति-वट। डुण्डुकमिति-वाधे। बृहतीति-डोर्लि। पाटलीति-पादरी। चित्रेति-कोडिवेलि अथवा एरण्डपत्रम्। तुलसीति-प्रसिद्धतुलसी। आपामार्ग-मिति-आवाडा। शतमखलतेति-मोडकोत्तान्। द्विरेफेति करुशारंकन्नि। विष्णु-क्रान्तीति-तत्संज्ञमेव। मुसलीति-नेलपने। अञ्जलिनीति-वरलसुमडिल। दूर्वेति-दूर्वा। श्रीदेवीति-श्रीदेवियार् शङ्कळनीर्। सह इति-एलताणि पूण्डु। लक्ष्मीति-नलतालि। सदाभद्रेति-शिरुपीलै ॥

अथ मातृकायाः प्रयोगान्तरम् —

आधारोद्यच्छक्तिबिन्दूत्थिताया
वक्त्रे मूर्धेन्दुं ग्रसन्त्याः प्रभायाः ।
क्षाद्यान्तार्णान् पालयेद्वह्निसोम-
प्रोतां मन्त्री मुच्यते रोगजातैः ॥

अस्यार्थः — मूलाधारे जपाकुसुमसंकाशस्फुरत्ताराकारं ह्रींकारं विचिन्त्य तस्मात्कर्णनादसमस्वरद्योतनानादमुत्थाप्य, सौषुम्नेन वर्त्मना सूक्ष्मविसतन्तुनिभं अलक्तकं तन्नादं द्वादशान्तं नीत्वा तत्प्रभावेन द्रुतबहुलसुधासारमयं क्षकाराब्जबिम्बमध्यगतमाग्नेयेन मण्डलेनापि बाह्यतो वेष्टितं निश्चलं मुक्ताफलसदृक्षं शाक्तेयतेजसा सूच्येव मध्यतः प्रोतं अमन्दं निष्पन्दमानं मूलाधारे शाक्तेयबिन्दुसन्दष्टं संस्थाप्य, पुनस्तद्वद्दलाकारं च हकाराद्यकारान्तानपि सर्वान् क्रमेण मौक्तिकमालामिवाक्षरमयीं मालामवस्थाप्य क्रमेण पुनरकारादीन् पकारान्तान्वर्णान् वर्धमानान् संचिन्त्य मातृकां जपेत् । एवं प्रतिलोमानुलोमजपतः मृत्युसंव्याप्यमानं निजं शरीरं बाह्यतश्चाग्निना वेष्टितं अमृताब्धिमध्यस्थं ध्यायेदिति ॥

प्रयोगान्तरम् —

कलाः कलानादभवावदन्त्यजा
कचादिवर्णानुभवाष्टतादिकान् ।
पयादिकान् माक्षरजाश्च बिन्दुजाः
क्रमादनन्तावधिकास्तु षादिकान् ॥

कुर्यात्कलाभिराभिर्मन्त्री दिनशस्तनौ तथा न्यासम् ।
सान्निध्यकृत्स मर्त्यः प्रतिमाकलशादिषु प्रविज्ञेयः ॥

अनेन श्लोकद्वयेन प्रणवकलान्यास उक्तः । तत्र कलाः कला इत्यत्र प्रथमकलाशब्देन अकारादिषोडशस्वरकला उक्ताः । द्वितीयकलाशब्देन वर्ण-

शक्तिभूताः प्रणवस्य नादकलाः षोडश उक्ताः। अजा इत्यनेन प्रणवस्य अकारकला दश उक्ताः। उभवा इत्यनेन प्रणवस्य उकारकला दश उक्ताः। माक्षरजा इत्यनेन प्रणवस्य मकारकला दश उक्ताः। बिन्दुजा इत्यनेन प्रणवस्य बिन्दुकलाश्चतस्र उक्ताः। अनन्तावधिकाः इत्यनेन पूर्वोक्तनादकलायाः षोडशसंख्याकायाः अन्त्यां कलां "अनन्तायै नमः" इत्येतां कलां पुनरप्यन्तवर्णेन क्षकारेण सह योजयेत् इत्यर्थः॥

अस्त्यत्रोपदेशः – प्रथमं सबिन्दुकषोडशस्वरवर्णैकैकपूर्वकं नादकलाभिः षोडशभिः प्राक्प्रोक्तमातृकान्यासस्थानेषु न्यस्त्वा, पुनः कवर्गचवर्गवर्णैकैकपूर्वकं प्रणवस्याऽकारकला दशमातृकान्यासोक्तस्थानेषु न्यस्त्वा, पुनः टवर्गतवर्गवर्णैकैकपूर्वकं प्रणवस्य उकारकला दश, पुनः पवर्गयादिपञ्चवर्णपूर्वकं प्रणवस्य मकारकला दश, पुनः षादिवर्णचतुष्टयपूर्वकं प्रणवस्य बिन्दुकलाश्चतस्रः, पुनः अन्त्यवर्णपूर्वकं अनन्तायै नमः इतीमां कलां च न्यसेत्। एवं मातृकान्यासोक्तस्थानेषु न्यसेदिति॥

अथ प्रणवकला उच्यन्ते— सृष्ट्यै ऋध्यै स्मृत्यै मेधायै कान्त्यै लक्ष्म्यै द्युत्यै स्थिरायै स्थित्यै सिध्यै इमा अकारोत्था दशकलाः। जरायै पालिन्यै शान्त्यै ऐश्वर्यै रत्यै कामिकायै वरदायै आह्लादिन्यै प्रीत्यै दीर्घायै इमा उकारकला दश। तीक्ष्णायै रौद्र्यै भयायै निद्रायै तन्द्र्यै क्षुधायै क्रोधिन्यै क्रियायै उत्कार्यै मृत्यवे इमा मकारजा दशकलाः। पीतायै श्वेतायै अरुणायै असितायै इमा इन्दुकलाश्चतस्रः। निवृत्त्यै प्रतिष्ठायै विद्यायै शान्त्यै इन्धिकायै दीपिकायै रेचिकायै मोचिकायै परायै सूक्ष्मायै सूक्ष्मामृतायै ज्ञानामृतायै आप्यायिन्यै व्यापिन्यै व्योमरूपायै अनन्तायै इमा नादजाः षोडशकलाः। इत्थं प्रणवकलाः॥ एताभिर्मातृकावर्णपूर्विकाभिः उक्तक्रमेण न्यसेत्॥

पुनरपि न्यासविशेषः—

सिन्दूरकाञ्चनसमोभयभागमर्ध-
नारीश्वरं गिरिसुताहरभूषचिह्नम् ।
पाशाभयाक्षवलयेष्टदहस्तमेनं
स्मृत्वा न्यसेत्सकलवाञ्छितवस्तुसिद्ध्यै ॥

एवं ध्यात्वा श्रीकण्ठादिभिर्नामभिः पूर्णोदर्यादिशक्तिसहितैः सबिन्दुकमातृकावर्णैः एकैकपूर्वकैश्च अं श्रीकण्ठाय पूर्णोदर्यै नमः इत्येवमादिभिर्मातृकास्थानेषु न्यसेत् । तत्र श्रीकण्ठादयश्च पूर्णोदर्यादिशक्तयश्चात्र वक्ष्यन्ते —

श्रीकण्ठाय अनन्ताय सूक्ष्माय त्रिमूर्तये अमरेश्वराय अर्घीशाय भारभूतये अतिथये स्थाणवे हराय झण्टीशाय भौतिकाय सद्योजाताय अनुग्रहेश्वराय अक्रूराय महासेनाय क्रोधीशाय चण्डेशाय पञ्चान्तकाय शिवोत्तमाय एकरुद्राय कूर्माय एकनेत्राय चतुराननाय अजेशाय शर्वाय सोमेश्वराय लाङ्गलिने दारुकाय अर्धनारीश्वराय उमाकान्ताय आषाढिने दण्डिने अत्रये मीनाय मेषाय लोहिताय शिखिने छगलण्डाय द्विरण्डाय महाकालाय कपालिने भुजङ्गेशाय पिनाकिने खड्गीशाय बकाय श्वेताय भृगवे लकुलीशाय शिवाय संवर्तकाय, ५१. इत्थं श्रीकण्ठादयो मूर्तयः ॥

अथ पूर्णोदर्यादयः शक्तय उच्यन्ते — पूर्णोदर्यै विरजायै शाल्मल्यै लोलाक्ष्यै वर्तुलाक्ष्यै दीर्घघोणायै सुदीर्घायै सुमुख्यै दीर्घजिह्विकायै कुण्डोदर्यै ऊर्ध्वकेश्यै विकृतमुख्यै ज्वालामुख्यै उल्कामुख्यै श्रीमुख्यै विद्यामुख्यै महाकाल्यै सरस्वत्यै सर्वसिद्ध्यै गौर्यै त्रैलोक्यविद्यायै मन्त्रार्णशक्तिकायै भूतमात्रे लम्बोदर्यै द्राविण्यै नागर्यै खेचर्यै मञ्जर्यै रूपिण्यै वीरिण्यै कोदर्यै पूतनायै भद्रकाल्यै योगिन्यै शङ्खिन्यै गर्जिन्यै कालरात्र्यै कुर्दिन्यै कपर्दिन्यै वज्रायै जयायै सुमुखेश्वर्यै रेवत्यै माधुर्यै वारुण्यै वायव्यै रक्षोवधारिण्यै सहजायै लक्ष्म्यै व्यापिन्यै मायायै ५१. इत्थं पूर्णोदर्यादयः शक्तयः ॥

एवं सबिन्दुकमातृकावर्णैकैकपूर्वकैः श्रीकण्ठादिभिर्नामभिः पूर्णोदर्यादि-

शक्त्येकैकोत्तरैश्च क्रमेण मातृकान्यासस्थानेषु न्यसेत्। पुनरप्यत्र बीजादि-योजनाविषये पक्षविशेष उक्तः ॥

श्रीकण्ठादौ विद्वान् वर्णान्प्राग्बीजसंयुतान्वापीति ।

अत्र वाशब्दात् मातृकावर्गान् बीजसहितान्वा तद्रहितान्वा आदौ योजयेदिति विशेषः । तत्र बीजमिति बिन्दुः । अथवा, श्रीकण्ठादौ विद्वान् वर्णानित्यनेन वर्णशब्देन अकारादयो वर्णा गृहीताः । ते तु वर्णाः, प्राग्बीजसंयुतान्वेत्यनेन हृल्लेखाश्रीबीजकामबीजपूर्वका वा तद्रहिता वा न्यस्तव्या इत्यर्थः । इमे विशेषास्तु उत्तरत्र वक्ष्यमाणदशविधमातृकान्यासप्रकरणेऽपि समाना एव । पुनरप्यत्रैवोक्तम् ॥

रुद्रादीन् शक्तियुतान्यस्येद्याद्यांस्त्वगादिधातुयुतान् ॥ इति ॥

अस्यार्थः — श्रीकण्ठादिन्यासे मातृकावर्णयोजनासमये यकारमारभ्य क्षकारपर्यन्तं, यं त्वगात्मने रं असृगात्मने लं मांसात्मने वं मेदआत्मने शं अस्थ्यात्मने षं मज्जात्मने सं शुक्रात्मने हं प्राणात्मने ळं शक्त्यात्मने क्षं आत्मात्मने इत्येवंप्रकारेण यकारादिवर्गानन्तरं त्वगादीन् संयोज्य, पश्चात्तत्तन्मूर्तिंशक्त्यादीन् संयोज्य न्यस्तव्या इति। तत्र क्रमदीपिकायां क्रोधमप्यात्मनोन्तानीत्युक्तत्वात् आत्मात्मने इत्यत्र क्रोधात्मने इत्यात्म-पदस्य पूर्वं क्रोदपदं योजयेद्वा। इयं तु त्वगादियोजना प्राक् तृतीयपटले केशवादीनामुक्ता, सधातुप्राणशक्त्यात्मानो यादिषु मूर्तयः इति। श्रीकण्ठादीनां तु नोक्ता। अत्र सप्तमपटले तु श्रीकण्ठादीनामेवोक्ता। केशवादीनां तु नोक्ता। तेन उत्तरत्र अस्मिन्पटले वक्ष्यमाणदशविधमातृकान्यासप्रकरणे केशवादीनामेव यादिषु त्वगादियोजना कर्तव्या इति संप्रदायः ॥

तत्रोत्तरत्र दशविधमातृकाप्रकरणे वक्ष्यमाणश्रीकण्ठादिकेशवादिन्यासयो-रुभयोरपि श्रीबीजादियोजनाविकल्पः समानः । पुनरत्र शक्तिमूर्तियोजना-

विषयेऽपि पक्षविशेषोऽस्ति । अं श्रीकण्ठाय पूर्णोदर्यै नमः, इत्येकः पक्षः । अं श्रीकण्ठाय पूर्णोदर्यात्मने नमः, इत्यपरः पक्षः । अं श्रीकण्ठपूर्णोदरीभ्यां नमः, इत्यन्यः पक्षः । तत्र क्रमदीपिकायां तु वर्णानुक्त्वा सार्धचन्द्रान्पुरस्तान्मूर्तिः शक्तिः देवसेनानतिश्चेति" मूर्तिशक्ती पृथक् चतुर्थ्येकवचनेनैवोक्ते । तत्र निश्चयकारणं देवसेना इति चतुर्थ्येकवचनमुक्तम् । अस्मिन्पक्षे यादिषु त्वगादि-योजनासमये, यं त्वगात्मने पालिने सुमुखेश्वर्यै नमः इत्यादिक्रमेण योजयेत् । द्विवचनपक्षे तु, यं त्वगात्मभ्यां पालिसुमुखेश्वरीभ्यां नमः, इत्यादिप्रकारेण योजयेत् । एते सर्वेपि पक्षाः उत्तरत्रास्मिन्पटले वक्ष्यमाण दशविधमातृकान्यासप्रकरणे वक्ष्यमाणश्रीकण्ठादीनामपि समाना एव ॥

तस्मादुक्तेषु पक्षेषु एकेन पक्षेण श्रीकण्ठादीन् न्यस्त्वा, पुनः वैष्णवाक्षरमूर्तिमकौंधाभमित्यादिएकोनत्रिंशतिपटले वक्ष्यमाणप्रकारेण ध्यात्वा तन्मन्त्रवर्णान् न्यसेत् । तत्प्रकारः तस्मिन्नेव पटले टीकाव्याख्यानोक्तप्रकारेण तत आकृष्यात्रैव योग्यतावशाल्लिख्यते —

आधारहृद्वदनदोःपदमूलनाभौ
कण्ठे सनाभिहृदयस्तनपार्श्वपृष्ठे ।
कास्येक्षणश्रवणगन्धवहे च दोःपत्-
सन्ध्यंगुलीषु हृदि धातुषु सानिलेषु ॥

मूर्धेक्षणास्यहृदयोदरसोरुजङ्घा-
पादद्वयेषु लिपिशो न्यसतु क्रमेण ।
गण्डांसकोरुचरणेषु रथाङ्गशङ्ख-
श्रीमद्गदाम्बुजपदेषु समाहितात्मा ॥ इति ॥

तत्रास्य न्यासश्लोकार्धस्य विभाग उच्यते — आधारादि नाभ्यन्तमेको न्यासः । पुनः पृष्ठान्तमपरो न्यासः । तत्र पूर्वप्रोक्तनाभिस्थानं नाभ्यामुपरि,

पश्चात्प्रोक्तमधस्तादिति विशेषः। कार्येत्यादि गन्धवहान्तं तृतीयावृत्त्या न्यासः। गन्धवह इति नासिका। पुनः दोःपत्सन्ध्यंगुलीषु चतुर्थो न्यासः। अस्त्यत्रोपदेशः। एकस्मिन् हस्ते सन्धित्रये च पञ्चांगुलीषु च एको न्यासः। तथैवेतरहस्ते च पादद्वये चेत्येवं चत्वारो न्यासाः। पुनः हृदि धातुषु सानिलेष्विति। हृदयस्थाने स्थितेषु धातुषु च प्राणे चेत्यर्थः। धातवः त्वगादिसप्तधातवः इति। पुनर्मूर्धेक्षणास्यहृदयोदरोरुजङ्घापादद्वयेषु च न्यसेत्। एको न्यासः। पुनः गण्डांसकोरुचरणेषु चतुरो वर्णान्विन्यस्य रथाङ्गशङ्खश्रीमद्गदाम्बुजपदेषु शिष्टांश्चतुरो वर्णान् संयोज्य रथाङ्गादिमुद्राप्रदर्शन-पूर्वकं तत्तत्स्थानेषु न्यसेत्। रां चक्राय नमः। यं शङ्खाय नमः। णां गदायै नमः। यं पद्माय नमः। एवंप्रकारेण न्यसेदित्यर्थः। एवं सबिन्दुकान् नमोन्तांश्च वर्णान् न्यसेत्। सर्वत्र सबिन्दुकानेव वर्णान् न्यसेत्। तदुक्तं च क्रमदीपिकायाम् — वर्णानुक्त्वा सार्धचन्द्रान्पुरस्तादिति। तत्र टीकोक्त-प्रकारेण चक्रादिमुद्राप्रकारं वक्ष्ये —

प्रसृतांगुलिकरतले अन्योन्यं व्यत्यस्तं संमुखं संयोज्य दक्षिणांगुष्ठाग्रेण वामकनिष्ठिकाग्रं वामांगुष्ठाग्रेण दक्षिणकनिष्ठिकाग्रं च संयोज्य दक्षिणांसोपरि चक्रमुद्रां साक्षरां विन्यसेत्। दक्षिणांगुष्ठं वामकरांगुलिभिश्चतसृभिः गाढमुष्टिना गृहीत्वा, ऋजूकृतवामांगुष्ठं सह दक्षिणकरांगुलीभिः दृढं संयोज्य वामांसोपरि शङ्खमुद्रां साक्षरां विन्यसेत्। उभयकरांगुलीरन्योन्यं व्यत्यस्तं पाणिपृष्ठप्रति-ष्ठांगुल्याष्ठाग्रं ऋजूकृतसंश्लिष्टोभयमध्यमांगुलिकं संयोज्य गदामुद्रां वामोरुमूले साक्षरां विन्यसेत्। करतले संमुखे मणिबन्धसंश्लिष्टे प्रसारिताष्टांगुलिके अन्तः प्रणते संश्लिष्टे अंगुष्ठे च कर्णिकारूपे कृत्वा पद्ममुद्रां दक्षिणोरुमूले साक्षरां विन्यसेत् ॥

तत्र सर्वत्र साक्षरामिति अष्टमाक्षरस्य पञ्चमादिवर्णान् क्रमेणैकैक-मेकैकया पूर्वोक्तप्रकारेण संयोज्य कुर्यादिति। अत्रैव तथा कर्तव्या।

इतरत्रानुक्ते साक्षरमुद्रान्यासो नास्ति । पुनरकौंघाभमित्यनेनैव ध्यात्वा केशवादिभिः मातृकावर्णैकैकपूर्वकैः कीर्त्यादिशक्त्युत्तरैः मातृकान्यासस्थानेषु न्यसेत् । तत्प्रकारः कथ्यते —

अं केशवाय कीर्त्यै नमः । आं नारायणाय कान्त्यै नमः । माधवाय तुष्ट्यै॰ गोविन्दाय पुष्ट्यै॰ विष्णवे धृत्यै॰ मधुसूदनाय क्षान्त्यै॰ त्रिविक्रमाय क्रियायै॰ वामनाय दयायै॰ श्रीधराय मेधायै॰ हृषीकेशाय हर्षायै॰ पद्मनाभाय श्रद्धायै॰ दामोदराय लज्जायै॰ वासुदेवाय लक्ष्म्यै॰ संकर्षणाय सरस्वत्यै॰ प्रद्युम्नाय प्रीत्यै॰ अनिरुद्धाय रत्यै॰ चक्रिणे जयायै॰ गदिने दुर्गायै॰ शार्ङ्गिणे प्रभायै॰ खड्गिने सत्यायै॰ शङ्खिने चण्डायै॰ हलिने वाण्यै॰ मुसलिने विलासिन्यै॰ शूलिने विजयायै॰ पाशिने विरजायै॰ अंकुशिने विश्वायै॰ मुकुन्दाय विमदायै॰ नन्दजाय सुनन्दायै॰ नन्दिने स्मृत्यै॰ नराय ऋध्द्यै॰ नरकजिते समृध्द्यै॰ हरये शुध्द्यै॰ कृष्णाय बुध्द्यै॰ सत्याय मुक्त्यै॰ सात्वताय मत्यै॰ शौरये क्षमायै॰ रामाय रमायै॰ जनार्दनाय श्यामायै॰ भूधराय क्लेदिन्यै॰ विश्वमूर्तये क्लिन्नायै॰ वैकुण्ठाय वसुदेवायै॰ यं त्वगात्मने पुरुषोत्तमाय वसुधायै॰ रं असृगात्मने बलिने परायै॰ लं मांसात्मने बलानुजाय परायणायै॰ वं मेदआत्मने बालाय सूक्ष्मायै॰ शं अस्थ्यात्मने वृषघ्नाय सन्ध्यायै॰ षं मज्जात्मने वृषाय प्रज्ञायै॰ सं शुक्रात्मने हंसाय प्रभायै॰ हं प्राणात्मने वराहाय निशायै॰ ळं शक्त्यात्मने विमलाय अमोघायै॰ क्षं आत्मात्मने नृसिंहाय वैद्युतायै नमः ५१ क्षं क्रोधात्मने इति क्रमदीपिकाकारमतम् ॥

एवं सबिन्दुकमातृकावर्णैकैकपूर्वकैः केशवादिभिर्नामभिः कीर्त्यादिशक्त्युत्तरैः यादिषु सधात्वादिभिः मातृकोक्तस्थानेषु न्यसेत् । अस्यापि प्रागुक्तश्रीकण्ठादिन्यासोक्तवत् मातृकावर्णानां बिन्दुसाहित्यविकल्पः मूर्तिशक्तिसंयोगप्रकारविकल्पश्च मातृकायाः प्राक् भुवनेश्वर्यादिबीजयोजनाविकल्पश्च । एते विकल्पाः सर्वेऽपि समाना एव । पुनरुत्तरत्रास्मिन्पटले दशविधमातृका-

न्यासप्रकरणेपि, अस्य न्यासस्योक्तविकल्पास्सर्वेऽपि समाना एव। पुनर्यादिषु धात्वादयोऽस्य न्यासस्य तत्रापि सन्ति। पुनरपि न्यासविशेषमाह --

शक्त्या शक्तिश्रीभ्यां शक्तिश्रींक्लींभिरन्वितैर्वर्णैः।
श्रीशक्त्ययुगशराद्यैरथवा विहितः समृद्धये न्यासः ॥

अस्यार्थः — प्रथमं भुवनेश्वरीं वर्णादौ संयोज्य मातृकां न्यसेत्। पुनर्भुवनेशीश्रीबीजोभयपूर्वकमातृकावर्णान् न्यसेत्। पुनः भुवनेशी श्रीबीजकाम-बीजत्रयपूर्वकमातृकावर्णान् न्यसेत्। पुनः श्रीबीजभुवनेशीबीजकामबीजपूर्वकान् मातृकावर्णान् न्यसेत्। एषां चतुर्विधन्यासानां मध्ये तत्तदादिभूतबीजानामुपरि श्रीपटले भुवनेशीपटले कामपटले च यद्यत् ध्यानं वक्ष्यति, तेन तेन ध्यानेन ध्यात्वा तत्तन्न्यासं कुर्यात्।

अथ प्रपञ्चयागविधिरुच्यते —

एष सर्वमन्त्राधिकारसिद्ध्यर्थं न्यासमन्त्रहोमादिस्वरूपः। ब्रह्मा ऋषिः। परमगायत्री छन्दः। सकलपदार्थसाक्षी परञ्ज्योतिर्देवता। स्वाहा हृत्। सोहं शिरः। हंसः शिखा। ह्रीं कवचं। ॐ नेत्रं। हरिहर अस्त्रं। ध्यानम् -

सर्वत्र्याशेषलोकान्तर्वर्ति यत्तेज ऐश्वरम्।
ब्रह्माग्नौ जुहुयात्तस्मिन्सदा सर्वत्र वर्तिनि ॥

ब्रह्मात्मभिर्महामन्त्रैः ब्रह्मविद्भिस्समाहितैः।
ब्रह्माग्नौ ब्रह्महविषा हुतं ब्रह्मार्पणं स्मृतम् ॥

ॐ ह्रीं नारायणज्योतिरहं परञ्ज्योतिषि जुहोमि हंसः सोहं स्वाहा। इति प्रपञ्चयागमन्त्रः ॥

अथ प्रपञ्चयागप्राणाग्निहोत्रयोः न्यासादिविधिर्लिख्यते —

गुर्वादिवन्दनपूर्वकं भूतशुद्ध्या सह लिपीन्न्यस्य, सर्षिछन्दोदैवतं गणपति-

बीजं चतुश्चत्वारिंशद्वारं गणानां त्वेत्यृचमेकवारं, मालामन्त्राख्यं महागणपतिमन्त्रं चतुर्वारं उपरि षोडशपटले चतुरावृत्तितर्पणविधौ वक्ष्यमाणविभूतिमन्त्रं संजप्य, पुनरपि लिपिं त्रिवारं विन्यस्य प्राणाग्निहोत्रस्य द्रव्यं संपादयेत् ॥

अंगुष्ठाग्रेण मूलाधारमारभ्य सुषुम्नामार्गेण द्वादशान्तपर्यन्तं क्षं नमः इत्यादि अं नमः इति पर्यन्तं प्रतिलोमेन विन्यस्य क्षं ळं हं सं षं मरतकवर्णाय केतवे भगवते नमः । शं वं लं रं यं गोमेधवर्णाय राहवे नमः । मं भं बं फं पं नीलवर्णाय शनैश्चराय नमः । नं धं दं थं तं विद्रुमवर्णाय बृहस्पतये नमः । णं + टं कुलिशवर्णाय बुधाय नमः । ञं + चं पुष्परागवर्णाय शुक्राय नमः । ङं + कं वैडूर्यवर्णाय अङ्गारकाय नमः । अः + लं मुक्तावर्णाय सोमाय नमः । ॠ + अं माणिक्यवर्णाय आदित्याय नमः । मूलाधारलिङ्गनाभिहृद्गळमुखाक्षिभ्रूमध्यमूर्धसु न्यस्य, क्षं ळं हं सं + यं वह्निमण्डलाय नमः । मं भं + कं अं सूर्यमण्डलाय नमः । अः अं + आं अं उं सोममण्डलाय नमः । इति पादादिकट्यन्तं, कट्यादिकण्ठान्तं, कण्ठादिमूर्धान्तं च, व्यापकतया विन्यस्य, क्षं ळं हं सं + डं सः प्रकृत्यै नमः, ढं टं + आं अं हं पुरुषाय नमः पादादिहृदन्तं, हृदादिमूर्धान्तं च विन्यस्य, क्षं ळं हं सं + आं अं सोहं परमात्मने नमः इति पादादिप्रतिलोमतया व्याप्य, एवं प्राणाग्निहोत्रद्रव्यं संपाद्य, प्रपञ्चयागद्रव्यं संपादयेत् ॥

काननवृत्तादिस्थानेषु लिपिं विन्यस्य पुनः स्वरान्स्वरस्थानेषु मुखे विन्यस्य अं आं + अं अः स्वराधिपतये आं आदित्याय नमः इति मुखे व्याप्य, कवर्गं दक्षिणकरे न्यस्य, कं + ङं कवर्गाधिपतये अं अङ्गारकाय नमः इति दक्षिणकरे व्याप्य, चवर्गं वामकरे न्यस्य चं + ञं चवर्गाधिपतये शुं शुक्राय नमः इति वामकरे व्याप्य, टवर्गं दक्षिणपादे न्यस्य, टं + णं टवर्गाधिपतये बुं बुधाय नमः इति तत्र व्याप्य, तवर्गं वामपादे न्यस्य, तं + नं तवर्गाधिपतये बृं बृहस्पतये नमः इति तत्रैव व्याप्य,

पवर्गं तत्स्थाने न्यस्य, पं + मं पवर्गाधिपतये शं शनैश्वराय नमः इति तत्रैव व्याप्य, यवर्गं यादिस्थाने न्यस्य, यं + क्षं यवर्गाधिपतये सों सोमाय नमः इति सर्वाङ्गे व्याप्य, अं आं + अं अः उं सोममण्डलाय नमः इति, कं + मं अं सूर्यमण्डलाय नमः इति, यं + क्षं मं वह्नि-मण्डलाय नमः इति च, मूर्धादिकण्ठान्तं कण्ठादिकट्यन्तं कट्यादिपादान्तं च व्यापकतया विन्यस्य, अं आं +[1] ळं हं पुरुषाय नमः। सं + क्षं सः प्रकृत्यै नमः इति मूर्धादिहृदयान्तं हृदादिपादान्तं च व्यापकतया विन्यस्य, अं आं + ळं क्षं सोहं परमात्मने नमः इति देहे शिरआदिपादान्तं व्याप्य, एवं प्रपञ्चयागद्रव्यमपि सम्पाद्य, हृल्लेखा-गगना-रक्ता-कराळिका-महोच्छुष्माः, मूर्धा-स्य-हृदय-गुह्यपादेषु न्यस्तव्याः। गायत्रीसावित्रीसरस्वतीः कण्ठदक्षस्तन-वामस्तनेषु न्यस्य, ब्रह्मविष्णुरुद्रान् वामांसहृदयदक्षांसेषु विन्यस्य ब्रह्माण्यादि-कमलिकादिषु विन्यसेत्। तत्स्थानानि—

अलिकांसपार्श्वकुक्षिषु पार्श्वांसापरगलहृत्सु च क्रमशः।
ब्रह्माण्याद्या विधिवन्न्यस्तव्या मातरोऽष्ट मन्त्रितमैः॥

पुनर्ह्रीमाद्यङ्गं निधाय, शक्तिऋषिः। गायत्री छन्दः। भुवनेश्वरी देवता इति स्वस्थाने न्यस्य, "ग्निस्त्यतारिदुः" अग्नये जातवेदसे नमः। "न्धुंसिववेना" अग्नये सप्तजिह्वाय नमः। "श्वाविणिर्गादु" अग्नये हव्य-वाहनाय नमः। "तिदषरिपनः स" अग्नये अश्वोदरजाय नमः। "दर्वेति-हादनि" अग्नये वैश्वानराय नमः। "तोयतीरामम" अग्नये कौमारतेजसे नमः। "सोमवानसु" अग्नये विश्वमुखाय नमः। "सेदवेतजा" अग्नये देवमुखाय नमः। इति मूर्धवामांसपार्श्वकटिनाभिदक्षपार्श्वांसेषु न्यस्य, स्वाहा हृदयं। हंसः शिरः। सोहं शिखा। ह्रीं कवचं। ॐ नेत्रं। हरिहर अस्त्रं। स्वयंभूः ऋषिः। स्वयं गायत्री छन्दः। स्वयंज्योतिर्देवतेति प्राणाग्निहोत्राङ्ग-

---

१ ठं हं इति ख—ज पाठः।

ऋष्यादि न्यस्य, स्वाहा हृत् । सोहं शिरः । हंसः शिखा । ह्रीं कवचं । ॐ नेत्रं । हरिहर अस्त्रं । परब्रह्म ऋषिः । परमगायत्रीछन्दः । परंज्योतिर्देवतेति प्रपञ्चयागऋष्यादि न्यस्य, भुवनेश्वरीं ध्यात्वा भुवनेश्वरीमन्त्रमष्टोत्तरशतं जप्त्वा प्राणाग्निहोत्रहोमं कुर्यात् । पद्मासने उपविश्य ध्यायेत् ॥

शक्तेस्सत्त्वनिविष्टमध्यमथ तन्मायारजोवेष्टितं
प्राग्रक्षोनिलदिग्गताश्रिजठरं मध्ये च नाभेरथ ।
मध्यप्राग्वरुणेन्दुयाम्यलसितैः कुण्डैर्ज्वलद्वह्निभिः
मूलाधारमनारतं समतलं योगी स्मरेत्सिद्धये ॥

मध्येन्द्रवरुणशशियमदिग्जातानि क्रमेण कुण्डानि । एवं ध्यात्वा हयरों ययरों रयरों वयरों लयरोमिति पञ्च कुण्डाग्नीन् प्रज्वाल्य प्रणवेनाग्नि-मुखं कृत्वा लिपिप्रतिलोमेन पादादिमूर्धान्तं व्यापकतया शरीरं संहृत्य,

चिद्रूपात्सकलप्रभाप्रभवकात् मूलप्रकृत्यात्मनः
कल्पार्कात्प्रतिलोमतोऽमृतमयीं रोचीरुचाच्छां धिया ।
संस्पृष्टाक्षरमालिकां तु जुहुयात् कुण्डेषु तेषु क्रमात्
कल्पान्ताग्निशिखास्फुरत्कुहरकेष्वासावितां वर्णशः ॥

इति भावनां कृत्वा, पञ्चकुण्डेषु आवसथ्यमध्यादिक्रमेण ओं ह्रीं क्षं परं-ज्योतिषि जुहोमि सोहं हंस स्वाहा इत्यादि ओं ह्रीं आं परंज्योतिषि जुहोमि सोहं हंसः स्वाहा इत्यन्तं दशवर्णशो दशावृत्तिहोमं कृत्वा, पुनः प्रणव-भुवनेश्वरीभ्यां देहमुत्पाद्य शुद्धलिपिं न्यस्य, लिपिप्रतिलोमसंहारव्यापकेन शरीरं संहृत्याभ्यन्तरहोमं कुर्यात् ॥

क्षं शं मं नं णं ञं ङं अः एं ऊं हं आकाशशब्दतन्मात्रश्रोत्रवागात्म-शान्त्यतीतनादतुर्यातीतानुग्रहसदाशिवेशानवासुदेवान् परंज्योतिषि जुहोमि सोऽहं हंसः स्वाहा । ळं वं भं धं ढं झं घं अं ॡं उं यं वायुस्पर्शतन्मात्रत्वक्पाणिप्रकृतिशान्ति-

बिन्दुतुरीयतिरोधानेश्वरतत्पुरुषसङ्कर्षणान् परंज्योतिषि जुहोमि सोहं हंसः स्वाहा। हं लं बं दं उं जं गं औं लृं ईं रं तेजोरूपतन्मात्रचक्षुःपादाहंकारविद्या-मकारसुषुप्तिसंहाररुद्राघोरप्रद्युम्नान् परंज्योतिषि जुहोमि सोहं हंसः स्वाहा। सं रं फं थं ठं छं खं अँ ॠ इं वं अत्रसतन्मात्ररसनापायुमनःप्रतिष्ठोकारस्वप्नस्थिति-विष्णुवामदेवानिरुद्धान् परंज्योतिषि जुहोमि सोहं हंसः स्वाहा। षं यं पं तं टं चं कं ऐं ऋं आं लं पृथिवीगन्धतन्मात्रघ्राणोपस्थबुद्धिनिवृत्त्यकारजाग्रत् सृष्टि-ब्रह्मसद्योजातनारायणान् परंज्योतिषि जुहोमि सोहं हंसः स्वाहा। इति आवसथ्यादिपञ्चकुण्डेषु हुत्वा प्रगत्रभुवनेश्वरीभ्यां शरीरमुत्पाद्य बिन्दुलिपिं न्यस्य, लयरों वयरों रयरों ययरों हयरों इति पञ्चकुण्डाग्नीन् एकीकृत्य, पूर्ववत् लिपिप्रतिलोमेन शरीरं संहृत्य, ॐ ह्रीं अं परंज्योतिषि जुहोमि सोहं हंसः स्वाहा। इत्यादिक्षान्तं पूर्णां हुत्वा, पूर्ववत् शरीरमुत्पाद्य, विसर्गलिपिं न्यस्य पूर्ववत् देहं संहृत्य, ॐ ह्रीं क्षं परंज्योतिषि जुहोमि सोहं हंसः स्वाहा। ॐ ह्रीं ळं परंज्योतिषि + स्वाहा। इत्यादि ॐ ह्रीं अं परंज्योतिषि + स्वाहा इत्यन्तं हुत्वा पूर्ववदुत्पाद्य, बिन्दुविसर्गलिपिं न्यस्य, ॐ ह्रीं क्षं ळं हं सं षं मरतकवर्णं केतुं परंज्योतिषि जुहोमि सोहं हंसः स्वाहा, इत्यादिपूर्वोक्तवत् नवग्रहान् हुत्वा, पूर्ववदुत्पाद्य, कलामातृकां न्यस्य, पूर्ववत् संहृत्य, क्ष + यं वह्निमण्डलं परंज्योतिषि जुहोमि सोहं हंसः स्वाहा इत्यादिमण्डलत्रयहोमं हुत्वा, पूर्ववदुत्पाद्य, केशवादिमातृकां विन्यस्य पूर्ववत्संहृत्य, क्षं + हंसः प्रकृतिं परंज्योतिषि जुहोमि सोहं हंसः स्वाहा, ठं + अं हं पुरुषं परंज्योतिषि जुहोमि स्वाहा इति प्रकृतिपुरुषहोमं हुत्वा, पूर्ववदुत्पाद्य, श्रीकण्ठादिलिपिं न्यस्य संहृत्य क्षं + अं सोहं पर-मात्मानं परंज्योतिषि जुहोमि स्वाहा इति परमात्महोमं हुत्वा, पूर्ववदुत्पाद्य शक्तिकमलामारलिपिं न्यस्य प्रपञ्चयागहोमं कुर्यात् ॥

पूर्ववत् शरीरं संहृत्य ॐ ह्रीं अं नारायणं ज्योतिरहं परं ज्योतिषि

जुहोमि हंसः सोहं स्वाहा इत्यादि क्षकारपर्यन्तं लिपिन्यासस्थानेषु न्यासरूपेण हुत्वा पूर्ववदुत्पाद्य, शक्तिलिपिं न्यस्य संहृत्य, स्वरान्मुखे न्यस्य, ॐ ह्रीं अं आं अः स्वराधिपतिं आं आदित्यं नारायणं ज्योतिरहं परंज्योतिषि जुहोमि हंसः सोहं स्वाहा इत्यादिसोमपर्यन्तं सप्तग्रहहोमान् पूर्वोक्तसप्तग्रहस्थानेषु हुत्वा पूर्ववत् न्यासरूपेण च उत्पाद्य, कमलालिपिं न्यस्य संहृत्य, ॐ ह्रीं अं० अः उं सोममण्डलं नारायणं० स्वाहा । कं मं सूर्यमण्डलं नारायणं० स्वाहा । यं० क्षं मं वह्निमण्डलं नारायणं० स्वाहा । इति मण्डलत्रयहोमं हुत्वा उत्पाद्य मारमातृकां न्यस्य संहृत्य अं आं० टं ठं हं पुरुषं नारायणं० स्वाहा । डं० क्षं सः प्रकृतिं नारा० स्वाहा । इति पुरुषप्रकृतिहोमं हुत्वा पूर्ववत् शरीरमुत्पाद्य, ओं ह्रीं हंसः सोहं स्वाहा अं नमः इत्यादि क्षकारपर्यन्तं ब्रह्मयागलिपिं न्यस्य, ओं ह्रीं अं आं० ळं क्षं सोहं परमात्मानं नारायणं ज्योतिरहं परंज्योतिषि जुहोमि हंसः सोहं स्वाहा इति व्यापकतया परमात्महोमं हुत्वा मूलाधारं द्वादशान्तं च स्पृष्ट्वा पृथक् पृथक् द्वादशवारं प्रणवं संजप्य, सहस्रार्चिषे हृदयं । स्वस्तिपूर्णाय शिरः । उत्तिष्ठ पुरुषाय शिखा । धूमव्यापिने कवचम् । सप्तजिह्वाय नेत्रम् । धनुर्धराय अस्त्रम् ॥

अथानेन प्रपञ्चयागमन्त्रेण होमविधिः । तदर्थं प्रागुक्तमातृकावत् पूजाविधिः ॥

अश्वत्थोदुम्बरजाः प्लक्षन्यग्रोधसंभवाः समिधः ।
तिलसर्षपदुग्धघृतान्यष्टद्रव्याणि संप्रदिष्टानि ॥

एतैः क्रमेण जुहुयादथ लक्षमेकं
लक्षार्धसंख्यमथवापि तदर्धकं यः ।
स त्वैहिकीं सकलसिद्धिमवाप्य वाञ्छां
भूयः परं परतरं च परत्र याति ॥

प्लक्ष-उत्थिल् । न्यग्रोधं-वटम् । दौग्धं-पायसम् । एतैर्द्रव्यैः रक्षा-विषये । प्रयोगान्तरम् —

एकद्विकत्रिकचतुष्कशताभिवृद्धया
तां तां समीक्ष्य विकृतिं प्रजुहोतु मन्त्री ।
क्षुद्रग्रहादिविषमज्वरभूतयक्ष-
रक्षःपिशाचजनिते महति प्रकोपे ॥

अयमर्थः — पूर्वोक्तैरष्टद्रव्यैरेकैकैः एकशतं वा द्विशतं वा त्रिशतं वा चतुश्शतं वा तत्तदुपद्रवानुसारेण जुहुयात् । क्षुद्रादिशान्तिर्भवति ॥

प्रयोगान्तरम् —

द्वादशसहस्रमथवा तद्द्विगुणं चतुर्गुणं वाऽथो ।
क्षुद्रग्रहरिपुविषमज्वरभूतसंभवे कोपे ॥

अयमर्थः — पूर्वोक्तैरष्टद्रव्यैरेव द्वादशसहस्रादिसंख्यं हुनेत् । क्षुद्रादि-शान्तिर्भवति ॥

प्रयोगान्तरम् —

अयथाप्रतिपत्तिमन्त्रकाणां विहिता स्यादिह विस्मृतिर्नराणाम् ।
शमयेदचिरात्सहस्रवृत्त्या मतिमान्वस्तुभिरेभिरेव जुह्वन् ॥

अयमर्थः — मन्त्रजपादौ विहितप्रतिपत्त्यभावात् विस्मृतिर्भवेत् कर्तुः । तस्मात्परिहारार्थं पूर्वोक्तैरष्टद्रव्यैरेकैकसहस्रावृत्त्या हुनेत् ॥

प्रयोगान्तरम् —

एतैस्सहस्रद्वितयाभिवृध्द्या जुहोति यस्तु क्रमशो यथावत् ।
जयेत् क्षणेनैव सविस्मृतीश्च सापस्मृतीः शापभवांश्च दोषान् ॥

अयमर्थः—पूर्वतरोक्तैरष्टद्रव्यैरेकैकैः द्विसहस्रं जुहुयात् । तेन विस्मृतीश्चापस्मारं च शापदोषांश्च शमयेत् ॥

प्रयोगान्तरम्—

मधुरत्रयावसिक्तैरेतैर्लक्षं जुहोति यो मन्त्री ।
तस्य सुराधिपविभवो महद्धया तृणलवायते नचिरात् ॥

एतैरिति पूर्वोक्तैरष्टद्रव्यैरित्यर्थः । एतैः द्रव्यैरेव ॥

प्रयोगान्तरम्—

लक्षं तदर्धकं वा मधुरत्रयसंप्लुतैस्तथा जुहुयात् ।
अब्दत्रयादथार्वाक् त्रिभुवनमखिलं वशे कुरुते ॥

प्रयोगान्तरम्—

लक्षं तिलानां जुहुयादघानां शान्त्यै श्रियैथो नलिनैश्च तावत् ।
दौग्धेन पुष्ट्यै यशसे घृतेन वश्याय जातीकुसुमैश्च लोणैः ॥

शालीतण्डुलचूर्णकैस्त्रिमधुरासिक्तैः स्वसाध्याकृतिं
कृत्वाष्टोर्ध्वशताख्यमस्य शितधीः प्राणान्प्रतिष्ठापयेत् ।
न्यासोक्तक्रमतो निशासु जुहुयात्तां सप्तरात्रं नरो
नारी वा वशमेति मंक्षु द्विविधा तेनैव लोणेन वा ॥

पञ्चाशदौषधविपाचित-पञ्चगव्य-
जाते घृतेन शतवृत्ति हुनेत् घटाग्नौ ।
तावत्प्रजप्य विधिनाऽपि समग्रसिद्धं
भस्माददीत सकलाभ्युदयावहं तत् ॥

अनुदिनमनुलिम्पेत् तेन किञ्चित्समद्यात्
तिलकमपि विदध्यादुत्तमाङ्गे क्षिपेच्च ।

अनुततदुरितापस्मारभूतापमृत्यु-
ग्रहविषरहितः स्यात्प्रीयते च प्रजाभिः ॥

अस्यार्थः —- दौग्धं-क्षीरपायसम् । जातिकुसुमं-जायीचे फूल । पुनः प्रागुक्त पञ्चाशद्वर्णौषधियुक्तं पञ्चगव्यं क्वथित्वा तत्र जाते घटाग्नौ शतवारमनेन मन्त्रेणाज्येन हुत्वा तद्भस्म तावत् जप्त्वा प्रतिदिनं लिहेच्च अनेन विलिपेच्च तिलकमपि कुर्यात् शिरसि क्षिपेच्च । अनेन दुरितक्षय-रक्षापुत्रावाप्त्यादिफलं भवति । गुरुदक्षिणानियमो मूलग्रन्थे उक्तः ॥

अथ दशविधलिपिन्यासा उच्यन्ते —

शुद्धश्चापि सबिन्दुकस्त्वथ कलायुक्केशवाद्यस्तथा
श्रीकण्ठादियुतश्च शक्तिकमलामारैस्तथैकैकशः ।
न्यासास्ते दशधा पृथङ्निगदितास्ते ब्रह्मयागान्तिकाः
सर्वे साधकसिद्धिसाधनविधौ संकल्पकल्पद्रुमाः ॥

अयमर्थः — प्रथमं मातृकाविधानोक्ताङ्गऋष्यादिकं विन्यस्य, पञ्चाश-द्वर्णेत्यादि ध्यात्वा शुद्धलिपिन्यासं कुर्यात् । तत्कथम्—काननवृत्तव्यक्षीत्यादि-स्थानेषु अ नमः आ नमः इ नमः ई नमः इत्यादि बिन्दुरहितया न्यसेत् । एवं प्रथमो न्यासः । द्वितीय उच्यते – ब्रह्मा ऋषिः । देवीगायत्री छन्दः । मातृकासरस्वती देवता । हलो बीजानि । स्वराश्शक्तयः । अभीष्टसिद्ध्यर्थे विनियोगः । कादिवर्गैः षड्भिः षडङ्गानि कुर्यात् ॥

सिन्दूरकान्तिममिताभरणां त्रिणेत्रां
विद्याऽक्षसूत्रमृगपोतवरान्दधानाम् ।
पार्श्वस्थितां भगवतीमपि काञ्चनाभां
ध्यायेत्कराब्जधृतपुस्तकसाक्षमालाम् ॥

एवं ध्यात्वा अं नमः, आं नमः, इं नमः, ईं नमः, इत्येवंरूपेण सविन्दुकतया न्यसेत् ॥

पुनस्तृतीयं कलायुक्तविधानमुच्यते — प्रणवकलामातृकायाः प्रजापति ऋषिः । गायत्री छन्दः । कलात्मवर्णजननी शारदा मातृकासरस्वती देवता । अं बीजं । क्ष्ौं शक्तिः । सरस्वतीप्रीत्यर्थे विनियोगः । ओं अं ओं आं हृत् । ओं इं ओं ईं शिरः । इत्याद्यङ्गानि ॥

हस्तैः पद्मं रथाङ्गं गुणमथ हरिणं पुस्तकं वर्णमालां
टङ्कं शुभ्रं कपालं दरममृतलसध्देमकुम्भं वहन्तीम् ।
मुक्ताविद्युत्पयोदस्फटिकनवजपाबन्धुरैः पञ्चवक्त्रैः
त्र्यक्षैर्वक्षोजनम्रां सकलशशिनिभां भारतीं तां नमामि ॥

ओं अं ओं निवृत्तिकलायै नमः । ओं आं ओं प्रतिष्ठाकलायै नमः । ओं इं ओं विद्याकलायै नमः । ओं ईं ओं शान्तिकलायै नमः । ओं उं ओं इन्धिकाकलायै नमः । ओं ऊं ओं दीपिकाकलायै नमः । ओं ऋं ओं रेचिकाकलायै नमः । ओं ॠं ओं मोचिकाकलायै नमः । ओं लृं ओं पराकलायै नमः । ओं ॡं ओं सूक्ष्माकलायै नमः । ओं एं ओं सूक्ष्मामृताकलायै नमः । ओं ऐं ओं ज्ञानामृताकलायै नमः । ॐ ॐ ॐ आप्यायिनीकलायै नमः । ओं औं ओं व्यापिनीकलायै नमः । ओं अं ओं व्योमरूपाकलायै नमः । ओं अः ओं अनन्ताकलायै नमः । ओं कं ओं सृष्टिकलायै नमः । ॐ खं ॐ ऋद्धिकलायै नमः । ॐ गं ॐ स्मृतिकलायै नमः । ॐ घं ॐ मेधाकलायै नमः । ॐ ङं ॐ कान्तिकलायै नमः । ॐ चं ॐ लक्ष्मीकलायै नमः । ॐ छं ॐ द्युतिकलायै नमः । ॐ जं ॐ स्थिराकलायै नमः । ॐ झं ॐ स्थितिकलायै नमः । ॐ ञं ॐ सिद्धिकलायै नमः । ॐ टं ॐ जराकलायै नमः । ॐ ठं ॐ पालिनीकलायै नमः । ॐ डं ॐ शान्तिकलायै नमः । ओं ढं ओं ऐश्वर्यकलायै नमः । ओं णं ओं रतिकलायै नमः । ओं तं ओं कामिकाकलायै नमः ।

ओं थं ओं वरदाकलायै नमः । ओं दं ओं आह्लादिनीकलायै नमः । ओं धं ओं प्रीतिकलायै नमः । ओं नं ओं दीर्घाकलायै नमः । ओं पं ओं तीक्ष्णाकलायै नमः । ओं फं ओं *ऐन्द्रीकलायै नमः । ओं बं ओं भयाकलायै नमः । ओं भं ओं निद्राकलायै नमः । ओं मं ओं तन्द्रीकलायै नमः । ओं यं ओं क्षुधाकलायै नमः । ओं रं ओं क्रोधिनीकलायै नमः । ओं लं ओं क्रियाकलायै नमः । ओं वं ओं उत्कारीकलायै नमः । ओं शं ओं मृत्युकलायै नमः । ओं षं ओं पीताकलायै नमः । ओं सं ओं श्वेताकलायै नमः । ओं हं ओं अरुणाकलायै नमः । ओं ळं ओं असिताकलायै नमः । ओं क्षं ओं अनन्ताकलायै नमः ॥

एवं कलायुक्तमातृकां विन्यस्य, पुनश्चतुर्थीं केशवादियुक्तमातृकां विन्यसेत् । केशवादियुतमातृकायाः रुद्र ऋषिः । गायत्रं छन्दः । श्रीलक्ष्मीनारायणो हरिर्देवता । क्लां बीजम् । स्वराश्शक्तयः । मोक्षार्थे विनियोगः । क्लां हृत् । क्लीं शिरः इत्याद्यङ्गानि ॥

हस्तैर्बिभ्रत्सरसिजगदाशङ्खचक्राणि विद्यां
पद्मादर्शौ कनककलशं मेघविद्युद्विलासम् ।
वामोत्तुङ्गस्तनमविरलाकल्पमाश्लेषलोभात्
एकीभूतं वपुरवतु वः पुण्डरीकाक्षलक्ष्म्योः ॥

एवं ध्यात्वा प्रागुक्तवत् कीर्त्यादिशक्तियुक्तैः केशवादिभिर्मातृकावर्णपूर्वकैः न्यसेत् ॥

पुनः पञ्चमः श्रीकण्ठादियुतमातृकान्यासः । तदुच्यते — श्रीकण्ठादिन्यासस्य दक्षिणामूर्तिः ऋषिः । गायत्री छन्दः । अर्धनारीश्वरो देवता । हलो बीजानि । स्वराश्शक्तयः । समृद्ध्यर्थे विनियोगः । ह्रां हृत् । ह्रीं शिरः । इत्याद्यङ्गानि ॥

---

*ऐन्द्रीस्थाने रौद्री इति ख, ङ, छ, ज पाठः ।

बन्धूककाञ्चननिभं रुचिराक्षमालां
पाशाङ्कुशौ च वरदं निजबाहुदण्डैः ।
बिभ्राणमिन्दुशकलाभरणं त्रिणेत्रं
अर्धाम्बिकेशमनिशं वपुराश्रयामि ॥

एवं ध्यात्वा श्रीकण्ठादिभिः पूर्णोदर्यादियुतैर्मातृकावर्णपूर्वकैः प्रागुक्तक्रमेण न्यसेत् ॥

पुनः षष्ठीं शक्तियुक्तां मातृकां न्यसेत् – शक्त्यन्वितायाः मातृकायाः शक्तिः ऋषिः । गायत्री छन्दः । सकलसौभाग्यदायिनी सरस्वती देवता । हलो बीजानि । स्वराः शक्तयः । अभीष्टसिद्ध्यर्थे विनियोगः । ह्रां हृत् । ह्रीं शिरः । इत्याद्यङ्गानि ॥

उद्यत्कोटिदिवाकरप्रतिभवत्तुङ्गोरुकुम्भस्तनी-
बद्धार्धेन्दुकिरीटहाररशनामञ्जीरसंशोभिता ।
बिभ्राणारुणपङ्कजे जपवटीं पाशांकुशौ पुस्तकं
दिश्याद्वो जगदीश्वरी त्रिनयना पद्मे निषण्णा सुखम् ॥

ओं ह्रीं अं नमः । ओं ह्रीं आं नमः । इत्यादिक्षान्तं न्यासः कर्तव्यः ॥

पुनस्सप्तमं केवलकमलायुक्तमातृकान्यासं कुर्यात् । केवलकमलायुक्तमातृकायाः भृगुऋषिः । गायत्री छन्दः । संपत्प्रदा मातृका देवता । हलो बीजानि । स्वराश्शक्तयः । अभीष्टसिध्यर्थे विनियोगः । श्रां हृत् । श्रीं शिरः । इत्याद्यङ्गानि ॥

विद्युद्दामसमप्रभां हिमगिरिप्रख्यैश्चतुर्भिर्गजैः
शुण्डादण्डसमुद्धृतामृतघटैरासिच्यमानां रमाम् ।
बिभ्राणां करपङ्कजैर्जपवटीं पद्मद्वयं पुस्तकं
भास्वद्रत्नसमुज्वलां कुचनतां ध्यायेज्जगत्स्वामिनीम् ॥

ॐ श्रीं अं नमः । ॐ श्रीं आं नमः । इत्यादिक्षान्तं न्यासः ॥

पुनरष्टमीं मारबीजयुक्तमातृकां विन्यसेत् । मारबीजयुक्ताया मातृकायाः साम्मोहन ऋषिः । गायत्री छन्दः । सकलजननी मातृका देवता । हलो बीजानि । स्वराश्शक्तयः । अभीष्टसिद्ध्यर्थे विनियोगः । क्लां हृत् । क्लीं शिरः । इत्याद्यङ्गानि ॥

बालार्ककोटिरुचिरां स्फटिकाक्षमालां
कोदण्डमिक्षुरचितं स्मरपञ्चबाणान् ।
विद्यां च हस्तकमलैर्दधतीं त्रिणेत्रां
ध्यायेत्समस्तजननीं नवचन्द्रचूडाम् ॥

ओं क्लीं अं नमः । ओं क्लीं आं नमः । इत्यादि न्यसेत् ॥

पुनर्नवमीं शक्तिकमलामारयुक्तां मातृकां विन्यसेत् । शक्तिकमलामारयुक्ताया मातृकायाः संमोहनऋषिः । गायत्रीछन्दः । संमोहिनी सर्ववशंकरी मातृकासरस्वती देवता । व्यञ्जनानि बीजानि । स्वराश्शक्तयः । अभीष्टसिध्यर्थे विनियोगः । ह्रां श्रां क्लां हृत् । ह्रीं श्रीं क्लीं शिरः इत्याद्यङ्गानि ॥

ध्यायेयमक्षवलयेषु शरासपाश-
पद्मद्वयांकुशशरान्नवपुस्तकं च ।
आबिभ्रतीं निजकरैररुणां कुचार्ता
संमोहनीं त्रिनयनां तरुणेन्दुचूडाम् ॥ इति ॥

ओं ह्रीं श्रीं क्लीं अं नमः । इत्यादिक्षान्तं न्यसेत् ॥

पुनर्दशमीं प्रपञ्चयागयुक्तां मातृकां न्यसेत् । प्रपञ्चयागयुक्ताया मातृकायाः ब्रह्मा ऋषिः । गायत्री छन्दः । समस्तवस्तुव्याप्तं परतरं तेजो देवता । व्यञ्जनानि बीजानि । स्वराः शक्तयः । मोक्षार्थे विनियोगः ।

स्वाहा हृत् । सोहं शिरः । हंसश्शिखा । ह्रीं कवचम् । ओं नेत्रम् । हरिहर अस्त्रम् ॥

तारादिपञ्चमनुभिः परिचीयमानं मानैरगम्यमनिशं जगदेकमूलम् ।
संवित्समस्तजगदीश्वरमद्वितीयं तेजः परं भजत सान्द्रसुधाम्बुराशिम् ॥

एवं ध्यात्वा न्यसेत् । ओं ह्रीं अं नारायणं ज्योतिरहं परंज्योतिषि जुहोमि हंसः सोहं स्वाहा नमः । ॐ ह्रीं आं नारायणं ज्योतिरहं परंज्योतिषि जुहोमि हंसस्सोहं स्वाहा नमः । इत्यादिक्षान्तं न्यसेत् । एवं दशमो न्यासः ॥ एवं दशविधलिपिन्यासः समाप्तः ॥

तत्रास्यैव प्रपञ्चसारस्य टीकाकारेण दशविधमातृकान्यासे पक्षविशेष उक्तः । तदुच्यते — तत्र शक्तिकमलामारैस्तथैकैकश इति शक्त्या भुवनेश्या षष्ठः । शक्तिश्रीभ्यां सप्तमः । शक्तिश्रीक्लींभिः अष्टमः । *श्रीशक्तियुगशराद्यैर्नवमः । शक्तिश्रीक्लींभिर्वा नवमः । श्रीशक्तिश्रीमनसिजबीजानामन्यतमाद्यैस्त्रिभिर्बीजैर्वा नवमः । अन्यत्सर्वं समानम् ॥

अथ दशविधमातृकान्यासप्रसङ्गात् सनत्कुमारीयोक्तप्रकारेणापि अत्र योग्यतावशाद्दशविधमातृकान्यासः कथ्यते —

विन्यसेन्मातृकां देहे शुद्धामपि सबिन्दुकाम् ।
सविसर्गां सोभयां च तारश्रीशक्तिमान्मथैः ॥

प्रत्येकैश्च समस्तैश्च पुटितां केशवादिभिः ।
सशक्तिकैरन्वितां च न्यस्य तत्त्वानि विन्यसेत् ॥ इति ॥

अस्यार्थः — अ नमः । आ नमः । इति प्रथमो न्यासः ॥ पुनः अं नमः । आं नमः इति द्वितीयो न्यासः । सबिन्दुकन्यासः ॥ अः नमः ।

* श्रीशक्त्ययुग इति ख, ग, घ, पाठः ।

आः नमः । इत्यादि तृतीयः सविसर्गकः ॥ पुनः अं नमः । आं नमः । इत्यादिचतुर्थो बिन्दुविसर्गोभयात्मकः । पुनः ओं अं ओं नमः इत्यादिप्रणवपुटितः पञ्चमः ॥ पुनः श्रीबीजपुटितः षष्ठः ॥ पुनर्भुवनेशीपुटितः सप्तमः ॥ पुनः कामबीजपुटित अष्टमः ॥ पुनः प्रणवश्रीभुवनेशीकामबीजैश्चतुर्भिरपि पुटितो नवमः ॥ पुनः पूर्वोक्तवत् केशवादिभिः दशमः ॥ तत्र तत्वानीत्यत्रान्वयो नास्ति ॥

अथ दशविधमातृकान्यासप्रसङ्गात् क्रमदीपिकोक्तक्रमेण पञ्चविधमातृकान्यासश्च योग्यतावशात् लिख्यते—

इत्यारचय्य वपुरर्णशतार्धकेन सार्धक्षपेश सविसर्गक सोभयैस्तैः ।
विन्यस्य केशवपुरस्सरमूर्तियुक्तैः कीर्त्यादिशक्तिसहितैर्न्यसतु क्रमेण ॥

अस्यार्थः—प्रथमं शुद्धमातृकावर्णैर्न्यस्य, पुनः सानुस्वारमातृकावर्णान् न्यसेत् ॥ पुनः सविसर्गकमातृकावर्णैः तृतीयो न्यासः । पुनश्चतुर्थस्तु पूर्वं प्रथमवर्णं सबिन्दुकमुच्चार्य पुनस्तदन्ते विसर्गं चोच्चरेत् । एवमेव द्वितीयवर्णं च । एवमुभयात्मकैर्वर्णैः चतुर्थो न्यासः । पुनः केशवादिभिः प्रागुक्तवत् न्यसेत् । एवं पञ्चमो न्यासः । एवं पञ्चविधमातृकान्यास उक्तः ॥

अथागस्त्यसंहितोक्तप्रकारेणान्तर्मातृकाप्यत्र लिख्यते—

अथान्तर्मातृकान्यासः कण्ठहृन्नाभिगुह्यके ।
पायौ भ्रूमध्यगे पद्मे षोडशद्वादशच्छदे ॥

दशपत्रे च षट्पत्रे चतुष्पत्रे द्विपत्रके ।
पञ्चाशद्वर्णविन्यासः पत्रसंख्याक्रमाद्भवेत् ॥

एकैकवर्णमेकैकपत्रान्तर्विन्यसेन्मुने ।
एवमन्तः प्रविन्यस्य मनसाऽतो बहिर्न्यसेत् ॥

अथ प्राणाग्निहोत्रविधिः ॥ तन्मन्त्र उच्यते — ॐ ह्रीं परंज्योतिषि जुहोमि सोऽहं हंसः स्वाहा इति मन्त्रः । प्राक् न्यासविधानोक्तवदङ्गानि ॥

अथ मातृकाक्षरयोगेन सर्वमन्त्रजपविधिं वक्ष्ये —

इतीरिता सकलजगत्प्रभाविनी क्रमोत्क्रमाद्गुणितमहार्णमालिका ।
अभीष्टसाधनविधये च मन्त्रिणां भवेन्मनुप्रतिपुटिताक्षमालिका ॥ इति ॥

अस्यार्थः — इत्येवं प्रोक्ता सकलजगत्प्रभवकर्त्री मातृकासरस्वती । एषा तावन्मन्त्रिणामभीष्टसिद्धये भवति । एवं क्रियमाणा चेत् अनुलोम-विलोमक्रमेण गुणिता शतसंख्यावती अक्षरमालिका । अक्षरमालयैवानया शतसंख्यया जपः कार्य इत्यर्थः । कथमिति ॥

मनुप्रतिपुटिता मनुभिः प्रत्यक्षरं पुटिता आदावन्ते च प्रयुज्यमाने-त्यर्थः । तत्रानुलोमया प्रतिलोमया च मातृकया पुटितत्वं सिध्यति । अत्रास्त्युपदेशः ॥ अकारं पूर्वं सबिन्दुकमुच्चार्य अभीष्टमन्त्रं जपेदित्येको जपः । पुनरपि आमिति सबिन्दुकं पुनरभीष्टमन्त्रः । एवं द्वितीयो जपः । एवं क्रमेण ळमित्यन्तं जपेत् । एवं कृते पञ्चाशद्वारं जायते । पुनः क्षकारं मेरुस्थानीयं मन्त्ररहितं केवलं जपेत् । पुनः प्रतिलोमार्थं पूर्वं मन्त्रं जपेत् । तन्मन्त्रान्ते ळः इति ळकारं विसर्गान्तमुच्चरेत् । पुनरपि मन्त्रः । तदन्ते च हकारं विसर्गान्तमुच्चरेत् । पुनरपि मन्त्रः । एवं अकारान्तं जपः कर्तव्यः । एवमनुलोमेन प्रतिलोमेन च कृते मातृकामन्त्रेण पुटिता भवति । एवं कृते शतसंख्या च पूर्यते । तत्र अष्टोत्तरशतसंख्यापेक्षायां स्वरादिवर्गाष्टकेन वा पञ्चमवर्गादियादितृतीयान्तैर्वर्णैरष्टभिर्वा संयोजयेत् । एवमनुलोमविलोमक्रमेण मातृकाक्षरमालया जपः कर्तव्यः । एवं जपतः सर्वे मन्त्रा झटिति सिध्यन्ति ॥

अथ शूलिनीकल्पे तु मातृकाक्षरैः गणनाविधौ कालभेदेन बिन्दु-साहित्यराहित्यमेवंक्षरविशेषश्चोक्तः ॥

शुद्धामुषसि बिन्द्वन्तां मध्याह्ने सर्गसंयुताम् ।
सायाह्ने मध्यरात्रौ तु बिन्दुसर्गान्तमातृकाम् ॥

शुद्धायां हक्षमध्यं स्यात्, ळकारमित्यर्थः ।
सर्गायां सर्गवर्णकम् ।
बैन्दव्यां बिन्दुसर्गायां बिन्दुवर्णं परित्यजेत् ॥

मेरुस्थानीयत्वेनेति शेषः । ऊर्ध्वाम्नाये--

मातृकाजपमात्रेण मन्त्राणां कोटिकोटयः ।
प्रजप्तास्स्युर्न सन्देहः यस्मात्सर्वं तदुद्भवम् ॥

मण्डलं प्रजपेन्मन्त्रं मातृकाक्षरसंपुटम् ।
अनुलोमविलोमेन मन्त्रसिद्धिः प्रजायते ॥

सहस्रमिति शेषः ॥

अथ भुक्तिसमये प्राणाग्निहोत्रविधिरुच्यते – प्रथमं स्वेष्टदेवस्य सकलीकरणं विधाय तं ध्यात्वा ॐ श्रद्धायां प्राणे निविष्टोऽमृतं जुहोमीत्यारभ्य श्रद्धायां ब्रह्मणि म आत्मेत्यन्तैर्मन्त्रैः दक्षिणोत्तरपश्चिमपूर्वमध्यमकुण्डेषु अग्नीनुज्ज्वाल्य सप्रणवे लिपिपद्मे हविरादाय अन्नं प्राणमन्नमपानमाहुः । अन्नं मृत्युं तमु जीवातुमाहुः । अन्नं ब्रह्माणो जरसं वदन्ति । अन्नमाहुः प्रजननं प्रजानाम् । इत्युपस्थाय सदशप्रणवया गायत्र्या त्रिवारमभिमन्त्र्य, विद्युदसि विद्य मे पाप्मानं इति हस्तक्षालनं विधाय परिषिच्योपस्पृश्य, ॐ तद्ब्रह्म ॐ तद्वायुः ॐ तदात्मा ॐ तत्सर्वं ॐ तत्पुरोर्नमः । अन्तश्चरति भूतेषु गुहायां विश्वमूर्तिषु । त्वं यज्ञस्त्वं वषट्कारस्त्वं विष्णुः पुरुषः परः । त्वमापो ज्योतीरसोमृतं ब्रह्म भूर्भुवस्सुवरोम् । अमृतोपस्तरणमसीत्याचम्य, चित्तिः स्रुक् । चित्तमाज्यम् । वाग्वेदिः । आधीतं बर्हिः । इत्यादि

नृम्णान्धात्स्वाहेत्यन्तं जपित्वा ॐ गार्हपत्ये प्राणे, हिरण्यवर्णाश्शुचयः पावकाः, अग्निं विहृत्यात्मानमुपचर्य ऊर्ध्वं गच्छतु श्रद्धायां प्राणे निविष्टो-मृतं जुहोमि शिवो मा विशाप्रदाहाय प्राणात्मने नारायणाय मह्यं मह्यं स्वाहेति दक्षिणाग्नौ हुत्वा, ॐ अन्वाहार्ये अपाने गगनवर्णाश्शुचयः पावकाः अग्निं विहृत्यात्मानमुपचर्य अधो गच्छतु श्रद्धायामपाने निविष्टोमृतं जुहोमि शिवो मा विशाप्रदाहाय, अपानात्मने नारायणाय मह्यं मह्यं स्वाहेत्युत्तरे हुत्वा, ॐ आहवनीये व्याने रक्तवर्णाः शुचयः पावकाः अग्निं विहृत्यात्मान-मुपचर्य तिर्यक् गच्छतु श्रद्धायां व्याने निविष्टोमृतं जुहोमि शिवो मा विशाप्रदाहाय व्यानात्मने नारायणाय मह्यं मह्यं स्वाहेति पश्चिमे हुत्वा ओं सभ्ये उदाने, कृष्णवर्णाश्शुचयः पावकाः अग्निं विहृत्यात्मानमुपचर्य ऊर्ध्वाधस्तिर्यक् गच्छतु श्रद्धायामुदाने निविष्टोमृतं जुहोमि शिवो मा विशाप्रदाहाय उदानात्मने नारायणाय मह्यं मह्यं स्वाहेति प्राच्ये हुत्वा, ओं आवसथीये समाने सुप्रभावर्णाश्शुचयः पावकाः अग्निं विहृत्यात्मान-मुपचर्य समं गच्छतु श्रद्धायां प्राणे निविष्टोमृतं जुहोमि शिवो मा विशा-प्रदाहाय समानात्मने नारायणाय मह्यं मह्यं स्वाहेति मध्ये हुत्वा अग्नीनेकी-कृत्य ओं गार्हपत्यान्वाहार्याहवनीयसभ्यावसथ्येषु प्राणा-पान-व्यानो-दान-समानेषु, हिरण्यगगन-रक्त-कृष्ण-सुप्रभावर्णाश्शुचयः पावकाः अग्निं विहृत्यात्मान-मुपचर्य ऊर्ध्वाधस्तिर्यक् समं गच्छतु ॥

अहं वैश्वानरो भूत्वा जुहोम्यन्नं चतुर्विधम् ।

पचामि श्रद्धायां ब्रह्मणि म आत्मा निविष्टोऽमृतं जुहोमि, शिवो मा विशाप्रदाहाय क्षेत्रज्ञात्मने नारायणाय मह्यं मह्यं स्वाहेति हुत्वा पूर्णाहुतिं तूष्णीं हुत्वा गण्डूषादिकं कृत्वा आचम्य वृष्टिरसि वृश्च मे पाप्मानमिति हस्तप्रक्षालनं विधाय, प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकस्तेनान्ने-नाप्यायस्व ॥

अंगुष्ठमात्रः पुरुषोङ्गुष्ठं च समाश्रितः।
ईशस्सर्वस्य जगतः प्रभुः प्रीणातु विश्वभुक्॥

इति दक्षिणपादांगुष्ठे जलधारामासिच्य उद्वयं, चित्रमित्यादिना उपतिष्ठेत। इति भोजनप्रकारः। एवं संभाव्य भोजने कृते फलमाह॥

सायं प्रातरनेन होमविधिना भोज्यानि नित्यं भजन्
प्राणी न प्रमदोदरं प्रविशति प्राणाग्निहोत्री पुनः॥ इति

इति प्रपञ्चसारसारसंग्रहे गीर्वाणेन्द्रविरचिते
सप्तमः पटलः॥



## ॥ अथ अष्टमः पटलः ॥

## ॥ अथ त्रिपुरा विधिः ॥

आराधऋषिः। देवीगायत्रीछन्दः। त्रिपुराभैरवीदेवता। ऐं बीजम्। क्लीं शक्तिः, सौः वा शक्तिः। ह्स्रैं आं हृत्। ह्स्लैं ईं शिरः। ह्सैं ऊं शिखा। ह्स्रैं ऐं कवचम्। ह्स्रैं औं नेत्रम्। ह्स्रैं अः अस्त्रम्। ध्यानम् —

आताम्रार्कायुताभां कलितशशिकलारञ्जितप्तां त्रिनेत्रां
देवीं पूर्णेन्दुवक्त्रां विधृतजपवटीपुस्तकाभीत्यभीष्टाम्।
पीनोत्तुङ्गस्तनार्तां वलिलसितविलग्नामसृक्पङ्कराज-
न्मुण्डस्रक्मण्डिताङ्गीमरुणतरदुकूलानुलेपां नमामि ॥

तप्तेति जटा। सर्वत्र सर्वासां देवतानां दक्षिणहस्ते अभयमुद्रा। वामहस्ते वरदमुद्रा। तत्रान्योन्यसंश्लिष्टप्रसारितांगुलि दक्षिणकरतलं मणिबन्धादूर्ध्वकृताग्रं साधकं माभैषीरिति प्रदर्शयतीत्यभिनयरूपा अभयमुद्रा। मणिबन्धादन्योन्यसंश्लिष्टप्रसारितांगुलिरधस्थिताग्रा उक्ता साधकस्याभीष्टप्रदर्शनाभिनयरूपा वरदमुद्रेति च संप्रदायः। मणिबन्धो नाम हस्ततलस्य मूलदेशः। विलग्नमिति मध्यस्य संज्ञा॥ ह्स्रैं ह्स्क्लरीं ह्स्रौः। इति त्रिपुरामन्त्रः। विद्यैश्वर्यवश्यफलप्रधानोयं मन्त्रः। तत्र मन्त्रोद्धारस्यार्थः संग्रहत उच्यते॥ हकारसकाररेफ ऐकार बिन्दुभिः प्रथमं बीजम्। हकार सकार ककार लकार रेफ ईकारबिन्दुभिः द्वितीयम्। हकार सकार रेफ औकारविसर्जनीयैस्तृतीयम्। तत्र वागैश्वर्यातिशयदतया वाग्भवं बीजमुक्तम्। त्रैलोक्यक्षोभणवश्याकृष्टिदं कामराजम्। शाक्तं क्ष्वेळापहरण कविताकारकं मन्त्रमेतत् प्रोक्तम्। धर्मद्रविणसुखमोक्षप्रदं साधकानाम्। एवं त्रयाणां

बीजानां फलम् । तत्र वाग्भवयोगात् प्रथमबीजस्य वाग्भवसंज्ञा । कामबीजयोगात् द्वितीयस्य तत्संज्ञा । औकारयोगात् तृतीयस्य शाक्तसंज्ञा ॥

अथास्य त्रिपुराभैरवीमन्त्रस्य न्यासविधिः विवरणोक्तप्रकारेणानुष्ठानपद्धत्युक्तप्रकारेण च मिळित्वा लिख्यते—

प्रथमं गुर्वादिवन्दनपूर्वकमस्त्रेण ताळत्रयादि कृत्वा प्राणायामं कुर्यात् । तत्प्रकारः ॥ मूलेन त्रिवारं रेचकं पूरकं च कृत्वा कुम्भककाले मातृकां प्रतिलोमेन जपन् अकारलक्ष्ये परे सर्वं संहरेदिति वर्णवेधः प्राणायामः ॥ पुनः तन्मात्रापञ्चीकृतबीजानि वक्ष्यमाणानि पञ्चभूतस्थानेषु मूर्धास्य हृदयगुह्यपादेषु न्यसन् सर्वं स्पृष्ट्वा, पञ्चीकृतापञ्चीकृतबीजानि वक्ष्यमाणानि पृथिव्यादिस्थानभूतपादादिषु न्यसन्, तानि तन्मात्रासु संहृत्य, गन्धतन्मात्राबीजं वक्ष्यमाणं पादादिजानुपर्यन्तं त्रिन्यस्य मूलेन एकवारं प्राणायामं कुर्वन् गन्धतन्मात्रं रसतन्मात्रे संहृत्य, पुनरुक्तक्रमेण जान्वादिकटिपर्यन्तं कट्यादि हृदयपर्यन्तं तदादि भ्रूमध्यपर्यन्तं तदादि ब्रह्मरन्ध्रपर्यन्तं रसादितन्मात्राबीजानि क्रमेण न्यस्त्वा, पूर्ववन्मूलेन प्राणायामं कुर्वन् इतरेतरस्मिन् पूर्ववत् संहरेदिति कलावेधप्राणायामः ॥ तत्र लं वं रं यं हं इति पञ्चभूततन्मात्राबीजानि । पुनः ह्लां ह्वीं ह्रूं ह्यैं ह्रौं इति अपञ्चीकृतबीजानि । पुनः ह्लां ह्वीं ह्लूं ह्रैं ह्लौं इति पञ्चीकृतबीजानि । एवं पूर्वोक्तषडाधारयोगप्राणायामैः सर्वं संहरेदिति योगिनीवेधप्राणायामः । एवं देहं संशोध्य पुनः प्राणायाममन्त्रैः व्युत्क्रमेण सर्वं स्पृष्ट्वा लिपिन्यासं कृत्वा मूलमन्त्रेण प्राणायामं कृत्वा पीठन्यासं कुर्यात् ॥ तत्प्रकारः ॥ आधारशक्त्यै नमः । मूलप्रकृत्यै नमः । पृथिव्यै० अमृतार्णवाय० रत्नद्वीपाय० रत्नमण्डपाय० कल्पकवृक्षाय० श्वेतच्छत्राय० इति मूलाधारादारभ्य हृदयपर्यन्तं न्यस्त्वा, धर्माय० ज्ञानाय० वैराग्याय० ऐश्वर्याय० वरदाय० इत्येतान् दक्षिणकर्णांसपार्श्वकटिपादेषु,

अधर्माय० अज्ञानाय० अवैराग्याय० अनैश्वर्याय० अवरदाय० इति वामकर्णांस पार्श्वकटिपादेषु न्यसेत् ॥

इच्छायै० ज्ञानायै० क्रियायै० कामायै० कामिन्यै० कामदायिन्यै० रतिप्रियायै० नन्दायै० मनोन्मन्यै० ९. इति नवशक्तयः ॥

एता हृदये अष्टदळेषु नवमीं कर्णिकायां च न्यस्त्वा, पुनः नवयोन्यासनाय नमः इति व्याप्य नवयोनिन्यासं समाचरेत् ॥ मन्त्रस्य बीजत्रयैः श्रोत्रद्वयचिबुकेषु प्रथमपर्यायः । शङ्खद्वयास्येषु द्वितीयः । शङ्खद्वयं नाम अपाङ्गयोरधः प्रदेशः । नेत्रद्वयघ्राणेषु तृतीयः । अंसद्वय हृत्सु चतुर्थः । कूर्परद्वय कुक्षिषु पञ्चमः । जानुद्वयाण्डेषु षष्ठः । पादद्वयगुह्येषु सप्तमः । पार्श्वद्वयहृत्सु अष्टमः । स्तनद्वयकण्ठेषु नवमः । एवं नवयोनिन्यासं कृत्वा, पुनः द्वादशशक्तिन्यासः ॥

ऐं वामायै० ऐं ज्येष्ठायै० ऐं रौद्र्यै० ऐं अम्बिकायै० इति हृत्कोणरेखात्रये मध्ये च न्यसेत् । इच्छायै० ज्ञानायै० क्रियायै० कुब्जिकायै० इति हृत्कोणबाह्येषु मध्ये च । वह्न्यै० विषघ्न्यै० दूतयै० सर्वानन्दायै० इति कोणत्रितये मध्ये च न्यसेत् । इत्थं द्वादशशक्तिन्यासं कृत्वा, पुनः चतुष्पीठन्यासः ॥

ऐं क्लीं सौः इति बालाबीजत्रयान्ते कामरूपपीठाय नमः । बालाप्रथमबीजान्ते जालन्धरपीठाय नमः । बाला द्वितीयबीजान्ते पूर्णगिरिपीठाय नमः । बालातृतीयबीजान्ते ओड्याणपीठाय नमः । इति शिरो ललाटहृदयगुह्येषु पीठचतुष्टयं न्यस्त्वा, पुनः बालाप्रथमबीजान्ते, परायै नमः । बालाप्रथमबीजान्ते अपरायै नमः । बालाप्रथमबीजान्ते परापरायै नमः । ह्सौः इति प्रासादपराबीजान्ते सदाशिवमहाप्रेतपद्मासनाय नमः । इति पीठसमष्टिमन्त्रेण व्यापयेत् । पुनः पादुकासप्तकं विन्यसेत् ॥

तत्प्रकारः — बालाबीजत्रयमुक्त्वा अण्डजे अङ्गजानन्ददेवि अहिकरि आज्ञां पूजयामि नमः। बालाप्रथमबीजान्ते परायै श्रीगुरुपादुकापङ्क्त्यै नमः। बालाद्वितीयबीजान्ते अपरायै श्रीगुरुपादुकापङ्क्त्यै नमः। बालातृतीयबीजान्ते परापरायै श्रीगुरुपादुकापङ्क्त्यै नमः। प्रथमबीजान्ते श्रीआनन्दनाथदेवि श्री गुरुपादुकाभ्यो नमः। द्वितीयबीजान्ते श्री अवतारनाथदेवि श्रीगुरुपादुकाभ्यो नमः। तृतीयबीजान्ते श्रीसिद्धनाथदेवि श्रीगुरुपादुकाभ्यो नमः। इति शिरसि, पादुकासप्तकं विन्यस्य, बालाबीजत्रयान्ते त्रिपुरादेविमूर्तये नमः। इति मूर्तिं हृदि विन्यसेत्। एवं आधारशक्तिन्यासमारभ्य एतावत्पर्यन्तं पीठन्यासः। पुनरस्मिन्पीठे त्रिपुराभैरवीं समावाह्य सकलीकृत्य दक्षिणनासिकाश्वासमार्गेण तेजस्स्वीकारपूर्वकं अङ्गैः करन्यासं कृत्वा मूलेन व्याप्य मातृकान्यासं कृत्वा, पुनः प्राक् सप्तमपटलोक्तप्रकारेण श्रीकण्ठादिन्यासं च कुर्यात्। पुनः प्रपञ्चसारे त्रिपुरान्यासविधाने "नाभेरथाचरण"मित्यत्र अथशब्दप्रयोगात् उक्त न्यासानन्तरं, प्रपञ्चसारोक्तप्रकारेण वक्ष्यमाणन्यासं कुर्यात्॥

नाभेरथाचरणमाहृदयाच्च नाभि-
मूर्ध्नस्तथा हृदयमित्यमुना क्रमेण।
बीजैस्त्रिभिर्न्यसतु हस्ततले च सव्ये
दक्षाह्वये द्वितयमप्युभयोस्तृतीयम्॥

वाग्भवेन पुनरंगुळीष्वधो विन्यसेच्च पुनरुक्तमार्गतः।

तत्र वाग्भवं प्रथमकूटम्। पुनः विवरणोक्तप्रकारेण न्यासविधिः — हृदयत्रिकोणेषु, दक्षिणवामोर्ध्वनेत्रेषु, कर्णद्वयास्येषु, अंसद्वयपृष्ठेषु, कूर्परद्वयनाभिषु, मूळबीजत्रयैः पञ्चावृत्तिन्यासः। पुनरेतैरेव मन्त्रैः नवयोनिन्यासस्थानेषु नवावृत्तिन्यासं कुर्यात्। पुनः ह्सौः इति प्रासादपराबीजान्ते अमृतेश्वर्यै नमः। मूलमन्त्रमध्यबीजान्ते योगेश्वर्यै नमः। आद्यबीजान्ते

विश्वयोन्यै नमः । इति भ्रूमध्यहृदयमूलाधारेषु न्यसेत् । एवममृतेश्वरीन्यासं कृत्वा, पुनः मूलप्रथमबीजान्ते, रत्यै नमः । द्वितीयबीजान्ते प्रीत्यै नमः । तृतीयबीजान्ते मनोभवायै नमः । इति मूलाधार हृदयभ्रूमध्येषु रत्यादिन्यासः । पुनः हकारसकाररेफत्रयोदशस्वरसंयुक्तबीजान्ते ह्स्रौं ईशानमनोभवमूर्ध्ने नमः इति पुनरपि ह्स्रौं तत्पुरुषमनोभववक्त्राय नमः । ह्स्रौं अघोरमनोभवहृदयाय नमः । ह्स्रौं वामदेवमनोभवगुह्याय नमः । ह्स्रौं सद्योजातमनोभवपादाय नमः । इति तत्र तत्र न्यसेत् ॥

पुनरपि प्रोक्तबीजपूर्वकं ईशानमनोभव ऊर्ध्ववक्त्राय नमः । बीजपूर्वकं तत्पुरुषमनोभवपूर्ववक्त्राय नमः । इत्यादिक्रमेण पञ्चवक्त्रेषु न्यसेत् ॥

पुनष्षडङ्गानि विन्यस्य, पुनरीशानादि मूर्तिन्यासस्थानेषु तत्रोक्तमनोभवपदं त्यक्त्वा द्रावणबाणादि पञ्चबाणपदानि क्रमेण संयोज्य मूर्धादिपूर्वोक्तदशसु स्थानेषु न्यसेत ॥

पुनः सुभगादिन्यासः । ऐं क्लीं ब्लूं स्त्रीं सः इति पञ्चतारपुरस्सरं, सुभगायै नमः । भगायै नमः । भगसर्पिण्यै नमः । भगमालिन्यै० अनङ्गायै० अनङ्गकुसुमायै० अनङ्गमेखलायै० अनङ्गमदनायै० एताश्शक्तीः पञ्चबीजपूर्विकाः मूलाधार-लिङ्ग-नाभि-हृदय-गळलम्बिका-भ्रूमध्य-मूर्धसु न्यसेत् ॥ पुनः मातृभैरवाष्टकमिळितन्यासः ॥

आं क्षां ब्रह्माण्यै नमः । अं क्षं असिताङ्गभैरवाय नमः । ईं शीं माहेश्वर्यै० इं शि रुरुभैरवाय० ऊं धूं कौमार्यै० उं धुं चण्डभैरवाय० ॠं प्लूं वैष्णव्यै० ऋं प्लुं क्रोधभैरवाय० ॡं तूं वाराह्यै० ऌं तुं उन्मत्तभैरवाय० ऐं टैं इन्द्राण्यै० ऐं टें कपालिभैरवाय० औं यौं चामुण्डायै० ओं यों भीषणभैरवाय० अः भां चण्डिकायै० अं भं संहारभैरवाय नमः । इति दीर्घस्वरबीजपूर्वकं मातृष्टकं उक्तबीजपूर्वकभैरवाष्टकेन सह पूर्वोक्तमूलाधाराद्यष्टसु स्थानेषु न्यसेत् ॥

पुनः शिरसि मूलमन्त्रं न्यस्त्वा व्याप्य अङ्गऋष्यादिकं विन्यस्य भूषणन्यासं कुर्यात्। तत्प्रकारः — शिरो-ललाट-भ्रू-कर्णद्वया क्षिद्वय-नासाद्वय-गण्डद्वय-तालुद्वय-दन्तद्वयास्येषु स्वरान्, गळ-कण्ठ पार्श्वद्वय-स्तनद्वय-बाहुद्वय-कूर्परद्वय पाणितल-तत्पृष्ठ-नाभि-गुह्य-ऊरुद्वय-जानुद्वय-जङ्घाद्वय-सन्धिद्वय- पादतलद्वय-पादांगुष्ठद्वयेषु कादिरेफान्तं विन्यस्य, अवशिष्टानष्टौ वर्णान् काञ्ची-ग्रैवेय-कटक हृद्गुह्य-कुण्डलद्वय-मौळिषु स्थानेषु वक्ष्यमाणवर्णव्यत्यासक्रमेण, अन्त्याक्षरात् सप्तमद्वितीयाष्टमषष्ठान्त्य(द्य) चतुर्थपञ्चमतृतीयाक्षराणि वळलशक्षसषह इत्येतानि क्रमेण न्यसेत्। एवं भूषणन्यासः॥

पुनर्ध्यात्वा पुनरीशानादिभिः पञ्चमूर्तिभिः अंगुष्ठादिषु न्यसेत्। तत्प्रकारः — मूलमन्त्रेण करतलपृष्ठपार्श्वेषु न्यस्त्वा ह्रौं ईशानमनोभवांगुष्ठाभ्यां नमः। ह्रैं तत्पुरुषमकरध्वज तर्जनीभ्यां नमः। ह्रुं अघोरकुमारकन्दर्पमध्यमाभ्यां नमः। ह्रिं वामदेवमन्मथानामिकाभ्यां नमः। ह्रं सद्योजातकामदेव कनिष्ठिकाभ्यां नमः। इति त्रयोदशैकादश-पञ्चम-तृतीय प्रथम-स्वरात्मक-भुवनेशीपूर्वकं करन्यासं कुर्यात्। पुनः षडङ्गेन च करन्यासं मूलमन्त्रप्रथमकूटेन कृत्वा, पुनः बाणपञ्चकं न्यसेत्॥ द्रां शोषणबाणांगुष्ठाभ्यां नमः। द्रीं मोहनबाण तर्जनीभ्यां नमः। क्लीं सन्दीपनबाण मध्यमाभ्यां नमः। ब्लूं तापनबाणानामिकाभ्यां नमः। सः सम्मोहनबाणकनिष्ठिकाभ्यां नमः। इत्यङ्गुळीषु न्यस्त्वा, मूलेन देहे त्रिशो व्याप्य, मूलपुटितमातृकां विन्यस्य, पुनरपि श्रीकण्ठादिन्यासं कृत्वा, मूर्धाधारहृत्सु मूलमन्त्रवर्णान् न्यस्त्वा, पुनः मूलमन्त्रप्रथमकूटमुक्त्वा आत्मतत्वेश्वर्यै त्रिपुराभैरव्यै नमः। द्वितीयकूटान्ते विद्यातत्वेश्वर्यै त्रिपुराभैरव्यै नमः। तृतीयकूटान्ते शिवतत्वेश्वर्यै त्रिपुराभैरव्यै नमः। समस्तकूटान्ते सर्वतत्वेश्वर्यै त्रिपुराभैरव्यै नमः। नाभ्याद्यास्यान्तं गुह्यादिभ्रूमध्यान्तं, मूलाधारादिमस्तकान्तं पादादिमूर्धान्तं च व्यापकरूपेण तत्वन्यासं कृत्वा, पुनः पादजानुगुह्यनाभिहृत्कण्ठास्यभ्रूमस्तकेषु मूलमन्त्रैः त्रिरावृत्तिन्यासं कुर्यात्। एवं न्यस्त्वा तत्वार्धलक्षं जपेत्। तत्वानि च चतुर्विंशति-

तत्त्वानि । तदर्धं तु द्वादश । संभूय षट्त्रिंशल्लक्षं जपेदिति सत्संप्रदाय-सर्वस्वव्याख्याकारमतम् ॥ अश्वारिकुसुमैः पलाशकुसुमैश्च त्रिमधुरसिक्तैः संभूय द्वादशसहस्रं पुरश्चरणाहोमः । षट्त्रिंशल्लक्षजपः । षट्त्रिंशत् सहस्रं होमश्च । इति विवरणकारमतम् ॥ मन्त्रदेवताप्रकाशिकायान्तु द्वादश-लक्षजपः द्वादशसहस्रं होमश्च इत्युक्तः ॥ मूलग्रन्थे प्रपञ्चसारेपि स्पष्टार्थ-स्तावत्तथैव ॥ अत्र त्रिमधुरं नाम क्षौद्रक्षीराज्यानि मिळितानि । अश्वारि-अरळि ॥ पुनर्मूलमन्त्रेण प्राणायामं कृत्वा निजाधारराजद्योनिस्थां दिव्यरूपां मनसा उपचारैस्समभ्यर्च्य ध्यानविशेषरूपां योनिमुद्रां निबन्ध्यात् ॥ तत्प्रकार उच्यते —

मूलाधारादारभ्य तां तेजोरूपिणीं सुषुम्नारन्ध्रेण मूर्धस्थसहस्रदळपद्म-कर्णिकामध्यस्थषोडशदळमध्यस्थध्रुवचन्द्रबिम्बावध्यूर्ध्वं नीत्वा, तत्रस्थध्रुवेन्दु-बिम्बगळितवरामृतधाराप्लावनसमृद्धरूपां पुनर्मूलाधारं तथैवानयेत् । एवंविध-गमागमस्य योनिमुद्रेति नित्यातन्त्रेषु संज्ञा ॥ पुनः बाह्ययोनिमुद्रां च त्रिपुर-सुन्दरीविधाने वक्ष्यमाणां प्रदर्श्य, (प्रदर्शयेत् ।) पुनः बाह्यपूजार्थं नवयोनि-चक्रप्रकार उच्यते —

वह्नेः पुरद्वितयवासवयोनिमध्य-
सम्बन्धवह्निवरुणेशसमाश्रिता श्रीः ।
देव्यर्चनाय मुनिभिर्विहितं पुरैव
लोके सुदुर्लभमिदं नवयोनिचक्रम् ॥

अस्यार्थः — प्रथमं प्रागग्ररूपेण त्रिकोणं विलिख्य पुनस्तन्मध्यत आरभ्य प्रागग्रेणैव एकं त्रिकोणं विलिख्य तस्य त्रिकोणस्य मध्यतः प्रथम-त्रिकोणाग्रादुपरि द्व्यंगुलमानं विसृज्य, तत आरभ्य पश्चिमाग्रं ईशानाग्नि-वरुणगताग्रं प्रथमत्रिकोणप्रथमरेखाया बहिर्निर्गतं च सन्धिवर्मसंयुक्तं च, एवं त्रिकोणं विलिखेत् । एवं विलिखिते अष्टदिक्षु अष्टकोणानि मध्ये एकं

च संभूय नवयोनयो जायन्ते। अथवा प्राचीदिगग्रेण लिखितमिदं चक्रमेव प्रतीचीदिगग्रे विलिखेत् इत्येकेषां मतम्। पुनर्मध्ययोनेः त्रिषु कोणेषु त्रिपुराभैरवीमन्त्रस्य त्रिखण्डे एकमेकं विलिख्य, अवशिष्टाष्टकोणेषु त्रिपुरागायत्रीवर्णान् त्रिशस्त्रिशो विलिख्य, तद्बहिरष्टदळं पद्मं विलिख्य तेषु अष्टभैरवबीजानि च अष्टमातृबीजानि च विलिखेत्। ह्रस्वस्वराः सबिन्दुकाः भैरवबीजानि। दीर्घस्वरा मातृबीजानि। पुनस्तद्बहिर्वृत्तं विलिख्य, तस्मिन् मातृकावर्णैः संवेष्ट्य तद्बहिश्चतुरश्रं विलिख्य, तत्कोणेषु मूलमन्त्रस्य मध्यखण्डं विलिखेत्॥

त्रिपुरादेवि विद्महे कामेश्वरी च धीमहि। तन्नः क्लिन्नः प्रचोदयात्॥ इति (त्रिपुरा) गायत्री। एतत्सर्वं विवरणकारैरुक्तम्। एवं नवयोनिचक्रप्रकारः॥

अथ पूजा—वामायै० ज्येष्ठायै० रौद्र्यै० अम्बिकायै० इति चतस्रः पीठस्य प्रागादिदळकेसरेषु, इच्छायै० ज्ञानायै इति पार्श्वद्वये, क्रियायै इति मध्ये, कुब्जिकायै० वह्न्यै० विघ्न्यै० दूतयै० इति वाय्वादिकोणदळकेसरेषु, सर्वानन्दायै इति मध्ये च। एवं पीठं संपूज्य, तदुपरि नवयोनिचक्रं प्रतिष्ठाप्य, तन्मध्ये शुद्धोदकैः कलशं निधाय, तस्मिन्समावाह्य देवीमावरणैस्सह संपूजयेत्। सर्वत्र कलशयन्त्रोक्तस्थले कलशैर्विना केवलयन्त्रोपि पूजयितुं शक्यते इति संप्रदायः॥

प्रथमं प्राङ्मध्ययोन्योरन्तराळे ह्स्रैं परगुरुभ्यो नमः, ह्स्रैं अपरगुरुभ्यो नमः, ह्स्रैं परापरगुरुभ्यो नमः, इति प्रथमकूटपुरस्सरं समर्चयेत्। प्राक्पश्चिमतः तेषामासनक्रमः। पुनरङ्गैः वाग्भवखण्डकृतैः आग्नेयादिषु पुरतो नेत्रं दिक्ष्वस्त्रं, पुनः द्रां शोषणबाणाय नमः, द्रीं मोहनबाणाय नमः, क्लीं दीपनबाणाय नमः, ब्लूं तापनबाणाय नमः, सः मादनबाणाय नमः, एतान् चतुरो बाणान् मध्ययोनेरभितः, पञ्चममग्रकोणे च समर्चयेत्॥

पुनः सुभगायै० भगायै० भगसर्पिण्यै० भगमालिन्यै० अनङ्गायै० अनङ्गकुसुमायै० अनङ्गमेखलायै० अनङ्गमदनायै० एताः शक्तयः इतराष्टयोनिषु, तद्बहिः दळकेसरेषु मातृभिश्चण्डिकान्ताभिः समर्चयेत् । तद्दलेषु तद्भर्तृभिरष्टभैरवैः असिताङ्गभैरवाय० रुरुभैरवाय० चण्डभैरवाय० क्रोधभैरवाय० उन्मत्तभैरवाय० कपालिभैरवाय० भीषणभैरवाय० संहारभैरवाय० इति, तद्बहिः इन्द्रादिभिश्च समर्चयेत् ॥

एवं त्रिपुरापूजाविधिः ॥

---

## अथ प्रयोगविधिः ॥

अच्छाभस्वच्छभूषो धरणिमयगृहे वाग्भवं लक्षमेकं
योऽ जप्यात्तद्दशांशं विहितहुतविधिः मन्त्रजप्ताञ्जनादिम् ।
काव्यैर्नानार्थवृत्तैर्भुवनमखिलमापूरयित्वा स्वकीयैः
मारार्त्या विह्वलाभिः पुनरयमनिशं सेव्यते सुन्दरीभिः ॥ इति ॥

धरणिमयगृहं चतुरश्रम् । वाग्भवं प्रथमकूटम् । चतुरश्रे स्थित्वा, वाग्भवं लक्षं जप्त्वा, दशांशं पूर्वोक्तपलाशकुसुमैः अश्वारिकुसुमैश्च हुनेत् । तस्मादुक्तफलं स्यात् । इत्यर्थः । प्रयोगान्तरम् –

रक्ताकल्पारुणतरदुकूलार्तवालेपनाढ्यो
मौनी भूसद्मनि सुखनिविष्टो जपेल्लक्षमेकम् ।
बीजं मन्त्री रतिपतिमयं प्रोक्तहोमावसानं
योऽसौ लोके स सुरमनुजैः सेव्यते पूज्यते च ॥

अस्यार्थः — भूगृहे स्थित्वा उक्तवस्त्रादियुक्तः कामबीजाख्यं द्वितीय-

कूटं पूर्वोक्तवदेव होमादियुतं लक्षं जप्यात् । होमद्रव्यं तु पूर्ववदेव । तत्रार्तवं प्रसूनम् ।। प्रयोगान्तरम् —

धरापवरके तथा जपतु लक्षमन्त्यं मनुं
सुशुक्लकुसुमांशुकाभरणलेपनाढ्यो वशी ।
अमुष्य वदनादनारततयोच्चरेत् भारती
विचित्रपदपद्धतिर्भवति चास्य लोको वशे ।। इति ।।

धरापवरकं चतुरश्रम् । तस्मिन् स्थित्वा तृतीयकूटं लक्षं जपेत् । उक्तवस्त्रादियुतः पुनः प्रागुक्तवदेव होमं च कुर्यात् । होमद्रव्यं च प्रागुक्तवदेव ।। प्रयोगान्तरम् –

पलाशपुष्पैर्मधुरत्रयाक्तैः होमं विदध्यादयुतावधि यः ।
सरस्वतीमन्दिरमाशु भूयात् सौभाग्यलक्ष्म्योश्च स मन्त्रजापी ।। इति ।।

अत्र त्रिमधुरं नाम क्षौद्रक्षीराज्यानि । अयमर्थः – त्रिकूटरूपेण त्रिपुरामन्त्रेण त्रिमधुरसिक्तैः पलाशकुसुमैः अयुतं हुनेत् । तत्र मन्त्रजापीति सर्वत्र होमान्ते होमसंख्यं तन्मन्त्रं जपेत् इत्यर्थः । प्रयोगान्तरम् —

राजी-करञ्जाह्वशमीवटोत्थैः समिद्वरैः बिल्वभवप्रसूनैः ।
त्रिस्वादुयुक्तैः हवनक्रियाशु नरेन्द्रनारीनररञ्जनी स्यात् ।। इति ।।

राजी-कटुः । करञ्जं-पुङ्कु । शमी-वह्निः । त्रिस्वादु-पूर्वोक्तमधुरत्रयम् । अयमर्थः–त्रिपुरामन्त्रेण एतैः पञ्चभिर्द्रव्यैः संभूय अयुतं हुनेदिति । प्रयोगान्तरम्-

मालतीवकुलजैर्दलद्दलैः चन्दनाम्भसि घने निमज्जितैः ।
श्रीकरीकुसुमकैर्हुतक्रिया सैव चाशु कविताकरी मता ।। इति ।।

मालती – சிறு செண்பகம், वकुलं – மகிழ் श्रीकरीकुसुमं – பில்வ

குஸுமம் कदम्बमिति केचित् । दळद्दळैरिति विकसितैरित्यर्थः । एतैः मालत्यादिजैः त्रिभिः कुसुमैः चन्दनपङ्कसिक्तैः । संख्यानुक्ते सहस्रं स्यादिति न्यायेन प्रत्येकं सहस्रसंख्यं हुनेदित्यर्थः । प्रयोगान्तरम् —

अनुलोमविलोममन्त्रमध्यस्थितसाध्याह्वयुतं प्रजप्य मन्त्री ।
पटुसंयुतया जुहोतु राज्या नरनारीनरपान्वशे विधातुम् ॥ इति ॥

पटु - லவணம் राजी - கடுகு अयमर्थः — अनुलोमेन तृतीयबीजान्ते साध्यनाम वशं कुर्विति पदयुक्तं संयोज्य पुनः प्रतिलोमेनापि मन्त्रं जप्त्वा उक्तद्रव्यद्वयेन प्रत्येकं सहस्रसंख्यं हुनेदिति । प्रयोगान्तरम्—

मधुरत्रयेण सह बिल्वजैः फलैः हवनक्रियाशु जगतोनुरञ्जनी ।
अपि सैव साधकसमृद्धिदायिनी दिनशो विशिष्टकमलाकरी मता ॥

अत्रापि संख्यानुक्ते सहस्रमिति न्यायात् सहस्रसंख्यं (होमः) । प्रयोगान्तरम् —

खण्डैस्सुधालतोत्थैः त्रिमधुरसिक्तैः जुहोतु मन्त्रितमः ।
सकलोपद्रवशान्त्यै ज्वरापमृत्युप्रणोदनाय वशी ॥

सुधालता- சிந்தில் सुधालताखण्डैः हुनेदित्यर्थः । प्रयोगान्तरम् —

पुल्लैर्बिल्वप्रसूनैः तदभिनवदळैः रक्तवाराहिपुष्पैः
प्रत्येकं बन्धुजीवैररुणसरसिजैरुत्पलैः कैरवाह्वैः ।
नन्द्यावर्तैस्सकुन्दैर्नृपतरुकुसुमैः पाटलीनागपुष्पैः
स्वाद्वक्तैरिन्दिरायै जुहुत च दिनशः सर्पिषा पायसेन ॥ इति ॥

रक्तवाराही - செங்னிலப்பனை बन्धुजीवं - உச்சிச் சிலந்தி उत्पलं - கைநதல் பூ कैरवं - ஆம்பல் कुन्दं - குருக்கத்தி नृपतरु - கொன்னை

पाटली - பாதிரி नागं - नागपुष्पमेव । एतैश्चतुर्दशभिः हुनेत् । प्रत्येकं सहस्र-संख्यया दिनशः सर्पिषा पायसेन च हुनेत् । इति ॥ प्रयोगान्तरम् —

मूलाधारात्स्पृशन्तीं शिखिपुरपुटवीतां प्रभां विद्युदाभां
आर्कात्तन्मध्यगेन्दोस्स्रवदमृतमुचा धारया मन्त्रमय्या ।
सम्यक् संपूर्यमाणं त्रिभुवनमखिलं तन्मयत्वेन मन्त्री
ध्यायन्मुच्येत वैरूप्यकदुरितजरारोगदारिद्र्यदोषैः ॥ इति ॥

अस्यार्थः— मूलाधारात् षट्कोणरूपात् निर्गच्छन्तीं प्रभां मूर्धगतार्क-मण्डलमध्यगतेन्दोर्मण्डलात् स्रवदमृतमुचा धारया त्रिपुरामन्त्रमय्या त्रिभुवनं संपूर्यमाणं ध्यायेत् । तस्मादुक्तफलं स्यादिति ॥ प्रयोगान्तरम्—

वह्नेर्बिम्बद्वयपरिवृताधारसंस्थं समुद्यत्-
बालार्काभं स्वरगणसमावेष्टितं वाग्भवाख्यम् ।
वाण्या स्वीयाद्वदनकुहरात् सन्ततं निस्सरन्त्या
ध्यायेन्मन्त्री प्रततकिरणप्रावृतं दुःखशान्त्यै ॥ इति ॥

अस्यार्थः-- मूलाधारस्थषट्कोणपरिवृतं सूर्यप्रभं बहिष्षोडशस्वर-परिवृतं च वाग्भवाख्यं प्रथमकूटं ध्यात्वा, तत्सुषुम्नारन्ध्रमार्गेण गमागमानुसन्धानं कृत्वा पुनः स्वीयाद्वदनान्निस्सृतेन वाग्भवेन सह प्रततकिरणप्रावृतं त्रिभुवनं ध्यायेत् ॥ इति ॥ प्रयोगान्तरम्--

हृत्पद्मस्थितभानुबिम्बविलसद्योन्यन्तरालोदितं
मध्याह्नार्कसमप्रभं परिवृतं वर्णैः कभाद्यन्तगैः ।
ध्यायन्मन्मथराजबीजमखिलं ब्रह्माण्डविक्षोभकं
राज्यैश्वर्यविनिन्दिनीमपि रमां दत्वा जगद्रञ्जयेत् ॥

अस्यार्थः — हृत्पद्मं द्वादशदलाकारं ध्यात्वा, तन्मध्ये स्थूलवृत्ताकारं

भानुबिम्बं, तन्मध्ये त्रिकोणं च ध्यात्वा, तन्मध्ये कामराजबीजाख्यं मध्यमकूटं ककारादिभकारान्तैः वर्णैर्युग्मशः, कंभं खबं गंफं घंपं इत्येवंप्रकारेण वेष्टितं ध्यायेत् । इति ।। प्रयोगान्तरम् —

मूर्ध्नोऽथ द्वादशान्तोदितशशधरबिम्बस्थयोनौ स्फुरन्तं
संवीतं व्यापकार्णैर्धवलरुचिमकारस्थितं बीजमन्त्यम् ।
ध्यात्वा सारस्वताच्छामृतजललुलितं दिव्यकाव्यादिकर्ता
नित्यं क्ष्वेलापमृत्युग्रहदुरितविकारान्निहन्त्याशु मन्त्री ।।

अस्यार्थः — प्रथमं मूर्ध्नि आरभ्य, उपरि द्वादशाङ्गुलान्ते कल्पार्कमध्यस्थितं प्रणवेन्दुबिम्बं सूक्ष्मवृत्ताकारं ध्यात्वा तन्मध्ये त्रिकोणं ध्यात्वा तन्मध्ये प्रथमस्वराक्षरस्थं यकारादिक्षकारान्तैर्वर्णैर्वृतं धवलरुचिमन्त्यं शाक्तेयं कूटं सारस्वतामृतलुलितं च ध्यायेदिति । प्रयोगान्तरम् —

योनौ परिभ्रमितकुण्डलिरूपिणीं तां
रक्तामृतद्रवमुचा निजतेजसैव ।
व्योमस्थलं सकलमप्यभिपूर्य तस्मिन्
आवेश्य मंक्षु वशयेद्वनितां नरांश्च ।।

अस्यार्थः — मूलाधारे त्रिकोणमध्ये त्रिकूटसमुदायरूपिणीं त्रिपुरां स्वीयतेजसा परिभ्रमणात् कुण्डलाकारां ध्यात्वा अरुणामृतयुजा निजतेजसा सकलं व्योमस्थलं चाभिपूर्याऽखण्डरूपे तस्मिंस्तेजसि स्वं नारीं नरांश्च स्थितान् ध्यायेत् । इति ।। प्रयोगान्तरम् —

गुह्यस्थितं वा मदनस्य बीजं
जपारुणं रक्तसुधास्रवन्तम् ।
विचिन्त्य तस्मिन्विनिवेश्य साध्यं
वशीकरोत्येष विदग्धलोकः ।।

अस्यार्थः—मूलाधारे त्रिकोणं विचिन्त्य तस्मिन् मदनबीजाख्यं मध्यकूटमरुणाकारं रक्तामृतवर्षिणं च ध्यात्वा तस्मिन् स्थितं साध्यं च स्मृत्वा अनया भावनया विदग्धलोकः साध्यं वशीकरोति वाशब्दस्समुच्चये इति ॥ प्रयोगान्तरम्—

आन्त्यं बीजमथेन्दुकुन्दधवळं संचिन्त्य चित्ताम्बुजे
तद्भूतां धृतपुस्तकाक्षवलयां देवीं मुहुस्तन्मुखात् ।
उद्यन्तं निखिलाक्षरं निजमुखे नानारसस्रोतसा
निर्यान्तं च निरस्तसंसृतिभयो भूयात्स वाग्वल्लभः ॥

अस्यार्थः— हृदयांबुजे तृतीयकूटं शाक्तेयं बीजं इन्दुधवळरूपं संचिन्त्य तन्मयीभूतां देवीं पुस्तकाक्षवलयधारिणीं ध्यात्वा पुनस्तन्मुखादुद्यन्तं निखिलाक्षरं च ध्यात्वा पुनस्तन्निखिलाक्षरं निजमुखे नानारसस्रोतसा निर्यातं च ध्यात्वा सः वाग्वल्लभो भवेत् ॥

अथ प्रसङ्गात् धारणासरस्वतीमन्त्रोऽपि लिख्यते—

अनिराकरणऋषिः । अनुष्टुप्छन्दः । धारणासरस्वती देवता । ध्यानम्—

सुरासुरासेवितपादपङ्कजा करे विराजत्कमनीयपुस्तका ।
विरिञ्चिपत्नी कमलासनस्थिता सरस्वती नृत्यतु वाचि मे सदा ॥

(ओं) नमो ब्रह्मणे धारणं मे अस्त्वनिराकरणं मे अस्त्वनिराकरणं धारयिता भूयासं कर्णयोः श्रुतं माच्योढ्वं ममामुष्य ओं । इति मन्त्रः । अनेन जलादिप्राशनं सारस्वतप्रदम् । इदमपि प्रसङ्गाल्लिख्यते—

नकुलीसरस्वतीमन्त्रस्य ब्रह्माऋषिः । गायत्रीछन्दः । नकुलीसरस्वतीदेवता ॥

विकासभाजि हृत्पद्मे स्थितामुल्लासदायिनीम् ।
परवाक्स्तम्भिनीं नित्यां स्मरामि नकुलीं सदा ॥

ऐं ओष्ठाभिधाना नकुली दन्तैः परिवृता पविः । क्लीं सर्वस्यै वाच ईशाना चारु मामिह वादयेत् संरः सौः क्लीं ऐं ॥ इति मन्त्रः ॥ मन्त्रैः व्यस्तैस्समस्तैश्च पञ्चाङ्गानि । अनेन मन्त्रेण दन्तेष्वेकैकमक्षरं अंगुष्ठेन क्रमेण न्यसेत् । वादसामर्थ्यं भवेत् ॥

अथ तत्प्रसङ्गादेव कल्पान्तरोक्तः परासरस्वतीमन्त्रोऽपि लिख्यते— ब्रह्मा ऋषिः । गायत्री छन्दः । परासरस्वती देवता । सौः हृत् । सौः शिरः । इत्याद्यङ्गानि । ध्यानम्—

अकलङ्कशशाङ्काभा त्र्यक्षा चन्द्रकलावती ।
मुद्रापुस्तलसद्बाहा पातु मां परमा कला ॥

सौः । इति मन्त्रः । सारस्वतफलप्रदः ॥

अथ सरस्वतीमन्त्रप्रसङ्गात् कल्पान्तरोक्तबालासरस्वतीमन्त्रोऽपि योग्यतावशात् लिख्यते—

ब्रह्मा ऋषिः । गायत्री छन्दः । बालासरस्वती देवता । ऐं बीजं । क्लीं शक्तिः । सौः कीलकम् । ऐं हृत् । क्लीं शिरः । सौः शिखा । ऐं कवचम् । इत्याद्यङ्गानि ॥

अरुणकिरणजालै रञ्जिताशावकाशा
विधृतजपवटीका पुस्तकाभीतिहस्ता ।
इतरकरवराढ्या फुल्लकल्हारसंस्था
निवसतु हृदि बाला नित्यकल्याणरूपा ॥

ध्यानान्तरम्—

मालासृणीपुस्तकपाशहस्तां बालाम्बिकां श्रीललितां कुमारीम् ।
कुमारकामेश्वरकेळिलोलां नमामि गौरीं नववर्षदेश्याम् ॥

ऐं क्लीं सौः सौः क्लीं ऐं ॥ इति मन्त्रः विद्याप्रधानोयं मन्त्रः ॥

अथ मन्त्रसारोक्त बालात्र्यक्षरी मन्त्रश्चात्र योग्यतावशात् लिख्यते—

ब्रह्मा ऋषिः । नृचित् (निचृत्) छन्दः । बाला वाग्देवी देवता । ऐं हृत् । ऐं शिरः । इत्याद्यङ्गानि ॥

साक्षस्रजं च वरदाभयपुस्तकोद्यत्-
बाहामयुग्मनयनाममलाम्बु(ब्ज)संस्थाम् ।
अच्छाङ्गरागवसनापघनां नमामि
बालेन्दुमौळिमनिशं वचसामधीशाम् ॥

ऐं क्लीं सौः ॥ इति मन्त्रः । सारस्वतप्रधानोयं मन्त्रः ॥

अक्षरन्यासः—आधार हृत् सुषुम्नारन्ध्रेष्वपि विन्यसेच्च वर्णान् । दशलक्षजपः । त्रिमधुरसिक्तैः पलाशपुष्पैर्वा घृतसिक्तैस्तिलैर्वा अयुतं पुरश्चरणाहोमः ॥

अथ पूजाविधिः । प्राङ्मातृकापटले मातृकाविधानोक्तवत् पीठं संपूज्य तस्मिन्नावाह्य समर्चयेत् । अङ्गैः प्रथमावृतिः । बुद्ध्यै० मेधायै० प्रज्ञायै० प्रतिभायै० धृत्यै० विद्यायै० स्मृत्यै० वाण्यै० ८. आभिः द्वितीयावृतिः । मातृभिस्तृतीया । इन्द्रादिभिश्चतुर्थी । वज्रादिभिः पञ्चमी ॥

अथ प्रयोगः—

तोयेऽथ जानुद्वयसे स्थितस्सन् विचिन्त्य देवीं रविबिम्बसंस्थाम् ।
विद्यां प्रजप्यान्नियमेन भक्त्या सहस्रसंख्यं दिनशो नरो यः ॥

गङ्गाप्रवाहप्रतिमास्यवक्त्रात् निर्याति विद्या निखिलार्थदात्री ।

प्रयोगान्तरम्—

ब्राह्मीवचाकणनिशामयपञ्चगव्यसंपाचितं प्रतिजपेद्युतं घृतं तत् ।
गर्भिण्यथो लिहतु वागधिपं धिया सा सर्वज्ञमूर्जितगुणं तनयं प्रसूते ॥

अस्यार्थः — ब्राह्मी - ब्रह्मसंज्ञमेव । वचा - वेखण्ड । कण - पिप्पली ।
निशा - மஞ்சள்; आमयं - செங்கழிநீர் கோட்டம்.

प्रयोगान्तरम्--

इदमेव दिने दिने दिनादौ उपरागेप्यथवा निशेशभान्वोः ।
लिहतां मुखतो गिरामधीशा प्रतिनिर्याति महाप्रवाहरूपा ॥

प्रयोगान्तरम्--

श्रीवृक्षपुष्पैरथवा समिद्भिः सहस्रशोग्नौ हवनक्रियैषा ।
कवित्वसौभाग्य महासमृद्धिलक्ष्मीप्रदा वा रविमासतोर्वाक् ॥

श्रीवृक्षं-बिल्वं ॥ प्रयोगान्तरम्--

दिनशः शितधीर्मनुवर्यममुं प्रतिगृह्य करे प्रतिजप्य जलम् ।
वचसामधिपेति धिया कलयन् प्रपिबेत्कवितास्य भवेन्नचिरात् ॥

संख्यानुक्ते सहस्रमिति न्यायात् सहस्रसंख्यं जप्यादित्यर्थः । प्रयोगान्तरम्-

सलिलेऽथ गतो हृदयद्वयसे रविबिम्बगतां प्रतिचिन्त्य मनुम् ।
त्रिसहस्रममुं दिनशः प्रजपन् कविरेव भवेत्सतु वत्सरतः ॥

प्रयोगान्तरम् —

मन्त्रेणानेन संजप्तं ब्रह्मीपत्रं प्रभक्षयन् ।
न विस्मरति मेधावी श्रुतान्वेदागमानसौ ॥

ब्राह्मीपत्रं - ब्राह्मीसंज्ञमेव । प्रयोगान्तरम् —

कणां वचां वा धात्रीं वा जप्त्वा खादेद्दिनागमे ।
अनेन मूकोपि नरः सर्वज्ञः स्यान्न संशयः ॥

कणा-पिप्पली । वचा-वेखण्ड (வசம்பு) । धात्री-अवले-நெல்லிக்காய்

अथ बालामन्त्रप्रसंगात् कल्पान्तरोक्तं बालाचक्रं लिख्यते —

बिन्दुत्रिकोणं वृत्तं च बहिः षट्कोणवृत्तकम् ।
पश्चादष्टदलं पद्मं बालाचक्रं विधीयते ॥

अथ बालामन्त्रप्रसङ्गात् वाग्भवबीजमपि मन्त्रसारोक्तमत्र लिख्यते — ब्रह्मा ऋषिः । निचृत् छन्दः । वाग्देवी देवता । ऐं हृत् । ऐं शिरः । इत्याद्यङ्गानि । ध्यानम् —

धवलनलिनराजच्चन्द्रसंस्थां प्रसन्नां
धवलवसनभूषामाल्यदेहां त्रिणेत्राम् ।
कमलयुगवराभीत्युल्लसद्बाहुपद्मां
कुमुदरमणचूडां भारतीं भावयामि ॥

ऐं इति मन्त्रः । द्वादशलक्षजपः । त्रिमधुरसिक्तैः श्वेतपद्मैः दशांशं जुहुयात् पुरश्चरणार्थम् । सारस्वतफलप्रधानोयं मन्त्रः ॥ मातृकावत्पूजाविधिः ॥

अथ बालादिमन्त्रप्रसङ्गात् महाबालात्रिपुरसुन्दरीमन्त्रः कल्पान्तरे दृष्टश्च लिख्यते —

आनन्दभैरव ऋषिः । देवी गायत्री छन्दः । श्रीमहात्रिपुरसुन्दरी देवता । ऐं बीजम् । क्लीं शक्तिः । सौः कीलकम् । ऐं ह्रीं श्रीं ऐं क्लीं सौः श्रीमहात्रिपुरसुन्दरी ह्रीं सर्वज्ञायै ह्रां हृदयाय नमः । ऐं इत्यादि ह्रीं

इत्यन्तं नित्यतृप्तायै ह्रीं शिरः । ऐं इत्यादि ह्रीं इत्यन्तं अनादिबोधायै ह्रूं शिखा । ऐं इत्यादि ह्रीं स्वतन्त्रायै ह्रैं कवचम् । ऐं इत्यादि ह्रीं अलुप्तशक्तये ह्रौं नेत्रत्रयम् । ऐं इत्यादि ह्रीं अनन्तशक्तये ह्रः अस्त्राय फट् ।
(ध्यानम्) —

सकुङ्कुमविलेपनामळिकचुंबिकस्तूरिकां
समन्दहसितेक्षणां सशरचापपाशाङ्कुशाम् ।
अशेषजनमोहिनीमरुणमाल्यभूषाम्बरां
जपाकुसुमभासुरां जपविधौ स्मरेदम्बिकाम् ॥

ध्यानान्तरम् —

चतुर्भुजे चन्द्रकलावतंसे कुचोन्नते कुङ्कुमरागशोणे ।
पुण्ड्रेक्षुपाशाङ्कुशपुष्पबाणहस्ते नमस्ते जगदेकमातः ॥

हेमाद्रौ हेमपीठस्थितिमखिलसुरैरीड्यमानां विराजत्-
पुष्पेष्विष्वासपाशांकुशकरकमलां रक्तवेषातिरिक्ताम् ।
दिक्षूद्यद्भिश्चतुर्भिर्मणिमयकलशैः पञ्चशक्त्यंचितैः स्व-
र्वृक्षैः क्लृप्ताभिषेकां भजत भगवतीं भूतिदामन्त्ययामे ॥

क ए ई ल ह्रीं ह स क ह ल ह्रीं स क ल ह्रीं ॥ इति मन्त्रः ॥ ऐश्वर्यफलप्रधानोयं मन्त्रः । खण्डत्रयादौ बालाबीजत्रयं क्रमेण योजयेद्वा सर्वान्ते श्रीबीजं योजयेद्वा, उभयमपि योजयेद्वा ॥

अथ त्रिपुरसुन्दरीमालामन्त्रप्रदर्शनं क्रियते —

(त्रिपुरसुन्दरी)मालामन्त्रस्य । वरुणादित्य ऋषिः । गायत्री छन्दः । ललिता देवता । ऐं ह्रीं श्रीं ऐं क्लीं सौः नमः, त्रिपुरसुन्दरि हृदयदेवि शिरोदेवि

शिखादेवि कवचदेवि नेत्रदेवि अस्त्रदेवि कामेश्वरि भगमालिनि नित्यक्लिन्ने भेरुण्डे वह्निवासिनि महावज्रेश्वरि परशिवा(व)दूति त्वरिते कुलसुन्दरि नित्ये नीलपताके विजये सर्वमङ्गले ज्वालामालिनि चित्रे महानित्ये परमेश्वरि मित्रेशमयि षष्ठीशमयि उड्डीशमयि चर्यानाथमयि लोपामुद्रामयि अगस्त्यमयि कालतापनमयि धर्माचार्यमयि मुक्तकेशीश्वरमयि दीपकलानाथमयि विष्णुदेवमयि प्रभाकरदेवमयि तेजोदेवमयि[1] कल्याणदेवमयि रत्नदेवमयि वासुदेवमयि श्रीरामानन्दमयि अणिमासिद्धे लघिमासिद्धे महिमासिद्धे ईशित्वसिद्धे वशित्वसिद्ध्धे प्राकाम्यसिद्धे भुक्तिसिद्धे इच्छासिद्धे प्राप्तिसिद्धे सर्वकामसिद्धे ब्राह्मि माहेश्वरि कौमारि वैष्णवि वाराहि माहेन्द्रि चामुण्डे महालक्ष्मि सर्वसंक्षोभिणि सर्वविद्राविणि सर्वाकर्षिणि सर्ववशंकरिणि सर्वोन्मादिनि सर्वमहांकुशे सर्वखेचरि सर्वबीजे सर्वयोनि (ने) सर्वत्रिखण्डे त्रैलोक्यमोहनचक्रस्वामिनि प्रकटयोगिनि कामाकर्षिणि बुद्ध्याकर्षिणि अहंकाराकर्षिणि शब्दाकर्षिणि स्पर्शाकर्षिणि रूपाकर्षिणि रसाकर्षिणि गन्धाकर्षिणि चित्ताकर्षिणि धैर्याकर्षिणि स्मृत्याकर्षिणि नामाकर्षिणि बीजाकर्षिणि आत्माकर्षिणि अमृताकर्षिणि शरीराकर्षिणि सर्वाशापरिपूरकचक्रस्वामिनि गुप्तयोगिनि अनङ्गकुसुमे अनङ्गमेखले अनङ्गमदने अनङ्गमदनातुरे अनङ्गरेखे अनङ्गवेगिनि अनङ्गांकुशे अनङ्गमालिनि, सर्वसंक्षोभणचक्रस्वामिनि गुप्ततरयोगिनि सर्वसंक्षोभिणि सर्वविद्राविणि सर्वाकर्षिणि सर्वाह्लादिनि सर्वसंमोहिनि सर्वस्तंभिनि सर्वजंभिनि सर्ववशंकरि सर्वरञ्जिनि सर्वोन्मादिनि सर्वार्थसाधके सर्वसंपत्तिपूरके सर्वमन्त्रमयि सर्वद्वन्द्वक्षयंकरि, सर्वसौभाग्यदायकचक्रस्वामिनि संप्रदाययोगिनि सर्वसिद्धिप्रदे सर्वसंपत्प्रदे सर्वप्रियंकरि[2] सर्वकामप्रदे सर्वदुःखविमोचनि सर्वमृत्युप्रशमनि सर्वविघ्न-

---

१ तेजोदेवमयि इत्यतः परं मनोजदेवमयि इति च मातृकायामाधिकः पाठः ।

२ सर्वप्रियंकरि इत्यतः परं सर्वमङ्गळकारिणि इति ख, ग, घ, च, मातृकासु अधिकः पाठः ।

निवारणि सर्वाङ्गसुन्दरि सर्वसौभाग्यदायिनि, सर्वार्थसाधकचक्रस्वामिनि कुलोत्तीर्ण-योगिनि सर्वज्ञे सर्वशक्ते सर्वैश्वर्यप्रदायिनि सर्वज्ञानमयि सर्वव्याधिविनाशिनि सर्वाधारस्वरूपे सर्वपापहरे सर्वानन्दमयि सर्वरक्षास्वरूपिणि सर्वेप्सितफलप्रदे, सर्वरक्षाकरचक्रस्वामिनि निगर्भयोगिनि वशिनि कामेश्वरि मोदिनि विमले अरुणे जयिनि सर्वेश्वरि कौलिनि, सर्वरोगहरचक्रस्वामिनि रहस्ययोगिनि बाणिनि चापिनि पाशिनि अङ्कुशिनि महाकामेश्वरि महावज्रेश्वरि महाभग-मालिनि महात्रिपुरसुन्दरि, सर्वसिद्धिप्रदचक्रस्वामिनि रहस्यतरयोगिनि श्रीश्री-भट्टारिके सर्वानन्दमयचक्रस्वामिनि परापररहस्ययोगिनि त्रिपुरे त्रिपुरेशि त्रिपुर-सुन्दरि [1]त्रिपुरवासिनि त्रिपुराश्रीस्त्रिपुरमालिनि त्रिपुरासिद्धे त्रिपुराम्ब महा-त्रिपुरसुन्दरि[2] महामहेश्वरि महाराज्ञि महामहाचक्रे महामहागुप्ते महामहानन्दे महामहास्कन्दे महामहामाये महाश्रीचक्रनगरसाम्राज्ञि नमस्ते नमस्ते स्वाहा सौः क्लीं ऐं श्रीं ह्रीं ऐं ॥

एषा विद्या महासिद्धिदायिनी स्मृतिमात्रतः ।
अग्निवातमहाक्षोभे राजराज्यस्य विप्लवे ॥

लुण्डके तस्करभये संग्रामे सलिलप्लवे ।
समुद्रयानविक्षोभे भूतप्रेतादिके भये ॥

डाकिनीपूतनायक्षरक्षःकूश्माण्डजे भये ।
अपस्मारज्वरव्याधिमृत्यून्मादादिजे भये ॥

मित्रभेदे ग्रहभये व्यसने वाभिचारके ।
अन्येष्वपि च दोषेषु मालामन्त्रं [3]स्मरेन्नरः ॥

---

१ त्रिपुरावासिनि इति ख, ग, मातृकापाठः ।
२ सुन्दरि इति स्थाने भैरवि इति च पाठः ।
३ जपेन्नरः इति च पाठः ।

सर्वोपद्रवनिर्मुक्तः साक्षात् शिवसमो भवेत् ।
आपत्काले नित्यपूजां विस्तरात्कर्तुमक्षमः ॥

एकवारं जपेदेनं सर्वपूजाफलं लभेत् ।

इति श्रीविद्यामालामन्त्रः ॥ तद्भेदास्तु —

शक्तिमाला पञ्चधा स्याच्छिवमाला च तादृशी ।
द्वन्द्वमाला च तादृक् स्यात् एवं पञ्चदश क्रमात् ॥

एकैकललितामन्त्रवर्णादभ्युदिता इमाः ।
शुद्धा नमोन्ताः स्वाहान्ताः तर्पणान्ता जयान्तकाः ॥

प्रपत्तयः पञ्चधा स्युः मालासु निखिलास्वपि ।
बालामन्त्रो महाभागः सर्वसिद्धिप्रदायकः ॥

एकत्रिंशत्सहस्रार्णः त्रिलोकीमोहनक्षमः ।
शुद्धा संबुद्धिमात्रा स्याज्जपस्तेन विधीयते ॥

नमसा पूजनं देवि पादुकां पूजयामि वा ।
स्वाहेति होमरचना तर्पयामीति तर्पणम् ॥

जयद्वन्द्वसमायोगः स्तुतिरुक्ता तु पञ्चमी ।
नमः स्वाहाद्वये प्राप्ते संबुद्धिः संप्रदायकम् ॥

तर्पणे तु द्वितीया स्याज्जपे संबुद्धिरेव सा ।

शिवमालापञ्चके पुल्लिङ्गान्तनिर्देशः त्रिपुरसुन्दर इति । मिथुनमालापञ्चके स्त्रीपुल्लिङ्गान्तनिर्देशः ॥

अथ श्रीविद्यापुरश्चरणाविधिः —

षट्त्रिंशल्लक्षं जपेत् । *द्वादशलक्षं वा जपेत् । नवलक्षं वा जपेत् । त्रिमधुरसिक्तैर्जपाकुसुमैः अरुणकरवीरैश्च दशांशं पुरश्चरणहोमः । नित्यशो वैश्वदेवान्ते त्रिमधुरसिक्तैरन्नैः, मन्त्रान्ते पञ्चप्राणाहुतिमन्त्रान् संयोज्य, पञ्चाहुतीः कुर्यात् ॥

अथ कल्पसूत्रोक्तप्रकारेण श्रीविद्याचक्रपूजाविधिः लिख्यते —

आदौ महागणपतिपूजां कृत्वा, गं गणपतये नमः इति गणेशमर्चयेत् । पश्चात् त्रिपुरार्ष्यादिकं विन्यस्य ध्यात्वा, पीठपूजां कुर्यात् । अथ पीठपूजा — ऐं ह्रीं श्रीं अमृतांभोनिधये नमः । रत्नद्वीपाय नमः । नानावृक्षमहोद्यानाय नमः । सन्तानवाटिकायै नमः । कल्पकवाटिकायै नमः । हरिचन्दनवाटिकायै नमः । मन्दारवाटिकायै नमः । पारिजातवाटिकायै नमः । कदम्बवनवाटिकायै नमः । बिल्ववनवाटिकायै नमः । पुष्परागरत्नप्राकाराय नमः । पद्मराग-रत्नप्राकाराय नमः । गोमेदकरत्नप्राकाराय नमः । वज्ररत्नप्राकाराय नमः । वैडूर्यरत्नप्राकाराय नमः । इन्द्रनीलरत्नप्राकाराय नमः । मुक्ताफलरत्नप्राकाराय नमः । मरकतरत्नप्राकाराय नमः । विद्रुमरत्नप्राकाराय नमः । माणिक्य-मण्डपाय नमः । सहस्ररत्नस्तम्भमण्डपाय नमः । अमृतवापिकायै नमः । आनन्दवापिकायै नमः । विमर्शवापिकायै नमः । बालातपोद्गाराय नमः । चन्द्रिकोद्गाराय नमः । महाशृङ्गारपरिघायै नमः । महापद्माटव्यै नमः । चिन्तामणिगृहराजाय नमः । पूर्वाम्नायमयपूर्वद्वाराय नमः । दक्षिणाम्नायमय-दक्षिणद्वाराय नमः । पश्चिमाम्नायमयपश्चिमद्वाराय नमः । उत्तराम्नाय-मयोत्तरद्वाराय नमः । महामणिमयवेदिकायै नमः । रत्नप्रदीपवलयाय नमः । महासिंहासनाय नमः । ब्रह्ममयैकमञ्चपादाय नमः । विष्णुमयैकमञ्चपादाय नमः । रुद्रमयैकमञ्चपादाय नमः । ईश्वरमयैकमञ्चपादाय नमः । सदा-शिवमयफलकाय नमः । हंसतूलिकायै नमः । हंसतूलमहोपधानाय नमः । कौसुंभास्तरणाय नमः ॥

---

* पञ्चदशलक्षं वा जपेत् ॥ इति ग, घ, च, मातृकासु अधिकः पाठः ।

पुनः विभूत्यै नमः। उन्नत्यै नमः। कान्त्यै नमः। हृष्ट्यै नमः। कीर्त्यै नमः। सन्नत्यै नमः। व्युष्ट्यै नमः। उत्कृष्ट्यै नमः। ऋद्ध्यै नमः। एता नवशक्तयः॥ ऐं ह्रीं श्रीं इति उक्तसर्वमन्त्रादौ योज्यम्॥

पुनर्मध्ये त्रिपुरसुन्दर्यासनाय नमः। हृदयारविन्दस्थनानारत्नखचित-स्वर्णमयमण्डपे श्रीचक्राङ्कितमरुणतामरसपद्मरूपं योगपीठं कल्पयामि इति गन्धपुष्पाक्षतैः पीठमभ्यर्च्य, तदुपरि चक्रं वक्ष्यमाणश्लोकोक्तप्रकारेण प्रतिष्ठाप्य पुनश्चक्रमध्ये देवीमावाहयेत्॥ तत्प्रकारः—

ऐं त्रिपुरादेवि विद्महे क्लीं कामेश्वरी च धीमहि। सौः तन्नः क्लिन्नः प्रचोदयात्॥

महापद्मवनान्तस्थे कारणानन्दविग्रहे।
सर्वभूतहिते मातः एह्येहि परमेश्वरि॥

इत्यन्ते मूलमन्त्रमुक्त्वा देवीमावाह्य आवाहनादिषण्मुद्राः प्रदर्श्य, पुनरावरण-पूजामारभेत॥

अग्नीशासुरवायुकोणेषु मध्ये दिक्षु च प्रागुक्तसर्वज्ञादिषडङ्गशक्ती-रभ्यर्च्य, त्रिकोणमध्ये कामेश्वर्यम्बाश्रीपादुकां पूजयामि। भगमालिन्यम्बा-श्रीपादुकां पूजयामि। नित्यक्लिन्नाम्बा० भेरुण्डाम्बा० वह्निवासिन्यम्बा० महाविद्येश्वर्यम्बा० शिवदूत्यम्बा० त्वरिताम्बा० कुलसुन्दर्यम्बा० नित्याम्बा० नीलपताकिन्यम्बा० विजयाम्बा० सर्वमङ्गलाम्बा० ज्वालामालिन्यम्बा० चित्राम्बा ऐं ह्रीं श्रीं इति मन्त्रादौ सर्वत्र योज्यम्॥

एवं समभ्यर्च्य, पुनः प्रथमचतुरश्रे अणिमासिद्ध्यम्बाश्रीपादुकां पूजयामि। लघिमासिद्ध्यम्बा० महिमासिद्ध्यम्बा० ईशित्वसिद्ध्यम्बा० वशित्वसिद्ध्यम्बा० प्राकाम्यसिद्ध्यम्बा० भुक्तिसिद्ध्यम्बा० इच्छासिद्ध्यम्बा० प्राप्तिसिद्ध्यम्बा० सर्वकामसिद्ध्यम्बा श्रीपादुकां पूजयामि। पूर्ववत् बीजत्रयमादौ सर्वत्र योज्यम्॥

पुनर्द्वितीयचतुरश्रे ब्राह्मयादिमहालक्ष्म्यन्तैः बीजत्रयेण सह समर्च्य, पुनस्तृतीयचतुरश्रे सर्वसंक्षोभिणीमुद्राशक्त्यम्बा श्रीपादुकां पूजयामि । सर्वविद्राविणीमुद्रा० सर्वाकर्षिणीमुद्रा० सर्ववशीकरिणीमुद्रा० सर्वोन्मादिनीमुद्रा० सर्वमहाङ्कुशमुद्रा० सर्वखेचरीमुद्रा० सर्वबीजमुद्रा० सर्वयोनिमुद्रा० सर्वत्रिखण्डिनीमुद्राशक्त्यम्बाश्रीपादुकां पूजयामीति संपूज्य, बीजत्रयं सर्वत्र योज्यम् । त्रैलोक्यमोहनचक्रस्वामिनि श्रीत्रिपुराम्बा श्रीपादुकां पूजयामि । प्रकटयोगिन्यम्बाश्रीपादुकामिति चक्रनायिकां तत्तदावरणे पुरतस्समर्चयेदिति प्रथमावरणम् ॥

षोडशदले, कामाकर्षिण्यम्बाश्रीपादुकां पूजयामि । बुध्याकर्षिण्यम्बा० अहंकाराकर्षिण्यम्बा० शब्दाकर्षिण्यंबा० स्पर्शाकर्षिण्यम्बा० रूपाकर्षिण्यम्बा० रसाकर्षिण्यम्बा० गन्धाकर्षिण्यम्बा० चित्ताकर्षिण्यम्बा० धैर्याकर्षिण्यम्बा० स्मृत्याकर्षिण्यम्बा० नामाकर्षिण्यम्बा० बीजाकर्षिण्यम्बा० आत्माकर्षिण्यम्बा० अमृताकर्षिण्यम्बा० शरीराकर्षिण्यम्बा श्रीपादुकां पू० ऐं ह्रीं श्रीं इति मन्त्रादौ सर्वत्र योज्यम् ॥ सर्वाशापरिपूरक चक्रस्वामिनि त्रिपुरेश्वर्यम्बा श्रीपादुकां पूजयामि । गुप्तयोगिन्यम्बा श्रीपादुकां पूजयामीति चक्रनायिकां समर्चयेदिति द्वितीयावृतिः ॥

अष्टदले, अनङ्गकुसुमाम्बाश्रीपादुकां पूजयामि । अनङ्गमेखलाम्बा० अनङ्गमदनाम्बा० अनङ्गमदनातुरांबा० अनङ्गरेखाम्बा० अनङ्गवेगिन्यम्बा० अनङ्गाङ्कुशाम्बा० अनङ्गमालिन्यम्बाश्रीपादुकां पूजयामि । ऐं ह्रीं श्रीं इति मन्त्रादौ सर्वत्र योज्यम् । सर्वसंक्षोभणचक्रस्वामिनि त्रिपुरसुन्दर्यम्बा श्रीपादुकां पूजयामि । गुप्ततरयोगिन्यम्बा० इति तृतीयावृतिः ॥

मन्वश्रे, सर्वसंक्षोभिण्यम्बाश्रीपादुकां पूजयामि । सर्वविद्राविण्यम्बा० सर्वाकर्षिण्यम्बा० सर्वाह्लादिन्यम्बा० सर्वमोहिन्यम्बा० सर्वस्तम्भिन्यम्बा० सर्वजृम्भिण्यम्बा० सर्ववशङ्कर्यम्बा० सर्वरञ्जिन्यम्बा० सर्वोन्मादिन्यम्बा० सर्वार्थ-

साधकाम्बा० सर्वसंपत्तिपूरकाम्बा० सर्वमन्त्रमय्यम्बा० सर्वद्वन्द्वक्षयंकर्यम्बा-श्रीपादुकां पूजयामि । ऐं ह्रीं श्रीं इति मन्त्रादौ सर्वत्र योज्यम् । सर्व-सौभाग्यदायकचक्रस्वामिनि त्रिपुरवासिन्यम्बा श्रीपादुकां पूजयामि । संप्रदाय-योगिन्यम्बा० इति चतुर्थ्यावृतिः ॥

बहिर्दशारे, सर्वसिद्धिप्रदाम्बा श्रीपादुकां पूजयामि । सर्वसंपत्प्रदाम्बा० सर्वप्रियङ्कर्यम्बा० सर्वमङ्गळकारिण्यम्बा० सर्वकामप्रदाम्बा० सर्वदुःखविमोचि-न्यम्बा० सर्वमृत्युप्रशमन्यम्बा० सर्वविघ्ननिवारिण्यम्बा० सर्वाङ्गसुन्दर्यम्बा० सर्वसौभाग्यदायिन्यम्बा श्रीपादुकां पूजयामि । ऐं ह्रीं श्रीं इति मन्त्रादौ सर्वत्र योज्यम् । सर्वार्थसाधकचक्रस्वामिनि त्रिपुरा श्रीअम्बा श्रीपादुकां पूजयामि । कुलोत्तीर्णयोगिन्यम्बा० ॥ इति पञ्चम्यावृतिः ॥

अन्तर्दशारे, सर्वज्ञाम्बा श्रीपादुकां पूजयामि । सर्वशक्त्यम्बा० सर्वैश्वर्य-प्रदाम्बा० सर्वज्ञानमय्यम्बा० सर्वव्याधिविनाशिन्यम्बा० सर्वाधारस्वरूपिण्यम्बा० सर्वपापहराम्बा० सर्वानन्दमय्यम्बा० सर्वरक्षास्वरूपिण्यम्बा० सर्वेप्सितफलप्रदांबा श्रीपादुकां पूजयामि । बीजत्रयं सर्वत्र योज्यम् । सर्वरक्षाकरचक्रस्वामिनि त्रिपुरा-मालिन्यम्बा श्रीपादुकां पूजयामि । निगर्भयोगिन्यम्बा० । इति षष्ठ्यावृतिः ॥

अष्टकोणे, वशिन्यम्बा श्रीपादुकां पूजयामि । कामेश्वर्यम्बा० मोहि-न्यम्बा० विमलाम्बा० अरुणाम्बा० जयिन्यम्बा० सर्वेश्वर्यम्बा० कौलिन्यम्बा० श्रीपादुकां पूजयामि । ऐं ह्रीं श्रीं इति मन्त्रादौ सर्वत्र योज्यम् । सर्वरोग-हरचक्रस्वामिनि त्रिपुरासिद्धाम्बा श्रीपादुकां पूजयामि । रहस्ययोगिन्यम्बा श्रीपादुकां पूजयामि । इति चक्रनायिकां पुरतः संपूजयेत् । इति सप्तमावृतिः ॥

अष्टकोणमध्ये चतुर्दिक्षु, बाणिन्यम्बा श्रीपादुकां पूजयामि । चापिन्यम्बा० पाशिन्यम्बा० अङ्कुशिन्यम्बा० ऐं ह्रीं श्रीं इति मन्त्रादौ सर्वत्र योज्यम् । सप्तमावृतावन्तर्भूतमिदम् ॥

त्रिकोणाग्रदक्षिणवामकोणेषु कामेश्वर्यम्बा० वज्रेश्वर्यम्बा० भगमालिन्यम्बा० ऐं ह्रीं श्रीं इति मन्त्रादौ सर्वत्र योज्यम् । सर्वसिद्धिप्रदचक्रस्वामिनि त्रिपुराम्बाश्रीपादुकां० रहस्यतरयोगिन्यम्बाश्रीपादुकां पूजयामि इत्यष्टमावृतिः ॥

बिन्दुमध्ये मूलमन्त्रेण देवीं समर्चयेत् । सर्वानन्दमयचक्रस्वामिनि श्रीचक्रनगरसाम्राज्यलक्ष्मी त्रिपुराम्बाश्रीपादुकां पूजयामि । परापररहस्ययोगिन्यम्बा० इत्येवं जलगन्धपुष्पैः संपूज्य, धूपदीपनैवेद्यनीराजनान्तं कृत्वा, पूजाशिष्टद्रव्येणान्नेन मूलमन्त्रेण द्वादशवारं जुहुयात् । मन्त्रेण च तदवशिष्टान्नं घ्राणभक्षणं कुर्यात् । अनन्तरं मूलमन्त्रं यथाशक्ति जप्त्वा कल्याणवृष्टिभिरित्यादिषोडशश्लोकैः स्तोत्रं कुर्यात् ॥

इति पूजाविधिस्समाप्तः ॥

अथ श्रीविद्याचक्रप्रकार उच्यते —

बिन्दुत्रिकोणवसुकोणदशारयुग्म-
मन्वश्रनागदळसंयुतषोडशारम् ।
वृत्तत्रयं च धरणीसदनत्रयं च
श्रीचक्रमेतदुदितं परदेवतायाः ॥

तत्र दशारयुग्मं दशत्रिकोणयुग्मम् । मन्वश्रं चतुर्दशकोणम् । नागदळं अष्टदलम् । षोडशारं षोडशदलम् । धरणीसदनं चतुरश्रम् ॥

अथ श्रीविद्याचक्रलेखनप्रकार एव विशदीक्रियते —

षण्णवत्यङ्गुलायामं सूत्रं प्राक्प्रत्यगायतम् ।
चतुर्भिरङ्गुलैश्शिष्टैः [1] संवृत्तानि च भूपुरम् ॥

[1] संवृतानि इति ग, घ, ङ पाठः ।

अन्तर्नवाङ्गुलं ज्ञेयं मध्ये पत्रं तु षोडश ।
एकादशाङ्गुलं ज्ञेयं अष्टपत्रं समालिखेत् ॥

देवित्रिस्तुतो मे गङ्गावल्लीस्तुतेति प्रचक्षते ।

तत्र दे इत्यष्ट । एवमाद्यङ्गुलिमानान्तरे नव रेखा विलेखनीया वृत्तमध्ये इत्यर्थः ॥

आद्ये द्वितीयाष्टमके नवमे च यथाक्रमम् ।
मार्जयेत् गुणभागांशाद्वृत्तादेकत्र चान्यतः ॥

चतुर्थषष्ठयोः पार्श्वे तोयांशं परिमार्जयेत् ।
पञ्चमस्य जयांशन्तु मार्जयेच्चान्यपार्श्वतः ॥

नवग्रहाभिधानाः स्युः नवरेखा यथाक्रमम् ।
गुरुश्चाङ्गारकं चैव शुक्रश्चन्द्रं स गच्छति ॥

मन्दश्च मण्डलं चैव सूर्यं राहुश्च गच्छति ।
बुधं केतुश्च संगम्य शक्तिचक्रं यथाविधि ॥

मन्दं गच्छति भानुश्च केतुं गच्छति चन्द्रमाः ।
कुजश्च मण्डलं चैव बुधो राहुं च गच्छति ॥

महासुन्दरिचक्रस्य वह्निचक्रं यथाविधि ।
ललिताचक्रनिर्माणं पारंपर्यक्रमेण तु ॥

सर्वसिद्धियुतं भद्रं इदं काश्मीरनिर्मितम् ।

सूर्यस्सोमोऽङ्गारको बुधो गुरुश्शुक्रो मन्दो राहुः केतुः एवं नवग्रहाः ॥

अथ कल्पान्तरोक्तप्रकारेणापि श्रीविद्याचक्रलेखनप्रकारो लिख्यते—

अथ पुरतो विहाय निजविष्टरादरत्नि-
मवनिमथ समतिक्रमय्याधनयजा ।
अंगुलीयमवदेव भागवसुतोयपञ्चभू-
रचयामि चक्रमरुणं सुकेसरम् ॥

देवी स्तुतो मे गङ्गावल्लीस्तुतेति प्रचक्षते ।
मानं श्रीचक्रनिर्माणे सूत्रेषु नवसु क्रमात् ॥ १ ॥

आद्ये द्वितीयेऽष्टके नवमे च यथाक्रमम् ।
मार्जयेद्गुणभागांशाद्वृत्तादेकत्र चान्यतः ॥ २ ॥

चतुर्थषष्ठयोः पार्श्वे तोयांशं परिमार्जयेत् ।
पञ्चमस्य जयांशं च मार्जयेच्चान्यपार्श्वतः ॥ ३ ॥

तृतीयान्तात् द्वितीयान्ताच्चतुर्थान्ताच्च पञ्चमात् ।
प्रथमान्तात् सूत्रयुगं वृत्ततो नवमादिकम् ॥ ४ ॥

सप्तमाष्टमयोरन्तात् तथा षष्ठनवान्तयोः ।
वृत्तादिसूत्रयुगळं क्रमात्सूत्रद्वयं द्विधम् ॥ ५ ॥

हर्म्यवर्मसमोपेतं भद्रसन्धिसमन्वितम् ।
यच्चक्रं ललितायास्तन्मङ्गळं नेतरत् भवेत् ॥ ६ ॥

ललिताचक्रनिर्माणे संकेतश्लोकषट्कवित् ।
काश्मीरसंप्रदायी स्यात् पारंपर्यक्रमान्वितः ॥ ७ ॥

पञ्चशक्तिचतुर्वह्नितद्विलासात्मकं समम् ।
कृत्यं पञ्चविधं शश्वत् भासते तन्नुमः शिवम् ॥

श्रीचक्रमध्ये मध्यत्रिकोणे लेखनीयाक्षरश्लोकः —

कमलं परिलुप्य मध्यमान्यत् स्वरमीशादियुतं सविन्दुनादम् ।
निगमादिनमोन्तरे विराजत् भुवि देवीहृदयप्रतिष्ठमेतत् ॥

अस्यार्थः — अथानन्तरं पुरतः पूर्वभागे विहाय निजविष्टरात् स्वासनात् अरत्निमेकारत्निमात्रं अवनिं भूमिं सन्धिसिद्धिकार्ये, अथ पश्चात् समं समचतुरश्रं त्रिकं अरत्नित्रयमानं स्वेच्छया यावत् दीर्घमुपात्तं तत् त्र्यधिकसप्तत्यंशे कृते अरत्नित्रयं जायते । देहलब्धांगुलिमानमिति शास्त्रप्रसिद्धेः ॥

यं कश्चित् पुरुषायामं विभज्य दशधा पुनः ।
एवं द्वादशधा भागं कृत्वा तेष्वेकमङ्गुलम् ॥

देहलब्धाङ्गुलं नाम जानीयात् तस्य तत्पुनः ।

मघाधनयजेति कटपयादिप्रकारेण गृहीते अरत्नित्रयस्य द्विसप्तत्यङ्गुलि(ल)मानं भवति । एतत् द्विसप्तत्यंगुलि(ल)मानमितिमपि इत्थं विभजनीयम् । मघ इत्युक्त्या श्रीचक्रमध्ये अङ्गुलिमानेनायामविस्तारौ पृथक् पृथक् पञ्चचत्वारिंशत् । एवं चक्रमध्यं कृत्वा, तद्बहिरष्टदलपद्मस्य परितः परिमाणं, ध इत्युक्त्या नवाङ्गुलिपरिमाणं भवति । तत्र पूर्वभागे चापरभागे च पृथक् पृथक् सार्धाङ्गुलिचतुष्टयं भवति । संपूज्य नवांगुलिमानं भवति । एतत् बहिःषोडशदलपद्मस्य नयेत्युक्त्या दशाङ्गुलिमानं भवति । तत्रापि पूर्वभागे अपरभागे च पृथक् पृथक् अङ्गुलिपञ्चकं मानं भवति । संभूयाङ्गुलिदशकं मानं भवति । एतद्बहिश्चतुरश्रत्रयस्य, ज इत्युक्त्या अष्टाङ्गुलिमानं भवति । तत्रापि पुरोभागे अपरभागे च पृथक् पृथक् अंगुलिचतुष्टयं मानं भवति । संभूयांगुल्यष्टकं मानं भवति । एवं बाह्यचक्रस्य संभूय विंशत्यंगुलिमानं भवति । अंगुलीयेति । इत्थं संपन्नचक्रे अन्तर्मानं मव इत्युक्त्या पञ्चचत्वारिंशदंगुलिमानं भवति । देवभाग इत्युक्त्या एतत्पञ्चचत्वारिंशदंगुलिमानमपि अष्टचत्वारिंशत् भागरूपेण विभजनीयम् । वसु

इत्युक्त्या एतद्बहिः अष्टदळं पद्मं रचनीयम्। तोय इत्युक्त्या एतद्बहिः षोडशदळपद्मं विलेख्यम्। भू इत्युक्त्या एतद्बहिः चतुरश्रत्रयं लेखनीयम्। रचयामि इत्थं रचयामि। चक्रं श्रीचक्रम्। अरुणं सिन्दूरवर्णं सुकेसरं शोभनकेसरं। पद्ममप्यरुणवर्णं इत्थं बाह्यचक्रलेखनप्रकारः ॥

तदन्तश्चक्रलेखनप्रकार उच्यते —

पूर्वविभक्ताष्टचत्वारिंशद्भागेषु कटपयादिसंकेतेन नवरेखाविलेखनव्यवस्था प्रदर्श्यते। देविस्तुतोमेगङ्गावल्ली इत्यादिश्लोकः। देवीत्युक्त्या पूर्वगृहीताष्टचत्वारिंशदंगुलीरपि पृथक् पृथक् प्रथमवृत्तमारभ्य तत्तद्वक्ष्यमाणरेखांशेन विभागः कर्तव्यः इत्युक्तः। स्तु इत्युक्त्या षड्भाग उक्तः। तो इत्युक्त्या षड्भाग उक्तः। मे इत्युक्त्या पञ्चभाग उक्तः। गं इत्युक्त्या त्रिभाग उक्तः। गा इत्युक्त्या त्रिभाग उक्तः। व इत्युक्त्या चतुर्भाग उक्तः। ल्ली इत्युक्त्या त्रिभाग उक्तः। स्तु इत्युक्त्या षड्भाग उक्तः। ते इत्युक्त्या षड्भाग उक्तः। एतदुपरितनवृत्तपर्यन्तम्। ति इत्युक्त्या षड्भाग उक्तः प्रदर्श्यते। इति इत्थं पृथक् पृथक् उक्तप्रमाणमवलोकनीयम्। मानमिति प्रमाणम्। श्रीचक्रनिर्माणे इति। श्रीचक्रनिर्माणे इत्थं निर्माणप्रकारः। सूत्रेष्विति रेखासु नवस्विति। नवसूत्रेषु क्रमादिति रेखासूक्तक्रमेणेत्यर्थः ॥

अथान्तर्नवरेखासु मार्जनप्रकार उच्यते —

आद्ये द्वितीयेऽष्टमके नवमे च यथाक्रमम्।
मार्जयेत् गुणभागांशात् ... ... ... ॥

इत्यादि श्लोकः। तत्र आद्ये इत्युक्त्या आद्ये सूत्रे। द्वितीये इत्युक्त्या द्वितीये सूत्रे। अष्टमके इत्युक्त्या अष्टमे सूत्रे। नवमे इत्युक्त्या नवमे सूत्रे। यथाक्रममिति वक्ष्यमाणक्रमेण मार्जयेदिति। गुणभागांशात् इत्युक्त्या रेखाया उभयपार्श्वेपि कटपयादिसंकेतेन पृथक् पृथक् मार्जयेदित्यर्थः। तत्र गु

इत्युक्त्या प्रथमसूत्रे उभयपार्श्वेपि पृथगंशत्रयेण संभूय अंशषट्कं मार्जयेत्। ण इत्युक्त्या द्वितीयसूत्रे उभयपार्श्वेपि पृथगंशपञ्चकेन संभूयांशदशकं मार्जयेत्। भा इत्युक्त्या अष्टमे सूत्रे उभयपार्श्वेपि पृथगंशचतुष्टयेन संभूयांशाष्टकं मार्जयेत्। गा इत्युक्त्या नवमे सूत्रे उभयपार्श्वेपि पृथगंशत्रयेण संभूयांश-षट्कं मार्जयेत्। अंशादिति पूर्वोक्तांशेन मार्जयेदित्यर्थः। वृत्तादेकत्र चान्यत इति वृत्तमारभ्य पृथक् पृथक् पूर्वोक्तप्रकारेणोभयपार्श्वेपि मार्जयेदित्यर्थः॥

चतुर्थषष्ठयोः पार्श्वे इत्यादि। तत्र चतुर्थषष्ठयोरित्युक्त्या चतुर्थसूत्रेऽपि षष्ठसूत्रेऽपि। पार्श्वे इत्युक्त्या चतुर्थषष्ठरेखाद्वयस्य उभयपार्श्वेऽपि। तोयांशं परिमार्जयेदिति। पृथक् पृथक् षोडशांशेन संभूय द्वात्रिंशदंशं मार्जयेत्। तथा कृते सूत्रद्वयस्यापि संभूय चतुष्षष्ट्यंशं मार्जितं भवति। पञ्चमस्य जयांशं च इत्यादि। अत्र पञ्चमस्येत्युक्त्या पञ्चमसूत्रे जयांशं च मार्जयेत्। अन्यपार्श्वत इत्युक्त्या उभयपार्श्वेऽपि पृथक् पृथक् अष्टादशांशेन संभूय षट्त्रिंशदंशं मार्जयेत्। तृतीयसप्तमयोः सूत्रयोरंशमार्जनं नास्ति। मूलश्लोके अनुक्तत्वात्॥

अथ नवरेखासंसर्गप्रकार उच्यते—

तृतीयान्तात् द्वितीयान्तात् चतुर्थान्ताच्च पञ्चमात्। इति।

तत्र तृतीयान्तादित्युक्त्या, तृतीयरेखापार्श्वद्वयमपि उपरितनवृत्तमध्ये त्रिकोणाकारेण योजनीयम्। द्वितीयान्तादित्युक्त्या द्वितीयरेखापार्श्वद्वयमपि नवमसूत्रमध्ये त्रिकोणाकारेण योजनीयम्। चतुर्थान्तादित्युक्त्या चतुर्थसूत्र-पार्श्वद्वयमपि अष्टमसूत्रमध्ये त्रिकोणाकारेण योजनीयम्। पञ्चमादित्युक्त्या, पञ्चमसूत्रपार्श्वद्वयमपि सप्तमसूत्रमध्ये त्रिकोणाकारेण योजनीयम्। प्रथमान्तात् सूत्रयुगं वृत्ततो नवमादिकं इत्युक्त्या प्रथमसूत्रपार्श्वद्वयमपि सप्तसूत्रमध्ये त्रिकोणाकारेण योजनीयम्। इत्थं पञ्चशक्तिचक्रम्॥

सप्तमाष्टमयोरन्तात् तथा षष्ठनवान्तयोरिति । तत्र सप्तमेत्युक्त्या सप्तम-सूत्रपार्श्वद्वयमपि अधोभागवृत्तमध्ये त्रिकोणाकारेण योजनीयम् । अष्ट-मयोरन्तादित्युक्त्या अष्टमसूत्रपार्श्वद्वयमपि प्रथमसूत्रमध्ये त्रिकोणाकारेण योजनीयम् । तथा षष्ठेत्युक्त्या षष्ठसूत्रपार्श्वद्वयमपि द्वितीयसूत्रमध्ये त्रिकोणा-कारेण योजनीयम् । नवान्तयोरित्युक्त्या नवमसूत्रपार्श्वद्वयमपि तृतीयसूत्रमध्ये त्रिकोणाकारेण योजनीयम् । एतत् चतुष्टयं शिवचक्रं वह्निचक्रमित्यपि च ॥

वृत्तादिसूत्रयुगलक्रमात् सूत्रद्वयं द्विधं इति ॥ वृत्तादि अधोवृत्तं च उपरिवृत्तं चारभ्य सर्वाश्च रेखा उभाभ्यां पार्श्वाभ्यां त्रिकोणाकारेण तत्तदुक्त-रेखामध्ये योजनीयाः ॥ हर्म्यवर्मसमोपेतं भद्रसन्धिसमन्वितं इति ॥ वर्म त्र्यादिरेखासंयोगः । सन्धिः द्विरेखासंयोगः । अष्टादशवर्माणि च चतुर्विंशति-सन्धयश्च यथा भवन्ति तथा लेखनीयम् । यत् चक्रं ललितायास्तत् मङ्गलं नेतरत् भवेत् । यल्ललितादेव्याश्चक्रं उक्तप्रकारेण लिखितं तन्मङ्गलकरं भवेदित्यर्थः । इतरत् अन्यथा लिखितं न भवेत् मङ्गलं न भवेदित्यर्थः ॥ तत्रैतत्कल्पकारमते वृत्तत्रयं चेत्यत्रोक्तवृत्तत्रयं तु मन्वश्रनागदळषोडशार-मर्यादाकरणवृत्तत्रयमेव । न पृथक् वृत्तत्रयम् ॥

विद्यारण्यकृतावपि तथोक्तम्—

बिन्दुत्रिकोणकाष्टा अवतार युगलोकपत्रवृत्तयुतम् ।
वसुदळवृत्तकलादलवृत्तत्रिमहीगृहं भजे चक्रम् ॥ इति ॥

तत्रैतच्चक्रं शिवशक्त्यात्मकम् । तदुक्तमर्णवे —

चतुर्भिश्शिवचक्रैश्च शक्तिचक्रैश्च पञ्चभिः ।
नवचक्रैश्च संसिद्धं श्रीचक्रं शिवयोर्वपुः ॥ इति ॥

तत्र शक्तिचक्रमुखं यस्यां दिशि वर्तते तद्दिङ्मुखस्थः पूजां कुर्यात् शक्तिप्राधान्यात् । इति श्रीचक्रलेखनविधिस्समाप्तः ॥

अथ श्रीचक्रमध्ये लेखनीयाक्षराणि लिख्यन्ते — तत्र प्रथमं त्रिकोणमध्यस्थ बिन्दुमध्ये लेखनीयाक्षरोद्धारश्लोकः ॥

कमलं परिलुप्य मध्यमान्यत्
स्वरमीशादियुतं सबिन्दुनादम् ।
निगमादिनमोन्तरे विराजत्
भुवि देवीहृदयप्रतिष्ठमेतत् ॥

अस्यार्थः — कमलं परिलुप्येति । श्रीविद्यायाः द्वितीयखण्डस्य कामकलाखण्डत्वात् कामबीजात्मकं क्लींकारं सिद्धवत्कृत्य तस्य ककारमकारलकाराक्षराणि लोपयित्वा, मध्यमान्यत्स्वरमिति । तन्मध्ये पुनरवशिष्टो यश्चतुर्थस्वरः ईकारः स पुनरीशादियुतमिति । तद्बीजं पुनरीशानः सर्वविद्यानामित्यस्य मन्त्रस्य य आदिभूतो वर्णः ईकारः तेन बीजेन एतत्पूर्वोक्तं बीजं तु युतमिति । पूर्वोक्तस्य बीजस्य आदौ संयोजयेदित्यर्थः । बीजमिति । वक्ष्यमाणबिन्दुनादसंयोगादुक्तं सबिन्दुनादमिति । पुनरेतद्बीजं बिन्दुनादद्वययुक्तं च भवेत् । पुनः निगमादिनमोन्तरे विराजदिति । निगमो वेदः तस्यादिः प्रणवः । नमः इति स्वरूपोपादानम् । अनयोरन्तरे मध्ये विराजत् अस्य बीजस्य आदौ प्रणवः अन्ते नमःपदं चेत्यर्थः । भुवि देवीहृदयप्रतिष्ठमेतदिति । भुवि भूसत्तायामिति सद्भावकारणे योनौ श्रीचक्रमध्यत्रिकोणे इत्यर्थः । देवीहृदयमिति । तत्र देवीति त्रिकोणमध्यस्थं बिन्दु तस्य हृदयं तन्मध्यमित्यर्थः । प्रतिष्ठमेतदिति । एतद्बीजं तत्र स्थितं कुर्यात् । बिन्दुमध्ये एतन्मन्त्रं लिखेदित्यर्थः ॥

अस्य मन्त्रस्य स्वरूपं लिख्यते – ॐ ईँ ईँ नमः । इति पञ्चवर्णात्मकः । पुनस्त्रिकोणकोणेषु मूलमन्त्रस्य खण्डत्रयं प्रागादिकोणेषु, पुनरष्टकोणेषु [1] ब्लूं कूळह्रीं (वूलह्रीं) [2] ल्वूलूं यूलूं ज्म्रीं ह्स्ल्व्यूं [3] झ्मूं क्ष्म्रीं इति विलिखेत् ।

१ ब्लूं कळह्रीं इति ग, घ, ङ पाठः । २ न्ब्लूं इति ग, च पाठः ।
३ क्ष्म्यूं क्ष्म्रीं इति ग, घ, च पाठः ।

अन्तर्दशारे यादयः क्षान्ताः सबिन्दुकाः क्रमेण विलेख्याः । बहिर्दशारे कवर्गचवर्गयोः वर्णास्सबिन्दुका लेखनीयाः । मन्वश्रे तृतीयवर्गादयः पञ्चमवर्गे चतुर्थाक्षरान्ताः वर्णाः क्रमेण सबिन्दुका लेखनीयाः । नागदलेषु कवर्गाद्यष्टवर्गाः क्रमेण । तत्र यादिचतुष्टयं शादिचतुष्टयम् । (ळादिद्वयम् ।) क्रमेण सबिन्दुकाः । तत्रापि प्रथमचतुष्टयं पूर्वादिदिक्षु इतरचतुष्टयं आग्नेयादिविदिक्षु च विलिखेत् । षोडशारे षोडशस्वरान् सबिन्दुकान् प्रागादिवामावर्तक्रमेण विलिखेत् । प्रथमचतुरश्रे पश्चिमादिचतुर्दिक्षु द्रां द्रीं क्लीं ब्लूं इति वाय्वादिकोणेषु सः क्रों ह्स्ख्फ्रें कलह्रीं इति विलिखेत् । चतुरश्रस्य ऊर्ध्वाधः ऐं ऐं इति बीजद्वयं, द्वितीयचतुरश्रे अष्टदिक्षु दीर्घस्वराक्षराण्यष्ट, तत्र स्वराक्षरयुगले द्वितीयाक्षराणि दीर्घस्वराः । तृतीयचतुरश्रे अणिमादिसिद्धिचतुष्टयस्याद्यक्षराणि पश्चिमादिचतुर्दिक्षु वशित्वादिचतुष्टयस्याद्यक्षराणि वाय्वादिषु । तत्र ऊर्ध्वाधः प्राप्तिप्राकाम्यसिद्ध्योराद्यक्षरं विलिखेत् ॥

अथ चक्रनायकीबीजानि । [1] ह्स्क्ल्र्डैं ह्स्क्ल्र्डीं ह्स्क्ल्र्डौं इति बिन्दुमध्ये, ह्स्रैं ह्स्क्लीं ह्स्रौं (इति) त्रिकोणे, ह्रीं श्रीं सौः इति अष्टकोणे, ह्रीं क्लीं [2] ब्लें इति अन्तर्दशारे, ह्सैं ह्स्क्लीं ह्सौः इति बहिर्दशारे, हैं ह्क्लीं ह्सौः इति मन्वश्रे, ह्रीं क्लीं सौः इति अष्टदले, ऐं क्लीं सौः इति षोडशदले, अं आं सौः इति चतुरश्रे, इति नवचक्रनायकीबीजानि तत्तदावरणे पुरतो विलिखेत् ॥

अथ श्रीविद्यापञ्चदशाक्षरीन्यासविधिर्लिख्यते —

तत्र श्रीविद्यान्यासाः बहुविधेषु कल्पेषु वर्तन्ते । तत्सर्वं वर्षशतेनापि विलिखितुं न शक्यते । तस्मात्तेषु सर्वेष्वपि आलोच्य, ये ये न्यासाः

---

१ ह्स्क्ल्रुडैं इति च पाठः । अयमेव न्याय्यो भाति । इदं मन्त्रानुष्ठातॄणामयमेवपाठः इतः परमप्येवमेव बहुत्र दृश्यतेच ॥

२ प्लें इति ग, च पाठः ।

सारतमाः ते सर्वेपि ततस्तत उद्धृत्य श्रीमदमरेन्द्रसरस्वतीकृपालेशविश्रान्तःकरणेन मयात्र लिख्यन्ते ॥

तत्र प्रथमं तावत् गुरुपङ्क्तिपीठन्यास[1] लघुषोढान्यास श्रीचक्रन्यास-महाषोढान्यासादयः श्रीमद्विद्यारण्ययतिवरभृङ्गिभूपाल आनन्दनाथादि विरचित-पद्धत्युक्तप्रकारेण च ज्ञानार्णवे पञ्चमखण्डे मोक्षपादे ऊर्ध्वाम्नाये प्रोक्तप्रकारेण च लिख्यन्ते ॥

ऐं ह्रीं श्रीं स्वस्ति श्रीपरमशिवानन्दनाथपादाद्यशेषगुरुपारंपर्यक्रमेण स्वगुरु-नाथपादाम्बुजं यावत्तावत्प्रणौमि. इति त्रिखण्डमुद्रया वक्ष्यमाणया शिरसि नमस्कृत्य, श्रैं ह्रीं श्रीं गं गणपतये नमः इति मूलाधारे त्रिखण्डमुद्रया संबन्ध्य, गुं गुरुभ्यो नमः। गं गणपतये नमः। ॐ ह्रीं दुं दुर्गायै नमः। क्षं क्षेत्रपालाय नमः। यां योगिनीभ्यः स्वाहा। वं वटुकभैरवाय नमः। सं सरस्वत्यै नमः। पं परमात्मने नमः। इति मन्त्रेण दक्षवामांसदक्षवामस्तन दक्षवामोरुमूलाधारहृदयेषु संबन्ध्य हूः अस्त्राय फडिति करशुद्धितालत्रय-दिग्बन्धनादि कृत्वा, ॐ ठ्लीं पशु हुंफडिति पाशुपतास्त्रमन्त्रेणाग्निप्राकारान् कृत्वा, श्रीविद्यामन्त्रखण्डत्रयेण पृथक् व्याप्य ऐं नमः। क्लीं नमः। सौः नमः। इति नाभिहृदयभ्रूमध्येषु विन्यस्य ऐं ह्रीं श्रीं ऐं क्लीं सौः श्रीमहा-त्रिपुरसुन्दरि ममात्मानं रक्ष रक्षेति मन्त्रेण हृदयं स्पृष्ट्वा, पुनः मूलमन्त्र-प्रथमखण्डं त्रिवारमावर्त्य दक्षिणनासिकया विरेच्य द्वितीयखण्डं षड्वारं जप्त्वा दक्षिणनासिकया आपूर्य, तृतीयखण्डं द्वादशवारं जपन् कुम्भकं कृत्वा, समस्तखण्डं जपन् वामनासिकया शनैर्विरेचयेत् ॥

खण्डत्रयमुक्त्वा त्रिवारं व्यापकं विन्यस्य, मातृकास्थानेषु प्रणव-भुवनेश्वरीसंपुटितमातृकार्णान् विन्यस्य, ऐं क्लीं सौः इति नाभिहृदयभ्रूमध्येषु

---

१ मातृकान्यास कुङ्कुमन्यास लघुषोढान्यास इति ग, च, पाठः।

विन्यस्य, ऐं क्लीं सौः इति मध्यमादिकनिष्ठान्तं अंगुष्ठादितलान्तं विन्यस्य, पुनः पीठन्यासं कुर्यात् ॥

ऐं ह्रीं श्रीं अं आं सौः श्रीत्रिपुरे अमृतार्णवासनाय नमः । ऐं ह्रीं श्रीं ऐं क्लीं सौः श्रीत्रिपुरेश्वरिपोताम्बुजासनाय नमः । ऐं ह्रीं श्रीं ह्रीं क्लीं सौः श्रीत्रिपुरसुन्दरीदेव्यासनाय नमः । ऐं ह्रीं श्रीं हैं ह्क्लीं ह्सौः श्रीत्रिपुरवासिनि श्रीचक्रासनाय नमः । ऐं ह्रीं श्रीं ह्सैं ह्स्क्लीं ह्सौः श्रीत्रिपुरादेविसर्वमन्त्रासनाय नमः । ऐं ह्रीं श्रीं [1]ह्रीं क्लीं ब्लें श्रीत्रिपुरामालिनि साध्यसिद्धासनाय नमः । ऐं ह्रीं श्रीं ह्रीं श्रीं सौः [2]पर्यङ्काय शक्तिपीठासनाय नमः । इति पादयोः जान्वोः ऊर्वोः कट्योः मूलाधारे स्वाधिष्ठाने नाभौ च क्रमेण विन्यस्य ततः मध्यत्रिकोणाय नमः इति हृदये त्रिकोणाकारेण विन्यस्य, मध्यवृत्ताय नमः इति हृदये त्रिकोणमध्ये विन्यस्य ;

ऐं ह्रीं श्रीं कामगिरिपीठपादुकां पूजयामि । ऐं ह्रीं श्रीं जालंध्र पीठ-पादुकां पूजयामि । ऐं ह्रीं श्रीं रुद्राय तेजोधिपतये नमः । ऐं ह्रीं श्रीं ईश्वराय वाय्वधिपतये नमः । ऐं ह्रीं श्रीं ह्सौः वियदधिपतये पञ्चवक्त्राय सदाशिवाय श्रीमहाप्रेतपद्मासनाय नमः । एतैर्दक्षोरुतदंसवामांसतदूरुहृदयेषु यथाक्रमं विन्यस्य ऐं ह्रीं श्रीं ह्स्क्ल्र्डैं ह्स्क्ल्र्डीं ह्स्क्ल्र्डौं पुष्पतूलिकायै नमः । ऐं ह्रीं श्रीं अइउ आईऊ एइओ ऐइऔ ऐंईऔः ऐं क्लीं सौः क्लैं क्लीं क्लौः हैं ह्क्लीं ह्सौः ह्सैं ह्स्रू(ह्स्र्)क्लीं ह्स्रौः ह्स्रु(ह्स्)क्ल्र्डैं ह्स्रु(स्र्)क्ल्र्डीं ह्स्क्ल्ड्रौः ह्स्क्ष्ल्म्व्र्यऐं ह्स्क्ष्म्ल्व्र्यईं ह्स्क्ष्म्ल्व्र्यऔः इति हृदयं स्पृष्ट्वा, मृगीमुद्रया जपेत् । कनिष्ठातर्जन्यौ ऋजूकृत्य अंगुष्ठमध्यमाऽनामिकाग्राणां संहतिः मृगीमुद्रा ॥

---

१ ह्रीं क्लीं प्लें इति ग-पाठः ।

२ त्रिपुरासिद्धादेवि पर्यङ्काय इति च पाठः ।

ऐं ह्रीं श्रीं ऐं क्लीं सौः आं ईं ऊं यां रां लां वां सां कामेश्वरि इच्छा-कामफलप्रदे सर्वसत्त्ववशंकरि जगत् क्षोभणकरे हूं ऐं द्रां द्रीं क्लीं ब्लूं सः ह्सौः क्लीं ऐं अं कामेश्वरि नित्यादेवि श्रीपादुकां पूजयामि ॥

ऐं ह्रीं श्रीं ऐं भगभुगे भगिनि भगोदरि भगमाले भगावहे भगगुह्ये भगयोनि भगनिपातिनि सर्वभगवशंकरि भगरूपे नित्यक्लिन्ने भगस्वरूपिणि सर्वाणि भगानि मे ह्यानय वरदे रेते सुरेते भगक्लिन्ने क्लिन्नद्रवे क्लेदय द्रावय अमोघे भगविच्चे क्षुभ क्षोभय सर्वसत्वान् भगेश्वरि ऐं ब्लूं जें ब्लूं हें ब्लूं भें ब्लूं मों ब्लूं हें क्लिन्ने सर्वाणि भगानि मे वशमानय स्त्रीं हरब्लें ह्रीं आं भगमालिनि नित्यादेवि श्रीपादुकां पूजयामि । ऐं ह्रीं श्रीं ओं ह्रीं नित्यक्लिन्ने मदद्रवे स्वाहा, इं नित्यक्लिन्नानित्यादेवि श्रीपादुकां पूजयामि ॥

ऐं ह्रीं श्रीं ओं क्रों भ्रों क्रौं झ्रौं छ्रौं ज्रौं स्वाहा, ईं भेरुण्डानित्यादेवि श्रीपादुकां पूजयामि । ऐं ह्रीं श्रीं ओं ह्रीं वह्निवासिन्यै नमः, उं वह्निवासिनि नित्यादेवि श्रीपादुकां पूजयामि । ऐं ह्रीं श्रीं ह्रीं क्लिन्ने ऐं क्रों नित्यमदद्रवे ह्रीं ऊं महाविद्येश्वरि नित्यादेवि श्रीपादुकां पूजयामि । ऐं ह्रीं श्रीं ह्रीं शिवादूत्यै नमः । ऋं शिवादूतिनित्यादेविश्रीपादुकां पूजयामि । [1]ऐं ह्रीं श्रीं ह्रीं ओं ह्रीं हुं खेचच्छेक्षः स्त्री हुं क्षे ह्रीं फट् । ॠं त्वरितानित्यादेविश्रीपादुकां पूजयामि । ऐं ह्रीं श्रीं ऐं क्लीं सौः लं कुलसुन्दरि नित्यादेविश्रीपादुकां पूजयामि । ऐं ह्रीं श्रीं ह्स्क्ल्ड्रैं ह्स्क्ल्ड्रीं ह्स्क्ल्ड्रौं ॡं नित्यानित्यादेवि-श्रीपादुकां पूजयामि । [2]ऐं ह्रीं श्रीं ह्रीं फट् स्रूं क्रों आं क्लीं ऐं ब्लूं नित्य-मदद्रवे हुं प्रें ह्रीं एं नीलपताकानित्यादेविश्रीपादुकां पूजयामि । ऐं ह्रीं श्रीं भ्म्र्य्रीं ऊं ऐं विजयानित्यादेविश्रीपादुकां पूजयामि । ऐं ह्रीं श्रीं स्वौं ॐ सर्वमङ्गळानित्यादेविश्रीपादुकां पूजयामि । ऐं ह्रीं श्रीं ह्रीं ॐ नमो भगवति

१ ऐं ह्रीं श्रीं ओं ह्रीं हुं इति ख, ग, च पाठः ।

२ ऐं ह्रीं श्रीं ह्रीं फ्रूं इति ङ पाठः ।

ज्वालामालिनि देवि देवि सर्वभूतसंहारकारिके जातवेदसि ज्वलन्ति ज्वल ज्वल प्रज्वल प्रज्वल ह्रां ह्रीं ह्रूं र र र र र र र इति रेफसप्तकमुक्त्वा ज्वालामालिनि हुं फट्स्वाहा, औं ज्वालामालिनि नित्यादेविश्रीपादुकां पूजयामि। [1]ऐं ह्रीं श्रीं च कौं अं चित्रानित्यादेविश्रीपादुकां पूजयामि। ऐं ह्रीं श्रीं मूलमन्त्रमुक्त्वा अः महात्रिपुरसुन्दरि नित्यादेवि श्रीपादुकां पूजयामि ॥

एतैर्मन्त्रैः त्रिकोणवृत्तयोः मध्ये पूर्वादिप्रादक्षिण्यक्रमेण न्यस्त्वा त्रिपुरादेवीं वृत्तमध्ये न्यसेत्। पुनः,

अखण्डैकरसानन्दकलेवरसुधात्मनि।
स्वच्छन्दस्फुरणामत्र निधेहि कुलसुन्दरि ॥

अकुलस्थामृताकारेऽखण्डज्ञानसुखप्रदे।
अमृतत्वं निधेह्यत्र वस्तुनि क्लिन्नरूपिणि ॥

त्वद्रूपस्यैकरस्यन्दतत्वाख्ये तत्वरूपिणि।
भूत्वा परामृताकारे मयि चित्स्फुरणं कुरु ॥

विजये विवेकदायिनि विश्वाधिकचरणदर्शनादर्शे।
विश्वग्रासपटीयसि विश्वेन्द्रियविजयदायिनि नमस्ते ॥

अज्ञानेन्धनदीप्ते त्वं ज्ञानाग्निज्वालरूपिणि।
आनन्दाज्याहुतिप्रीते सम्यक् ज्ञानं प्रसीद मे ॥

ऐं ह्रीं श्रीं ह्रीं भङ्गिभङ्गि महाभङ्गि मम वैरिभङ्गं कुरु कुरु मम प्रसन्नं कुरु कुरु स्वाहा। ऐं ह्रीं श्रीं ह्स्क्ष्म्रव्र्यऐं ह्स्क्ष्म्ल्व्र्यईं ह्स्क्ष्म्ल्व्र्य् औः ज्ञानप्रकाशनाय विद्यासनाय स्वाहा। एतान्मन्त्रान् हृदयं स्पृष्ट्वा जपेत् ॥

---

१ ऐं ह्रीं श्रीं चिं कौं इति ङ पाठः। चिकौं इति ग पाठः।

पुनः ऐं ह्रीं श्रीं पद्ममुद्रादेवि श्रीपादुकां पूजयामि । ऐं ह्रीं श्रीं त्रिखण्डमुद्रादेवि श्रीपादुकां पूजयामि । ऐं ह्रीं श्रीं योनिमुद्रादेवि श्रीपादुकां पूजयामि । इति मुद्रां प्रदर्श्य, पुनः काकचञ्चुपुटक्रमेण मारुतं पीत्वा हाहाहा इत्युच्चार्य सुषुम्नापद्मभेदं कृत्वा *हस्रं इति प्रबुद्धां कुण्डलिनीं द्वादशान्तं नीत्वा तत्रस्थपरमशिवेनैकरस्यं विचिन्त्य, ततः समुद्भूतं शिवशक्तिस्वरूपं श्रीचरणारविन्दयुगळं संस्मृत्य चरणानि पारंपर्यं च क्रमेण न्यसेत् ॥ तद्यथा —

ओं ह्रीं श्रीं कएईलह्रीं रक्तचरणाभ्यां नमः । ऐं ह्रीं श्रीं हसकहलह्रीं शुक्लचरणाभ्यां नमः । ऐं ह्रीं श्रीं सकलह्रीं रक्तशुक्लमिश्रचरणाभ्यां नमः । ऐं ह्रीं श्रीं मूलमन्त्रखण्डत्रयमुक्त्वा निर्वाणचरणाभ्यां नमः । मूलमन्त्रमुच्चार्य निर्वाणरूपे परे संविन्मये श्रीमहात्रिपुरसुन्दरि देवि दिव्यश्रीपादुकां पूजयामि । इति मृगीमुद्रया एतैर्मन्त्रैश्शिरसि त्रिकोणमध्ये च न्यसेत् । पुनर्द्वादशान्तमारभ्य शिरोवधि वक्ष्यमाणक्रमेण गुरुपरंपरामर्चयेत् ॥

ऐं ह्रीं श्रीं परमशिवानन्दनाथश्रीपादुकां पूजयामि । ऐं ह्रीं श्रीं पराशक्त्यम्बाश्रीपादुकां पूजयामि । ३ पराधिकानन्दनाथ० ३ कुलेश्वरानन्दनाथ० ३ शुक्लादेव्यम्बाश्री० ३ कामेश्वरानन्दनाथ श्रीपादुकां० ३ कामेश्वर्यम्बादेवीश्रीपादुकां पूजयामि । ३ इति दिव्यौघेभ्यो नमः ॥

ऐं ह्रीं श्रीं भोगानन्दनाथ श्रीपादुकां पूजयामि । ३ समयानन्दनाथ० ३ सहजानन्दनाथ० ३ इति सिद्धौघेभ्यो नमः ॥

ऐं ह्रीं श्रीं गगनानन्दनाथ श्रीपादुकां पूजयामि । ३ विश्वानन्दनाथ० ३ विमलानन्दनाथ० ३ मदनानन्दनाथ० ३ भुवनानन्दनाथ० ३ लीलानन्दनाथ० ३ स्वात्मानन्दनाथ० ३ प्रियानन्दनाथ० ३ इति मानवौघेभ्यो नमः ॥

---

*हस्रौं इति ख घ मातृकापाठः ।

ऐं ह्रीं श्रीं यज्ञानन्दनाथ श्रीपादुकां पूजयामि । ३ कृष्णानन्दनाथ० ३ नित्यानन्दनाथ० ३ आत्मानन्दनाथ० *३ ईंगा (ईशा) नन्दनाथ० ३ कुळानन्दनाथ श्रीपादुकां पूजयामि । एतैर्मन्त्रैः मृगीमुद्रया पारंपर्यक्रमेण न्यसेत् ॥

३ परमेष्ठिगुरुनाथश्रीपादुकां पूजयामि । ३ परमगुरुनाथ० ३ स्वगुरुनाथश्रीपादुकां पूजयामि । इति स्वगुरुपादाम्बुजं शिरसि विन्यस्य स्वात्मानं हृदये विन्यस्य स्वगुरुनाथपादुकां सप्तवारं संजप्य गुरुं पञ्चोपचारैः संपूज्य, योनिमुद्रां प्रदर्श्य गुरुदेवतयोरैक्यं परिभाव्य देवीमावाहयेत् । ऐं ह्रीं श्रीं ऐं क्लीं सौः,

महापद्मवनान्तःस्थे कारणानन्दविग्रहे ।
सर्वभूतहिते मातः एह्येहि परमेश्वरि ॥

ऐं क ए ई ल ह्रीं क्लीं ह स क ह ल ह्रीं सौः स क ल ह्रीं श्रीं ह्स्क्ल्ह्डैं ह्स्क्ल्ह्डीं ह्स्क्ल्ह्डौं स्‌ह्रौं भगवति आगच्छागच्छ मम हृदये सान्निध्यं कुरु कुरु मम प्रसन्नं कुरु कुरु स्वाहा, इति मन्त्रेण त्रिखण्डमुद्रया ब्रह्मरन्ध्रस्थां देवीं तटित्कोटिविडम्बिनीं सर्वाभरणसंच्छन्नां सपरिवारां श्रीचक्रमध्यगतां वामनासापुटमार्गविनिर्गतां देवीं स्वहृदयमध्यस्थ त्रिकोणमध्यगतबिन्दुमध्ये आवाह्यावाहनादिपञ्चमुद्राः प्रदर्श्य, प्राणप्रतिष्ठां कृत्वा पञ्चोपचारैः संपूज्य, मूलमन्त्रमुक्त्वा योनिमुद्रां प्रदर्श्य, स्वनामसहितमूलमन्त्रेण कुम्भकप्राणायामं कृत्वा ऐक्यं परिभाव्य, मूलमन्त्रेण त्रिपुरसुन्दरीदेव्यै नम इति व्यापकं विन्यस्य पुण्यपुरुषोहमिति स्वात्मानं विचिन्त्य स्वदेहं तेजोमयं देवतारूपं संचिन्त्य पुनः,

संक्षोभद्रावणाकर्षवश्योन्मादमहाङ्कुशाः ।
खेचरीबीजयोन्याख्या नव मुद्राः प्रकीर्तिताः ॥

इत्येता वक्ष्यमाणमुद्राः प्रदर्श्य पुनरक्षरन्यासं कुर्यात् ॥

---

* ३ ईंगानन्दनाथ इति ख पाठः ।

मूर्ध्नि मूलाधार-हृदय-नेत्रत्रय-भ्रूमध्य-श्रोत्रद्वयांसद्वय-पृष्ठ-जानुद्वय-नाभ्यन्तं न्यसेत्। पुनर्मूलमन्त्रेण व्याप्य, पुनः खण्डत्रयं मूलाधार-हृदय-भ्रूमध्येषु विन्यस्य मूलमन्त्रं मूर्ध्नि विन्यस्य हस्तद्वयेपि बाहुमूलमध्यमणिबन्धेषु खण्डत्रयं पृथक् विन्यस्य मूलमन्त्रं करतलद्वये विन्यस्य करद्वयांगुलीषु खण्डत्रयेण मध्यमादिकनिष्ठिकान्तं अंगुष्ठादितलान्तं च पृथग्विन्यस्य मूलमन्त्रस्याङ्गऋषि-छन्दोदेवतादिकं विन्यस्य सकुङ्कुमविलेपनामित्यादि ध्यात्वा, पुनः आयुध-मुद्राः प्रदर्शयेत् ॥

क्रों द्वेषात्मने अंकुशाय नमः। आं रागात्मने पाशाय नमः। द्रां द्रीं क्लीं ब्लूं सः शब्दस्पर्शरूपरसगन्धात्मभ्यः पञ्चबाणेभ्यो नमः। यं मनआत्मने इक्षुचापाय नमः। इत्याद्यायुधमुद्राः प्रदर्श्य, किरीटमकर-कुण्डलमुद्राः सप्तदशपटलोक्तप्रकारेण प्रदर्श्य, पुनः कुङ्कुमन्यासं कुर्यात् ॥ तत्प्रकारः —

सकलह्रीं अं नमः सकलह्रीं इत्यादि (इत्येवं मातृकाक्षरान्) तृतीय-खण्डेन पुटित्वा मातृकास्थानेषु विन्यस्य हसकहलह्रीं अं नमः हसकहलह्रीं इत्यादिमध्यखण्डेन पुटित्वा मातृकास्थानेषु विन्यस्य क ए ई ल ह्रीं अं नमः क ए ई ल ह्रीं इत्यादिप्रथमखण्डेन पुटित्वा मातृकास्थानेषु विन्यस्य, क ए ई ल ह्रीं ह स क ह ल ह्रीं स क ल ह्रीं अं नमः क ए ई ल ह्रीं ह स क ह ल ह्रीं स क ल ह्रीं इत्यादि समस्तखण्डेन पुटित्वा मातृकास्थानेषु विन्यसेत्। एवं कुंकुमन्यासं कृत्वा (कुर्यात्) ॥

अथ दशविधमातृकान्यासः। तत्प्रकारः —

शुद्धं बिन्दुयुतं विसर्गसहितं हृल्लेखया श्रीपुटं
बालासंपुटितं तथैव परया श्रीविद्ययालंकृतम्।

आरोहादवरोहतस्त्वजपया न्यासं पुनर्मालिनीं
यो जानाति स एव सर्वजगतां सृष्टिस्थितिध्वंसकः ॥

अस्यार्थः — हृल्लेखया पुटित्वा मातृकान्यासः । श्रीबीजबालाबीजत्रय परामन्त्र श्रीविद्यामन्त्रैश्च प्रत्येकं पुटित्वा मातृकान्यासः । तत्र बालापुटितं अनुलोमप्रतिलोमेन । अजपा अनुलोमप्रतिलोमाभ्यां पुटित्वा मातृकान्यासः । ऐं ह्रीं श्रीं ऐं क्लीं सौः ईं मालिनि अं नमः । ऐं ह्रीं श्रीं ऐं क्लीं सौः ईं मालिनि आं नमः । इति मातृकास्थानेषु न्यसेत् । अन्यत्सर्वं स्पष्टार्थं । अनन्तरं श्रीकण्ठादिन्यासं च प्रगवकलामातृकान्यासं च प्राक् सप्तमपटले प्रोक्तप्रकारेण कुर्यात् ॥

अथ लघुषोढान्यासः ॥ तत्प्रकारः — गणेश-ग्रह-नक्षत्र-योगिनी-राशि-पीठकैः अयं न्यासः षड्विधः ॥

अथ गणेशन्यासः — महागणपतेः ऋष्यादिकं विन्यस्य ऐं ह्रीं श्रीं गं अं विघ्नेशनाथश्रियंबाभ्यां नमः । बीजचतुष्टयमुक्त्वा आं विघ्नराजनाथ-ह्रियंबाभ्यां नमः । ४इं विनायकनाथपुष्टयम्बाभ्यां० ४ईं शिवोत्तमनाथशान्त्यम्बा० ४ उं विघ्नकृन्नाथस्वस्त्यम्बा० ४ ऊं विघ्नकर्तृनाथसरस्वत्यम्बा० ४ ऋं कपिलनाथ-कान्त्यम्बा० ४ ॠं गणनायकनाथमेधाम्बा० ४ ऌं एकदन्तनाथकान्त्यम्बा० ४ ॡं द्विदन्तनाथकामिन्यम्बा० ४ एं गजवक्त्रनाथमोहिन्यम्बा० ४ ऐं निरञ्जननाथ-जयाम्बा० ४ ओं कपर्दिनाथपार्वत्यंबा० ४ औं दीर्घमुखनाथज्वलिन्यम्बा० ४ अं शंखकण्ठनाथनन्दिन्यम्बा० ४ अः वृषध्वजनाथसुयशांबा० ४ कं गणनायकनाथ-कामरूपिण्यंबा० ४ खं गजेन्द्रनाथगुहाम्बा० ४ गं शूर्पकर्णनाथतेजोवत्यम्बा० ४ घं त्रिलोचननाथसत्यम्बा० ४ ङं लंबोदरनाथविघ्नेशिन्यम्बा० ४ चं महानन्द नाथस्वरूपिण्यम्बा० ४ छं चतुर्मदनाथजिह्वाम्बा० ४ जं सदाशिवनाथसन्ध्याम्बा० ४ झं आमोदनाथ [1] भूतिकाम्बा० ४ ञं दुर्मुखनाथघूर्णिताम्बा० ४ टं सुमुखनाथ-

[1] भौतिकाम्बा इति ख, ग, घ पाठः ।

[1]सिताम्बा० ४ढं प्रमोदनाथमोदाम्बा० ४डं एकपादनाथ[2]अमाम्बा० ४ढं द्विजिह्वानाथमहिष्यम्बा० ४णं शूरनाथध्वजिन्यम्बा० ४तं वीरनाथविकर्णांबा० ४थं षण्मुखनाथलज्जाम्बा० ४दं दीर्घघोणनाथ वरदांबा० ४धं वामदेवनाथ धनुर्धराम्बा० ४नं वक्रतुण्डनाथयामिन्यम्बा० ४पं द्विरण्डकनाथलोलाक्ष्यम्बा० ४फं सेनानीनाथकौमार्यम्बा० ४बं ग्रामणीनाथशशिन्यम्बा० ४भं मत्तनाथ-लोलाक्ष्यम्बा० ४मं विमत्तनाथचञ्चलाक्ष्यम्बा० ४यं मत्तगामिनीनाथदीप्ताम्बा० ४रं जटिनाथसुमुखेश्वर्यंबा० ४लं मुण्डिनाथरेवत्यंबा० ४वं खड्गिनाथशिवांबा० ४शं वरेण्यनाथमर्गाम्बा० ४षं वृषकेतननाथभगिन्यम्बा० ४सं भक्षप्रियनाथ-[3]योगिन्यम्बा० ४हं गणेशनाथगुप्तप्रियाम्बा० ४ळं कङ्काळनाथजिह्वाशक्त्यम्बा० ऐंह्रींश्रीं गं क्षं गणेश्वरनाथगुह्यप्रियाम्बाभ्यां नमः। इति मातृकास्थानेषु न्यस्तव्याः। मन्त्रादौ सर्वत्र बीजत्रयं योज्यम्॥ अथ फलमाह—

गणेशन्यासयुक्तेन विग्रहो येन यस्य वै।
सोन्येषां पावको देवि विभात्येव न संशयः॥

गणेशन्यासयोगेन विघ्नहर्ता स्वयं भवेत्।
अन्ते शिवत्वमास्थाय शिवेन सह मोदते॥

एवमेतस्य माहात्म्यं वक्तुं देवोपि न स्वयम्।
शक्नोमि नो शिवो देवि साक्षान्मुक्तत्वकारणात्॥

अथ ग्रहन्यासः। तेषां ध्यानम्—

रक्तं श्वेतं तथारक्तं श्यामं पीतं च पाण्डरम्।
धूम्रकृष्णं कृष्णधूम्रं धूम्रधूम्रं विचिन्तयेत्॥

---

१ शितांबा इति ख-ङ पाठः। २ रमांबा इति ख ङयोः पाठः।
३ भोगिन्यंबा इति ख-ङ पाठः।

रविमुख्यान्कामरूपान् सर्वाभरणभूषितान् ।

एवं ध्यात्वा न्यसेत् । ऐं ह्रीं श्रीं स्वरानुच्चार्य आदित्याय रेणुकाशक्तियुक्ताय नमः । ३ कवर्गान्ते सोमाय भगवते सुधाशक्तियुताय नमः । ३ चवर्गान्ते अङ्गारकाय भगवते धात्रीशक्तियुक्ताय नमः । ३ टवर्गान्ते बुधाय भगवते यशस्विन्यम्बायुक्ताय नमः । ३ तवर्गान्ते बृहस्पतये भगवते शाङ्कर्यम्बायुक्ताय नमः । ३ पवर्गान्ते शुक्राय भगवते ज्ञानाम्बायुक्ताय नमः । ३ यवर्गान्ते शनैश्चराय भगवते शक्त्यम्बायुक्ताय नमः । ३ शवर्गान्ते राहवे भगवते धूम्राम्बायुक्ताय नमः । ३ ळवर्गान्ते केतवे भगवते कृष्णाम्बायुक्ताय नमः । हृदयाधश्च भ्रूमध्ये च नेत्रद्वन्द्वे च हृदयोपरि च कण्ठे च नाभौ च वक्त्रे च गुदे च एतान्विन्यसेत् । बीजत्रयं सर्वत्र योज्यम् ॥

अथ नक्षत्रन्यासः -- नक्षत्रदेवताभ्यो नम इति देहे व्याप्य, पुनः ऐं ह्रीं श्रीं अं आं अश्विनीनक्षत्रदेवतायै नमः । एवं शतभिषङ्नक्षत्रपर्यन्तं वर्णद्वन्द्वपूर्वकं न्यस्त्वा, तदुत्तरनक्षत्रत्रयमपि अवशिष्टैकैकवर्णपूर्वकं न्यसेत् । आदौ बीजत्रयं सर्वत्र योज्यम् ॥

फालाक्षिकर्णनासानां युगले गण्डयुग्मके ।
भुजे च मणिबन्धोरोजाद्वये नाभिमण्डले ॥

कट्यूरुजानुजंघानां युगले चरणद्वये ।
ज्वलत्कालाग्निसंकाशा वरदाभयपाणयः ॥

नतिपाण्योश्विनीमुख्या ध्येया मुक्ताविभूषणाः ।

इति नक्षत्रन्यासः ॥

अथ योगिनीन्यासः — तत्रादौ सर्वासां योगिनीनां ध्यानम् ॥

सितासितारुणाबभ्रुचित्रापीताश्च चिन्तयेत् ।
चतुर्भुजास्समैर्वक्त्रैः सर्वाभरणभूषिताः ॥

विशुद्धिचक्रे कण्ठे षोडशदलकमलकर्णिकायां न्यसेत् ॥

तत्प्रकारः — ऐं ह्रीं श्रीं डां डीं डूं डं लवरयूं डाकिनि मां रक्ष रक्ष मम त्वक्धातुं रक्ष रक्ष सर्वसत्ववशंकरि आगच्छागच्छ इमां पूजां गृह्ण गृह्ण ऐं अघोरे ह्रीं सः परमघोरे हुं घोररूपे एह्येहि नमश्चामुण्डे डरलकसहैं श्रीमहात्रिपुरसुन्दरि देवि विच्चे देवि अं आं इं ईं इत्यादिषोडशस्वरमुचार्य विशुद्धिषोडशदलपीठस्थे विशुद्धिडाकिनि विशुद्धिनाथदेवि युग्मश्रीपादुकेभ्यो नमः। इति कर्णिकायां विन्यसेत्। तद्दलेषु अमृताद्याः प्रविन्यसेत्। अमृतायै नमः। आकर्षिण्यै नमः। इन्द्राण्यै० ईशान्यै० उमायै० ऊर्ध्वकेशिन्यै० ऋद्धिदायै० ऋषायै० लतायै० लृषायै० एकपादायै० ऐश्वर्यात्मिकायै० ओंकार्यै० औषधात्मिकायै० अंबिकायै० अःक्षरायै नम इति प्रादक्षिण्येन विन्यस्य, सर्वाः श्वेता रतियुताः साक्षस्रक्पुस्तकैर्युताः षोडशदलस्था एता ध्यातव्याः। कर्णिकायां डाकिनीं ध्यायेत् ॥

ग्रीवाकूपे विशुद्धौ स्वरदलकमले रक्तवर्णां त्रिणेत्रां
श्रीखट्वाङ्गं कपालं त्रिशिखमपि महाचर्म सन्धारयन्तीम् ।
वक्त्रेणैकेन युक्तां पशुजनभयदां पायसान्ने प्रसक्तां
त्वक्स्थां वन्देऽमृताद्यैः परिवृतवपुषं डाकिनीं भावयेत्ताम् ॥

अथामृतादिशक्तीनां डाकिनीसदृशं वपुः ।
तत्समान्यायुधादीनि न्यासपूजनचिन्तने ॥

ततः आवाहनचक्रे हृदये द्वादशदलकमलकर्णिकायां ऐं ह्रीं श्रीं रां रीं

रूं र म ल व र यूं राकिनि मां रक्ष रक्ष मम रक्तधातुं रक्ष रक्ष सर्वसत्व-वशंकरि आगच्छागच्छ इमां पूजां गृह्ण गृह्ण ऐं अघोरे ह्रीं सः परमघोरे हुं घोररूपे एह्येहि नमश्चामुण्डे ड र ल क स हैं श्रीमहात्रिपुरसुन्दरि देवि विच्चे देवि ककारादिद्वादशवर्णानुच्चार्य अनाहतपीठस्थिते अनाहतराकिनि अनाहतनाथदेवियुग्मश्रीपादुकेभ्यो नमः । इति हृत्पद्मे द्वादशदळकमल-कर्णिकामध्ये विन्यस्य, द्वादशदळेषु काळरात्र्यादिकाः प्रादक्षिण्येन विन्यसेत् । कालरात्र्यै नमः । सावित्र्यै नमः । गायत्र्यै नमः । घण्टाधारिण्यै नमः । ङार्णात्मिकायै नमः । चण्डायै नमः । छायायै नमः । [1]जायायै नमः । झौंकार्यै नमः । ज्ञानरूपायै नमः । टंकहस्तायै नमः । ठंकारिण्यै नमः । इति ॥

अरुणाः काळरात्र्याद्याः सर्वा नतिसमन्विताः ।
[2]कवर्णसंयुता न्यस्य ध्यायेत्तां राकिनीं पराम् ॥

हृत्पद्मे भानुपत्रे द्विवदनविलसद्दंष्ट्रिणीं श्यामवर्णां
अक्षं शूलं कपालं डमरुमपि भुजैर्धारयन्तीं त्रिणेत्राम् ।
रक्तस्थां कालरात्रिप्रभृतिपरिवृतां स्निग्धभक्ताभिसक्तां
श्रीमद्वीरेन्द्रवन्द्यामभिमतफलदां राकिनीं भावयेत्ताम् ॥

कालरात्र्यादिका रक्ताश्चतुर्हस्ता नमस्क्रियाम् ।
द्वाभ्यां कराभ्यां दधति द्वाभ्यां हेतिद्वयं क्रमात् ॥

कपालं श्रीवराभीतिपुस्तकाक्षरमालिकाः ।
घण्टाखड्गौ सृणिश्चैव खड्गखेटौ वराभये ॥

कुठारहरिणौ पश्चात् त्रिशूलडमरू अपि ।
कदळीकलशे शूले वेताळौ वरदाभये ॥

---

१ जयायै इति ख, ङ मातृकयोः पाठः ।
२ कठवर्णयुता इति ख, ग, घ, ङ पाठः ।

ततः मणिपूरपीठे नाभौ दशदळकमलकर्णिकायां लाकिनीं न्यसेत्। ऐं ह्रीम् श्रीम् लां लीं लूं लमलवरयूं लाकिनि मां रक्ष रक्ष मम मांसधातुं रक्ष रक्ष सर्वसत्ववशंकरि आगच्छागच्छ इमां पूजां गृह्ण गृह्ण ऐं अघोरे ह्रीम् सः परमघोरे हु घोररूपे एह्येहि नमः चामुण्डे डरलकसहैं श्रीमहात्रिपुरसुन्दरि देवि विच्चे देवि, डकारादिदशवर्णानुच्चार्य मणिपूरकपीठस्थे मणिपूरकलाकिनि मणिपूरकनाथदेवि युग्मश्रीपादुकेभ्यो नमः। इति मन्त्रेण मध्ये न्यसेत्॥

डामर्यै नमः। ढंकार्यै नमः। णामर्यै नमः। तामस्यै नमः। स्थाण्व्यै० दाक्षायिण्यै० धात्र्यै० नारायण्यै० पार्वत्यै० फट्कार्यै० एतास्तु दशदळेषु प्रागादिप्रादक्षिण्यक्रमेण न्यसेत्। एताः कपालशूलनतिमुद्राकरा ध्येयाः॥ लाकिनीध्यानम् —

नाभौ दिक्पत्रपद्मे त्रिवदनविलसत्त्रीक्षणां रक्तवर्णां
शक्तिं दम्भोळिदण्डावभयमपि भुजैर्धारयन्तीं महोग्राम्।
डामर्याद्यैः परीतां पशुजनभयदां मांसधात्वेकनिष्ठां
गौडान्ने सक्तचित्तां सकलशुभकरीं संस्मरेल्लाकिनीं ताम्॥

लाकिन्यग्रस्थिता यास्तु दशसंख्या मरीचयः।
कपालशूलधारिण्यः कृष्णाश्च नतिसंयुताः॥

किरीटहारकेयूरकाञ्चीनूपुरभूषणाः।

स्वाधिष्ठाने लिंगे षट्दळकमलकर्णिकायां काकिनीं न्यसेत्। ऐं ह्रीम् श्रीम् कां कीं कूं क म ल व र यूं काकिनि मां रक्ष रक्ष मम मेदोधातुं रक्ष रक्ष सर्वसत्ववशंकरि आगच्छागच्छ इमां पूजां गृह्ण गृह्ण ऐं अघोरे ह्रीम् सः परमघोरे हुं घोररूपे एह्येहि नमश्चामुण्डे ड र ल क स हैं श्रीमहात्रिपुरसुन्दरि देवि विच्चे देवि, बादिषड्वर्णानुच्चार्य स्वाधिष्ठानाख्यपीठस्थे

स्वाधिष्ठान काकिनि स्वाधिष्ठाननाथदेवि युग्मश्रीपादुकेभ्यो नमः । अनेन कर्णिकायां न्यसेत् । बन्धिन्यै नमः । भद्रकाल्यै नमः । महामायायै नमः । यशस्विन्यै नमः । रमायै नमः । लम्बोष्ठिकायै नमः । इति षट्पत्रेषु क्रमेण न्यस्तव्याः ॥

बन्धिन्याद्यास्तु पीताभा वराभी नत(भयद)पाणयः ।

अथ ध्यानम् —

स्वाधिष्ठानाख्यपद्मे रसदळलसिते वेदवक्त्रां त्रिणेत्रां
पीताभां धारयन्तीं विशिखगुणकपालाभयान्यात्तगर्वाम् ।
मेदोधातुप्रविष्टां मधुमदमुदितां बन्धिनीपूर्वशक्त्या-
वीतां दध्यन्नसक्तामभिमतफलदां काकिनीं भावयेत्ताम् ॥

मूलाधारपद्मे गुदात्तु द्व्यङ्गुलोपरि चतुर्दळकमलकर्णिकायां साकिनीं न्यसेत् ॥ ऐं ह्रीम् श्रीम् सां सीम् सूं समळवरयूं साकिनि मां रक्ष रक्ष मम अस्थिधातुं रक्ष रक्ष सर्वसत्ववशंकरि आगच्छागच्छ इमां पूजां गृह्ण गृह्ण ऐं अघोरे ह्रीम् सः परमघोरे हुं घोररूपे एह्येहि नमश्चामुण्डे डरलकसहैं श्रीमहात्रिपुरसुन्दरि देवि विच्चे देवि वकारादिचतुष्कमुचार्य मूलाधारपीठस्थे मूलाधारसाकिनि मूलाधारनाथदेवि युग्मश्रीपादुकेभ्यो नमः । इति न्यस्त्वा, तद्दळेषु वरदाद्या विन्यसेत् ॥ वरदायै नमः । श्रियै० षण्डायै० सरस्वत्यै० इति क्रमेण न्यसेत् ॥

(ध्यानम्)—

मूलाधारस्थपद्मे श्रुतिदळलसिते पञ्चवक्त्रां त्रिणेत्रां
स्वर्णाभामस्थिसंस्थां सृणिमपि कमलं पुस्तकं ज्ञानमुद्राम् ।
बिभ्राणां बाहुदण्डैः सुललितवरदाद्याभियुक्तां मनोज्ञां
मुद्गान्ने सक्तचित्तां मधुमदमुदितां भावयेत्साकिनीं ताम् ॥

रक्ता पीता सिता श्वेताश्चतस्रो वरदादयः ।
नत्यक्षमालाकलशविराजितचतुर्भुजाः ॥

तत आज्ञायां भ्रूमध्ये द्विदळकमलकर्णिकायां हाकिनीं विन्यसेत् । ऐं ह्रीं श्रीं हां हीं हूं हमलवरयूं हाकिनि मां रक्ष रक्ष मम मज्जाधातुं रक्ष रक्ष सर्वसत्ववशंकरि आगच्छागच्छ इमां पूजां गृह्ण गृह्ण ऐं अघोरे ह्रीं सः परमघोरे हुं घोररूपे एह्येहि नमश्चामुण्डे डरलकसहैं श्रीमहात्रिपुरसुन्दरि देवि विच्चे देवि हं क्षं आज्ञापीठस्थे आज्ञापीठहाकिनि आज्ञानाथदेवि युग्मश्रीपादुकेभ्यो नमः । इति कर्णिकामध्ये विन्यस्य तद्दळयोः हं हंसवत्यै नमः । क्षं क्षमायै नमः । इति न्यसेत् ॥ ध्यानम् —

भ्रूमध्ये बिन्दुपद्मे द्विदळविलसिते शुक्लवर्णा कराब्जैः
बिभ्राणां ज्ञानमुद्राडमरुककमलान्यक्षमालां कपालम् ।
षड्वक्त्रां मज्जसंस्थां त्रिनयनलसितां हंसवत्यादियुक्तां
हारिद्रान्ने प्रसक्तां सकलसुरनुतां हाकिनीं भावयेत्ताम् ॥

श्वेता हंसवती कार्धत्रिशूलवरधारिणी ।
रक्ताक्षमालावरदनतिमुद्रालसत्करा ॥

ततः सहस्रदळकमलकर्णिकायां योनिमण्डले याकिनीं न्यसेत् । ऐं ह्रीम् श्रीं यां यीं यूं य म ल व यूं याकिनि मां रक्ष रक्ष मम शुक्लधातुं रक्ष रक्ष मम सर्वसत्ववशंकरि देव्यागच्छागच्छ इमां पूजां गृह्ण गृह्ण ऐं अघोरे ह्रीम् सः परमघोरे हुं घोररूपे एह्येहि नमश्चामुण्डे डरलकसहैं श्रीमहात्रिपुरसुन्दरि देवि विच्चे देवि अकारादिक्षकारान्तवर्णानुक्त्वा ब्रह्मरन्ध्रपीठस्थे ब्रह्मरन्ध्रयाकिनी ब्रह्मरन्ध्रनाथदेवि युग्मश्रीपादुकेभ्यो नम इति कर्णिकायां न्यस्य, तद्दळेषु पूर्वोक्तषडाधारपद्मदळस्थाः पञ्चाशद्वर्णदेवतास्तत्तन्मातृकावर्णसहिता न्यसित्वा ध्यायेत् । तत्र पूर्वोक्तषडाधारपद्मपत्रेष्वपि तत्तन्मातृकावर्णपूर्विकाः तत्तद्देवताः न्यस्तव्याः । मन्त्रादौ बीजत्रयं सर्वत्र योज्यम् ॥

मुण्डव्योमस्थपद्मे सकलदलयुते याकिनीं भैरवीं तां
यक्षिण्याख्यां समस्तायुधलसितकरां सर्ववर्णां समष्टिम् ।
डादीनां सर्ववक्त्रां सकलसुखकरीं सर्वधातुस्वरूपां
सर्वाङ्गे सक्तचित्तां सकलसुरनुतां भावयेत्सर्वरूपाम् ॥

इति योगिनीन्यासः ॥

अथ राशिन्यासः — ऐं ह्रीं श्रीं अं आं इं ईं मेषराश्यात्मदेवतायै नमः । उं ऊं ऋं वृषभराश्यात्मदेवतायै नमः । ॠं लृं ॡं मिथुनराश्यात्मदेवतायै नमः । एं ऐं कर्कटराश्यात्मकदेवतायै नमः । ओं औं सिंहराश्यात्मक० अं अः शं षं सं हं ळं क्षं कन्याराश्यात्म० कं खं गं घं ङं तुलाराश्यात्म० चं छं जं झं ञं वृश्चिकराश्यात्म० टं ठं डं ढं णं धनूराश्यात्म० तं थं दं धं नं मकरराश्यात्म० पं फं बं भं मं कुम्भराश्यात्म० यं रं लं वं मीनराश्यात्मदेवतायै नमः । तारत्रयं मन्त्रादौ सर्वत्र योज्यम् । गुल्फजानुवृषणस्तनांसशिरस्सु न्यसेदिति दक्षिणपार्श्वे न्यसेत् । वामपार्श्वेऽपि शिरआदिगुल्फान्तं न्यसेत् । शिरोंसस्तनवृषणजानुगुल्फेषु न्यसेत् । एवं चतुस्त्रित्रिद्वियुगान्त्यद्विस्वरयुतशादिषट्क क च ट त प वर्गयादिवान्तवर्णपूर्वका एते राशयः ॥

अथ पीठन्यासः — ऐं ह्रीम् श्रीम् एकपञ्चाशत्पीठशक्तिभ्यो नमः । इति देहे व्याप्य ऐं ह्रीं श्रीं अं कामरूपपीठाय नमः । ३ आं वाराणसीपीठाय नमः । ३ इं नेपाळपीठाय० ३ ईं पौण्ड्रवर्धनपीठाय० ३ उं चरस्थिरपीठा० ३ ऊं कन्याकुब्जपीठा० ३ ऋं पूर्णशैलपीठा० ३ ॠं अर्बुदपीठा० ३ लृं अमृतकेश्वरिपीठा० ३ ॡं एकाम्रपीठा० ३ एं कामकोट्टपीठा० ३ ऐं [1]त्रिस्रोतपीठा० ३ ॐ कैलासपीठा० ३ औं भृगुनगरपीठा० ३ अं केदारपीठा० ३ अः चन्द्रपूर्वकपीठा० ३ कं श्रीपीठपीठा० ३ खं एकवीरपीठा० ३ गं जलन्धरपीठा० ३ घं माळवपीठा० ३ ङं कुळूकपीठा० ३ चं देवकोट्टपीठा० ३ छं गोकर्णपीठा०

१ तिस्रोतपीठा० इति ग, घ पाठः

३ जं मारुतेश्वरपीठा० ३ झं अट्टहासपीठा० ३ ञं वीरजनिपीठा० ३ टं राजगृहपीठा० ३ ठं महापथपीठा ३ डं कोळापुरीपीठा० ३ ढं अलकापुरीपीठा० ३ णं ॐकारपीठा ३ तं जयन्तीपीठा ३ थं उज्जयिनीपीठा० ३ दं त्रिरात्रपीठा ३ धं क्षीरकपीठा० ३ नं हस्तिनापुरपीठा ३ पं उड्डीशपीठा० ३ फं प्रयागपीठा० ३ बं षष्ठीशपीठा ३ भं मायापुरीपीठा० ३ मं गौरेशपीठा० ३ यं मलयगिरिपीठा० ३ रं श्रीशैलपीठा० ३ लं मेरुपीठा० ३ वं गिरिवरपीठा० ३ शं महेन्द्रपीठा० ३ षं वामनगिरिपीठा० ३ सं हिरण्यपुरपीठा ३ हं लक्ष्मीपुरपीठा० ३ ळं वरोड्याणपीठा० ३ क्षं छायाछत्रपीठाय नमः । तारत्रयं मन्त्रादौ सर्वत्र योज्यम् । इति पीठन्यासं मातृकास्थानेषु न्यसेत् ॥

इति लघुषोढान्यासः समाप्तः ॥

अथ श्रीविद्यापञ्चदशाक्षरी चक्रन्यासविधिः शिङ्गिभूपालपद्धत्युक्तप्रकारेण लिख्यते—

अथ चक्रन्यासस्थाने[1] श्लोकः ॥

बैन्दवं ब्रह्मरन्ध्रे च तत्संवृत्य त्रियश्रकम् ।
ललाटे द्वारसंज्ञं च भ्रुवोर्मध्ये दशारकम् ।
बहिर्दशारं कण्ठे तु हृदये मनुपत्रकम् ॥

नाभौ त्वष्टदळं चक्रं स्वाधिष्ठाने कलाश्रकम् ।
आधारे चतुरश्रं स्यात् द्वितीयं दक्षजङ्घके ॥

तृतीयं वामजङ्घायां सृष्टिन्यासे त्वयं क्रमः ।

इति चक्रन्यासस्थानानि । अथोक्तस्थानेषु न्यासप्रकारः— ऐं ह्रीं श्रीं

---

१ स्थानश्लोकः इति ख ङ पाठः ।

बैन्दवचक्राय नमः । इति ब्रह्मरन्ध्रे व्यापकं कृत्वा, ऐं ह्रीं श्रीं कएईलह्रीं हसकहलह्रीं सकलह्रीं एवं खण्डत्रयमुक्त्वा तदन्ते तुर्यखण्डाख्यं श्रींबीजमुक्त्वा तदन्ते परब्रह्मचक्रे ओड्याणपीठे चर्यानाथ समस्तचक्र सपरिवार परमतत्व सृष्टिस्थिति संहारकृत्येच्छाज्ञान क्रियाशक्तिवाग्भवकामराज शक्तिबीजात्मकपरम शक्तिस्वरूप-श्रीमहात्रिपुरसुन्दरि देवि परब्रह्मात्मशक्ति श्रीपादुकां पूजयामीति, सकुंकुम-विलेपनामिति पूर्वोक्तध्यानक्रमेण ब्रह्मरन्ध्रे ध्यात्वा ब्रह्मरन्ध्रे न्यसेत्। पुनः ऐं ह्रीं श्रीं ह्स्क्ल्ह्रैं ह्स्क्ल्ह्रीं ह्स्क्ल्ह्रौं श्रीमहात्रिपुरभैरवि नित्याश्रीपादुकां पूजयामि इति चक्रेश्वरीमात्मरूपां तत्र विन्यस्य, पुनः ऐं ह्रीं श्रीं ऐं योनिमुद्रायै नमः इति योनिमुद्रां प्रदर्श्य ऐं ह्रीं श्रीं एषा परापररहस्य योगिनी सर्वानन्दमये महाचक्रे बैन्दवे परब्रह्मस्वरूपिणी *परामृतशक्तिस्वरूपिणी सर्वचक्रेश्वरी सर्वमन्त्रेश्वरी सर्वविद्येश्वरी सर्ववीरेश्वरी सर्ववागीश्वरी सर्वयोगेश्वरी सर्वपीठेश्वरी सर्वसिद्धेश्वरी सर्वतत्वेश्वरी सर्वकामेश्वरी सर्वरक्षेश्वरी सर्वजगदुत्पत्ति-मातृकासर्वचैतन्यशक्तिः सचक्रास्सासनास्समुद्रास्ससिद्धयः सशक्तयः सायुधा-स्सवाहनास्सपरिवाराः सचक्रेश्वरीकाः श्रीमहात्रिपुरसुन्दरिन्यस्तास्सन्तु नमः। इति ब्रह्मरन्ध्रे वन्देत ॥

पुनस्त्रिकोणे ऐं ह्रीं श्रीं त्रिकोणचक्राय नमः। इति व्यापकं कृत्वा, ऐं ह्रीं श्रीं क ए ई ल ह्रीं अग्निचक्रे कामगिर्यालये मित्री(त्रे)शनाथनवयोनि चक्रात्म-तत्वसृष्टिकृत्येच्छाशक्तिवाग्भवात्मकवागीश्वरीस्वरूपकामेश्वरी देवि ब्रह्मात्मशक्ति-श्रीपादुकां पूजयामि इति कामेश्वरीमरुणां पाशांकुशाभयकपालवराङ्कितचतुर्हस्तां चन्द्रकलावतंसां त्रिणेत्रां ब्रह्माङ्कस्थां ध्यात्वा, शिरसि कोणप्रागग्रकोणे न्यसेत् ॥

अथ ऐं ह्रीं श्रीं ह स क ह ल ह्रीं सूर्यचक्रे जालंध्रपीठे ओड्डीशनाथ-दशारद्वय चतुर्दशार चक्रविद्यातत्व स्थितिकृत्य ज्ञानशक्ति कामराजात्मक कामकला-

---

*परामृतशक्तिस्वरूपिणि इत्यादि सर्वरक्षेश्वरि इत्यन्तं ख--ङ मातृकासु सर्वाणि पदानि संबुद्ध्यन्तानि भवन्ति ।

स्वरूपवज्रेश्वरीदेवि विष्ण्वात्मशक्ति श्रीपादुकां पूजयामि इति वज्रेश्वरीं प्रवालरुचि करषट्कावलम्बितपाशांकुशचापबाणकृपाणमातुलिङ्गां विष्ण्वङ्कवासिनीं ध्यात्वा शिरसि त्रिकोणदक्षिणकोणे न्यसेत् ॥

पुनः ऐं ह्रीं श्रीं स क ल ह्रीं सोमचक्रे पूर्णगिरिगह्वरे षष्ठीशनाथाष्टार-षोडशारचतुरश्रचक्रशिवतत्व संहारकृत्य क्रियाशक्तिबीजात्मक परापरशक्तिस्वरूप-भगमालिनीदेवि रुद्रात्मशक्तिश्रीपादुकां पूजयामि इति भगमालिनीं शरच्चन्द्र-चन्द्रिकावदातां पाशांकुशपुस्तकाक्षवलय विलसित बाहुचतुष्टयां त्रिलोचनां रुद्रो-त्सङ्गगतां ध्यात्वा शिरसि त्रिकोणवामकोणे न्यसेत् ॥

पुनः ऐं ह्रीं श्रीं ह्स्रैं ह्स्रृ (स्र्) क्लीं ह्स्रौः त्रिपुराम्बानित्याश्रीपादुकां पूजयामि इति चक्रेश्वरीं त्रिकोणमध्ये विन्यस्य, ऐं ह्रीं श्रीं ह्स्रौः बीजमुद्रायै नमः इति बीजमुद्रां प्रदर्श्य ऐं ह्रीं श्रीं एता रहस्यतरयोगिन्यः सर्वसिद्धि-प्रदायके चक्रे समुद्रास्ससिद्धयः सायुधाः सवाहनास्सपरिवारास्सचक्रेश्वरिका न्यस्तास्सन्तु नमः इति तत्र संबन्ध्य, पुनः आयुधन्यासमाचरेत् ॥

ऐं ह्रीं श्रीं द्रां द्रीं क्लीं ब्लूं सः यां रां लां वां सां जं जम्भनेभ्यः कामेश्वर-बाणेभ्यो नमः इति दक्षिणनेत्रे न्यसेत । दक्षिणभागस्य पुरुषप्रधानत्वात् । पुनः ऐं ह्रीं श्रीं द्रां द्रीं क्लीं ब्लूं सः यां रां लां वां सां जं जम्भनेभ्यः कामेश्वरी-बाणेभ्यो नमः इति वामनेत्रे न्यसेत् । वामभागस्य शक्तिप्रधानत्वात् । पुनः ऐं ह्रीं श्रीं थं संमोहनाय कामेश्वरधनुषे नमः इति दक्षिणभ्रूरेखायां न्यसेत् । दक्षिणभागस्य ईश्वरप्रधानत्वात् । पुनः ऐं ह्रीं श्रीं यं संमोहनाय कामेश्वरीधनुषे नमः । इति वामभ्रूरेखायां न्यसेत् । पुनः ऐं ह्रीं श्रीं आं वशीकरणाय कामेश्वरपाशाय नमः । इति दक्षिणश्रवसि न्यसेत् । पुनः ऐं ह्रीं श्रीं आं वशीकरणाय कामेश्वरीपाशाय नमः । इति वामश्रवणे न्यसेत् । (पुनः) ऐं ह्रीं श्रीं क्रों स्तम्भनाय कामेश्वरांकुशाय नमः । इति दक्षिण-नासापुटे न्यसेत् । पुनः ऐं ह्रीं श्रीं क्रों स्तम्भनाय कामेश्वर्यङ्कुशाय नमः इति वामनासापुटे न्यसेत ॥

एवमायुधन्यासं कृत्वा, पुनः ऐं ह्रीं श्रीं अष्टारचक्राय नमः इति ललाटमारभ्य वेष्टनप्रकारेण व्यापकं न्यसेत् ॥ पुनः ऐं ह्रीं श्रीं अंआं इत्यादि षोडशस्वरानुक्त्वा ब्लूं वशिनि वाग्देवतादेवि श्रीपादुकां पूजयामि। ३ कं खं गं घं ङं कळह्रीं कामेश्वरि ३ चं छं जं झं ञं न्व्लूं मोदिनि वाग्देवता देवि ३ टं ठं डं ढं णं य्लूं विमलावाग्देवतादेवि इति ललाटमारभ्य प्रादक्षिण्येन दिक्षु न्यसेत् ॥ पुनः ऐं ह्रीं श्रीं तं थं दं धं नं ज्म्रीं अरुणावाग्देवतादेवि ३ पं फं बं भं मं ह्स्ल्व्यूं जयिनि वाग्देवतादेवि ३ यं रं लं वं शं झ्म्र्यूं सर्वेश्वरि वाग्देवतादेवि ३ षं सं हं ळं क्षं क्ष्म्रीं दिव्याकौलिनी वाग्देवतादेवि श्रीपादुकां पूजयामि। एतान् ललाटवलये आग्नेयादिकोणेषु न्यसेत् ॥ एता अष्टवाग्देवताः, चापेषुपुस्तकाक्षमालासमुल्लसितहस्तचतुष्टया दाडिमकुसुमारुणा ध्येयाः ॥

ऐं ह्रीं श्रीं ह्रीं श्रीं सौः त्रिपुरासिद्धानित्याम्बा श्रीपादुकां पूजयामि। इति चक्रेशीमष्टारचक्रमध्ये न्यसेत्। ऐं ह्रीं श्रीं ह्स्ख्फ्रें खेचरीमुद्रायै नमः इति खेचरीमुद्रां, तत्र प्रदर्श्य ३ एता रहस्ययोगिन्यः सर्वरोगहरे चक्रे समुद्रा इत्यादिन्यस्तास्सन्तु नमः इत्यन्तमुक्त्वा अष्टारचक्रस्थां देवीं संवन्देत ॥

पुनः ऐं ह्रीं श्रीं अन्तर्दशारचक्राय नमः। इति भ्रूमध्यमारभ्य वेष्टनाकारेण व्यापकं कुर्यात्। ऐं ह्रीं श्रीं यं सर्वज्ञादेवी श्रीपादुकां पूजयामि। ऐं ह्रीं श्रीं रं सर्वशक्तिदेवि० ३ लं सर्वैश्वर्यप्रदादेवि० ३ वं सर्वज्ञानमयीदेवि० ३ शं सर्वव्याधिविनाशिनिदेवि० ३ षं सर्वाधारस्वरूपिणीदेवि० ३ सं सर्वपापहरादेवि० ३ हं सर्वानन्दमयीदेवि० ३ ळं सर्वरक्षास्वरूपिणीदेवि० ३ क्षं सर्वेप्सितफल-प्रदादेवि श्रीपादुकां पूजयामि इति दक्षिणाक्षिमूले तदपाङ्गे दक्षिणश्रवणमूले तत्पृष्ठे तत्पृष्ठचूलिकान्तराळे चूलिकायां वामकर्णपृष्ठे तन्मूले वामापाङ्गे वामाक्षिमूले चैताः क्रमेण न्यसेत्। चूलिका नाम शिखास्थानम्। एताः अक्षस्रक्पुस्तकधराः कर्पूरगौराङ्गीः ध्यात्वा विन्यसेत् ॥

ऐं ह्रीं श्रीं ह्रीं क्लीं प्लें त्रिपुरामालिनि नित्यादेवि श्रीपादुकां पूजयामि इति चक्रेशीं मध्ये न्यसेत् । ऐं ह्रीं श्रीं क्रों महांकुशमुद्रायै नमः इत्यंकुश-मुद्रां प्रदर्श्य, ३ एता निगर्भयोगिन्यः सर्वरक्षाकरे चक्रे समुद्रा इत्यादि न्यस्ताः सन्तु नमः इति तत्र संबन्ध्य, बीजत्रयं सर्वत्र योज्यम् ॥

पुनः ऐं ह्रीं श्रीं बहिर्दशारचक्राय नमः । इति कण्ठे प्रादक्षिण्यक्रमेण व्यापकं कुर्यात् । ऐं ह्रीं श्रीं कं सर्वसिद्धिप्रदादेवि श्रीपादुकां पूजयामि । ३ खं सर्वसंपत्प्रदादेवि० ३ गं सर्वप्रियङ्करीदेवि० ३ घं सर्वमङ्गळकारिणी-देवि० ३ ङं सर्वकामप्रदादेवि० ३ चं सर्वदुःखविमोचनीदेवि० ३ छं सर्व-मृत्युप्रशमनीदेवि० ३ जं सर्वविघ्नविनाशनीदेवि० ३ झं सर्वाङ्गसुन्दरीदेवि० ३ ञं सर्वसौभाग्यदायिनीदेवि श्रीपादुकां पूजयामि । एता मुक्ताहारधारिण्यः हिमरुचिभासुरदेहा वराभयकराः सञ्चिन्त्य कण्ठे प्रादक्षिण्येन विन्यसेत् ।

ऐं ह्रीं श्रीं ह्सैं ह्स् क्लीं ह्सौः त्रिपुराश्रीपादुकां पूजयामि । इति मध्ये विन्यस्य ऐं ह्रीं श्रीं सः सर्वोन्मादिनीमुद्रायै नमः । इति मुद्रां प्रदर्श्य ऐं ह्रीं श्रीं एताः कुलोत्तीर्णयोगिन्यः सर्वार्थसाधके चक्रे समुद्रा इत्यादि न्यस्ताः सन्तु नमः इत्यन्तमुक्त्वा संबन्ध्यात् । बीजत्रयं सर्वत्र योज्यम् ॥

पुनः ऐं ह्रीं श्रीं चतुर्दशारचक्राय नमः । इति हृदये मनुपत्रके व्यापक-रूपेण प्रादक्षिण्येन न्यस्त्वा ऐं ह्रीं श्रीं अं टं सर्वसंक्षोभिणीशक्ति श्रीपादुकां पूजयामि ३ ठं सर्वविद्राविणीशक्ति० ३ डं सर्वाकर्षणीशक्ति० ३ ढं सर्वाह्लादन स्वरूपिणी शक्ति० ३ णं सर्वसंमोहिनीशक्ति० ३ तं सर्वस्तम्भनरूपिणीशक्ति० ३ थं सर्वजम्भिनीशक्ति० ३ दं सर्वतोवशीकरिणीशक्ति० ३ धं सर्वरञ्जनीशक्ति० ३ नं सर्वोन्मादस्वरूपिणीशक्ति० ३ पं सर्वार्थसाधनीशक्ति० ३ फं सर्वसंपत्ति-पूरणीशक्ति० ३ बं सर्वमन्त्रमयीशक्ति० ३ भं सर्वद्वन्द्वक्षयंकरीशक्ति श्रीपादुकां पूजयामि । इत्येता रक्ताः प्रवाळरुचिराः चापबाणधराः संचिन्त्य हृदये क्रमेण प्रादक्षिण्येन विन्यसेत् ॥

ऐं ह्रीं श्रीं हैं ह्क्लीं ह्सौः त्रिपुरावासिनीनित्या श्रीपादुकां पूजयामि इति चक्रेश्वरीं मध्ये न्यस्य ऐं ह्रीं श्रीं ब्लूं वश्यमुद्रायै नमः। इति वश्यमुद्रां प्रदर्श्य ऐं ह्रीं श्रीं एताः संप्रदाययोगिन्यः सर्वसौभाग्यदायके चक्रे समुद्रा इत्यादि न्यस्ताः सन्तु नमः। इति नमस्कुर्यात्। तारत्रयं सर्वत्र योज्यम् ॥

पुनः ऐं ह्रीं श्रीं अष्टदळपद्माय नमः। इति नाभौ प्रादक्षिण्येन व्यापकं कृत्वा ऐं ह्रीं श्रीं कं खं गं घं ङं अनङ्गकुसुमादेवि श्रीपादुकां पूजयामि। ३ चं छं जं झं ञं अनङ्गमेखलादेवि० ३ टं ठं डं ढं णं अनङ्ग-मदनादेवि० ३ तं थं दं धं नं अनङ्गमदनातुरादेवि० ३ एताः पृष्ठवंशवामपार्श्व-जठरदक्षिणपार्श्वेषु न्यस्य, ऐं ह्रीं श्रीं पं फं बं भं मं अनङ्गरेखादेवि० ३ यं रं लं वं अनङ्गवेगिनीदेवि० ३ शं षं सं हं अनङ्गांकुशादेवि० ३ ळं क्षं अनङ्गमालिनीदेवि श्रीपादुकां पूजयामि इति वंशवामपार्श्वयोः अन्तराळे च वामपार्श्वजठरयोरन्तराळे च जठरदक्षिणपार्श्वयोरन्तराळे च दक्षिणवामपार्श्वयो-रन्तराळे च अनङ्गरेखादिशक्तीः क्रमेण न्यसेत्। एताः रक्ताः पुण्ड्रेक्षुचाप-पुष्पबाणधरा वेणीकृतकेशमण्डला रक्तकञ्चुकधारिणीर्ध्यात्वा न्यसेत् ॥

ऐं ह्रीं श्रीं ह्रीं क्लीं सौः त्रिपुरासुन्दरिनित्याश्रीपादुकां पूजयामि इति चक्रेशीं मध्ये न्यसेत्। ऐं ह्रीं श्रीं कामाकर्षणमुद्रायै नमः इत्याकर्षणमुद्रां प्रदर्श्य, ऐं ह्रीं श्रीं एता गुप्ततरयोगिन्यः सर्वसंक्षोभणकारके चक्रे समुद्रा इत्यादि सन्तु नमः इति तत्र नमस्कुर्यात् ॥ तारत्रयं सर्वत्र योज्यम् ॥

ऐं ह्रीं श्रीं षोडशदळपद्माय नमः। इति लिङ्गे स्वाधिष्ठाननामके वामावर्त-क्रमेण व्याप्य ऐं ह्रीं श्रीं अं कामाकर्षिणि नित्याकलादेवि श्रीपादुकां पूजयामि। ३ आं बुद्ध्याकर्षिणि नित्याकलादेवि० ३ इं अहंकाराकर्षिणि नित्याकलादेवि० ३ ईं शब्दाकर्षिणि नित्याकलादेवि० ३ उं स्पर्शाकर्षिणि नित्याकलादेवि० ३ ऊं रूपाकर्षिणि नित्याकलादेवि० ३ ऋं रसाकर्षिणि नित्याकलादेवि० ३ ॠं

गन्धाकर्षणि नित्याकलादेवि० ३ लं चित्ताकर्षणि नित्याकलादेवि० ३ लं धैर्याकर्षणि नित्याकलादेवि० ३ एं स्मृत्याकर्षणि नित्याकलादेवि० ३ ऐं नामाकर्षणि नित्याकलादेवि० ३ ॐ बीजाकर्षणि नित्याकलादेवि० ३ औं आत्माकर्षणि नित्याकलादेवि० ३ अं अमृताकर्षणि नित्याकलादेवि ३ अः शरीराकर्षणि नित्याकलादेवि श्रीपादुकां पूजयामि । इति एता रक्तवर्णाः पाशांकुशधारिणीर्ध्यात्वा स्वाधिष्ठाने वामावर्तक्रमेण न्यसेत् । ऐं ह्रीं श्रीं ऐं क्लीं सौः त्रिपुरेश्वरीनित्या श्रीपादुकां पूजयामीति चक्रेशीं मध्ये विन्यस्य ऐं ह्रीं श्रीं द्रीं द्राविणीमुद्रायै नमः इति द्राविणीमुद्रां प्रदर्श्य एता गुप्तयोगिन्यः सर्वाशापरिपूरके चक्रे समुद्रा इत्यादि न्यस्तास्सन्तु नमः । इति नमः कुर्यात् । तारतम्यं सर्वत्र योज्यम् ॥

पुनः प्रथमचतुरश्रे ऐं ह्रीं श्रीं प्रथमचतुरश्ररेखायै नमः । इति मूलाधारे व्यापकतया विन्यस्य ऐं ह्रीं श्रीं द्रां सर्वसंक्षोभणीमुद्राशक्तिश्रीपादुकां पूजयामि ऐं ह्रीं श्रीं द्रीं सर्वविद्राविणीमुद्राशक्ति० ३ क्लीं सर्वाकर्षणिमुद्राशक्ति० ३ ब्लूं सर्ववशङ्करिमुद्राशक्तिश्रीपादुकां पूजयामि इति मूलाधारस्य पूर्वदक्षिणपश्चिमवामभागेषु क्रमेण न्यसेत् । ऐं ह्रीं श्रीं सः सर्वोन्मादिनिमुद्राशक्ति० ३ क्रों सर्वमहाङ्कुशमुद्राशक्ति० ३ ह्स्ख्फ्रें सर्वखेचरिमुद्राशक्ति० ३ ह्सौः सर्वबीजमुद्राशक्ति० ३ ऐं सर्वयोनिमुद्राशक्तिश्रीपादुकां पूजयामि । ३ ऐं सर्वत्रिखण्डमुद्राशक्तिश्रीपादुकां पूजयामि । इति एताः सर्वोन्मादिन्यादयः मूलाधारस्य पूर्वदक्षिणभागयोर्मध्ये दक्षिणपश्चिमभागयोर्मध्ये पश्चिमोत्तरभागयोर्मध्ये उत्तरपूर्वभागयोर्मध्ये च न्यसेत् । सर्वयोगिन्यादिमुद्राद्वयं च ललाटे मूलाधारमध्ये च न्यसेत् । एता रक्तवर्णाः पाशाङ्कुशवरदाभयकराश्चन्द्रकलावतंसमौलयस्त्रिलोचना ध्यात्वा न्यस्तव्याः ॥

पुनः ऐं ह्रीं श्रीं मध्यचतुरश्ररेखायै नमः इति दक्षिणजङ्घायां व्यापकं विन्यस्य, ऐं ह्रीं श्रीं आं ब्रह्माणीदेविश्रीपादुकां पूजयामि । ३ ई माहेश्वरी-

देवि० ३ ऊं कौमारीदेवि० ३ ॠं वैष्णवीदेवि० ३ ऌं वाराहीदेवि० ३ ऐं इन्द्राणीदेवि० ३ औं चामुण्डादेवि० ३ अः महालक्ष्मीदेवि० इत्येताः ब्रह्माण्यादयः दक्षिणजङ्घायां दिक्षु न्यस्तव्याः । वाराह्यादयो विदिक्षु न्यस्तव्याः । एता रक्ताः वंशदळश्यामळाङ्ग्यः कपालोत्पलधारिणीर्ध्यात्वा न्यस्तव्याः । तारत्रयं सर्वत्र योज्यम् ॥

पुनः ऐं ह्रीम् श्रीम् तृतीयचतुरश्ररेखायै नमः । इति वामजङ्घायां व्यापकं विन्यस्य ऐं ह्रीम् श्रीम् अणिमासिद्धिदेवि श्रीपादुकां पूजयामि । ३ लघिमासिद्धिदेवि० ३ महिमासिद्धिदेवि० ३ ईशित्वसिद्धिदेवि० ३ वशित्व-सिद्धिदेवि० ३ प्राकाम्यसिद्धिदेवि० ३ भुक्तिसिद्धिदेवि० इच्छासिद्धिदेवि० ३ प्राप्तिसिद्धिदेवि० ३ सर्वकामप्रदासिद्धिदेवि० इत्येता अणिमासिद्ध्यादयः वामजङ्घायां दिक्षु विदिक्षु च क्रमेण न्यस्तव्याः । प्राप्त्यादिसिद्धिद्वयं च दक्षिणवामपादयोश्च न्यसेत् । एता रक्तवर्णाः चिन्तामणिरत्नाभयाश्रितपाणिद्वयाः त्रिलोचनाः चन्द्रकलावतंसमौलयो ध्यात्वा न्यस्तव्याः । ऐं ह्रीं श्रीं अं आं सौः त्रिपुरानित्यादेविश्रीपादुकां पूजयामि इति चक्रेशीं पादयोर्विन्यस्य ऐं ह्रीं श्रीं द्रां सर्वसंक्षोभणमुद्रायै नमः इति संक्षोभिणीमुद्रां प्रदर्श्य ३ एताः समस्त-प्रकटयोगिन्यः त्रैलोक्यमोहनचक्रे समुद्रा इत्यादि न्यस्ताः सन्तु नमः इत्यन्तमुक्त्वा संबन्ध्यात् । ततः मूलमन्त्रमुक्त्वा सर्वाङ्गेषु व्यापकं कुर्यात् । ततः पञ्चोपचारैः संपूजयेत् ॥

इति चक्रन्यासः समाप्तः ॥

अथ महाषोढान्यासप्रकारः —

प्रपञ्चो भुवनं मूर्तिः मन्त्रो दैवतमातरः ।
महाषोढाह्वयो न्यासः सर्वन्यासोत्तमोत्तमः ॥

मन्त्रादौ भुवनेशानि प्रपञ्चन्यास उच्यते ।
त्रितारमूलमन्त्रान्ते मातृकाक्षरतः परम् ॥

वदेत्प्रपञ्चरूपायै श्रियै नम इति क्रमात् ।

तद्यथा— आदौ सच्चिदानन्दभैरवीदेविदेवऋषिः । चिन्मयं छन्दः । पराम्बा देवता । हसां हृदयम् । हसीं शिरः । इत्यादिषडङ्गानि कृत्वा ध्यायेत् । तत्प्रकारः—

अमृतार्णवमध्योद्यत्सुवर्णद्युतिशोभिते ।
कल्पवृक्षवनान्तस्थे नवमाणिक्यमण्डपे ॥

नवरत्नमयश्रीमत्सिह्मासनगताम्बुजे ।
त्रिकोणान्तसमासीनं चन्द्रसूर्यायुतप्रभम् ॥

अर्धाम्बिकासमायुक्तं प्रविभक्तविभूषणम् ।
कोटिकन्दर्पलावण्यं सदा षोडशवार्षिकम् ॥

मन्दस्मितमुखाम्भोजं त्रिणेत्रं चन्द्रशेखरम् ।
दिव्याम्बरस्रगालेपदिव्याभरणभूषितम् ॥

पानपात्रं च चिन्मुद्रां त्रिशूलं पुस्तकं करैः ।
विद्यासंविदि बिभ्राणं सदानन्दमुखेक्षणम् ॥

महाषोढोदिताशेषदेवतागणसेवितम् ।
एवं चित्ताम्बुजे ध्यायेदर्धनारीश्वरं शिवम् ॥

पुंरूपं वा स्मरेद्देवि स्त्रीरूपं वा विचिन्तयेत् ।
अथवा निष्कळं ध्यायेत् सच्चिदानन्दलक्षणम् ॥

सर्वतेजोमयं देवि सचराचरविग्रहम् ।
ततः सन्दर्शयेन्मुद्रादशकं परमेश्वरि ॥ इति ॥

मुद्रास्तु --

योनिं लिङ्गं च सुरभिं हेतिमुद्राचतुष्टयम् ।
वनमालां महामुद्रां नभोमुद्रामपि क्रमात् ॥

इति दश मुद्राः प्रदर्शयेत् । हेतिमुद्रेति आयुधमुद्राचतुष्टयम् ।

पुस्तकं ज्ञानशूलं च कपालं चेति च क्रमात् ।

तत्र महामुद्रा— हस्ततलद्वयमधोमुखेन प्रसार्य अंगुष्ठावन्योन्याग्रेण संस्पृशेत् । एषा महामुद्रा ॥ प्रसारितदक्षिणतर्जन्या शिरउपरि वृत्ताकारेण परिभ्रमणं नभोमुद्रा ॥ इतरा मुद्राः द्वात्रिंशत्पटलानन्तरं वक्ष्यामः ॥ पुनः,

यथाशक्ति जपेन्मूलमन्त्रं श्रीपादुकामपि ।

मूलमन्त्रस्तु ह्सौः इति । स्हौः इति पराप्रासादमन्त्रः ॥

मूर्ध्नि संचिन्तयेद्देवि श्रीगुरुं शिवरूपिणम् ।

सहस्रदळपङ्कजे सकलशीतरश्मिप्रभं
वराभयकराम्बुजं विमलगन्धपुष्पाम्बरम् ।
प्रसन्नवदनेक्षणं सकलदेवतारूपिणं
स्मरेत् शिरसि हंसकं तदभिधानपूर्वं गुरुम् ॥

अथ न्यासप्रकारः – आदौ त्रिपुरासुन्दरीषडङ्गं विधाय प्रपञ्चादीन्न्यसेत् । ऐं ह्रीं श्रीं इति त्रितारान्ते हकारसकारचतुर्दशस्वरबिन्दु विसर्गाणां कूटं ह्सौः इति प्रासादपरामन्त्रः । तदन्ते सकारहकारचतुर्दशस्वरविसर्जनीयबिन्दूनां कूटं

स्हौः इति पराप्रासादमन्त्रः। तदन्ते अं आदिन्नपञ्चरूपायै श्रियै नमः। इति। सर्वत्र बीजपञ्चकं मातृकाक्षरादौ योजयेत्। ५ आं द्विरूपायै महामायायै नमः। ५ इं जलधिरूपायै कमलायै नमः। ५ ईं गिरिरूपायै विष्णुवल्लभायै नमः। उं पट्टणरूपायै पद्मधारिण्यै नमः। ५ ऊं पीठरूपायै *इन्दिरायै नमः। ५ ऋं क्षेत्ररूपायै लोकमात्रे नमः। ५ ॠम् वनरूपायै कमलवासिन्यै नमः। ५ ऌं आश्रमरूपायै इन्दिरायै नमः। ५ ॡं गुहारूपायै मायायै नमः। ५ एं नदीरूपायै रमायै नमः। ५ ऐं चत्वररूपायै पद्मायै नमः। ५ ओं उद्भिदरूपायै नारायणप्रियायै नमः। ५ औं स्वेदजरूपायै सिद्धलक्ष्म्यै नमः। ५ अं अण्डजरूपायै राज्यलक्ष्म्यै नमः। ५ अः जरायुजरूपायै महालक्ष्म्यै नमः। ५ कं लवरूपायै आर्यायै नमः। ५ खं त्रुटिरूपायै उमायै ममः। ५ गं कलारूपायै चण्डिकायै नमः। ५ घं काष्ठारूपायै दुर्गायै नमः ५ ङं निमेषरूपायै शिवायै नमः। ५ चं श्वासरूपायै अपर्णायै नमः। ५ छं घटिकारूपायै अम्बिकायै नमः। ५ जं मुहूर्तरूपायै सत्यायै नमः। ५ झं प्रहाररूपायै ईश्वर्यै नमः। ५ ञं दिवसरूपायै शांभव्यै नमः। ५ टं सन्ध्यात्रयरूपायै ईशान्यै नमः। ५ ठं रात्रिरूपायै पार्वत्यै नमः। ५ डं तिथिरूपायै सर्वमङ्गलायै नमः। ५ ढं वाररूपायै दाक्षायिण्यै नमः। ५ णं नक्षत्ररूपायै हैमवत्यै नमः। ५ तं योगरूपायै महामायायै नमः। थं कर्णरूपायै महेश्वर्यै नमः। ५ दं पक्षरूपायै मृडान्यै नमः। ५ धं मासरूपायै रुद्राण्यै नमः। ५ नं राशिरूपायै शर्वाण्यै नमः। ५ पं ऋतुरूपायै परमेश्वर्यै नमः। ५ फं अयनरूपायै काळ्यै नमः। ५ बं संवत्सररूपायै कात्यायिन्यै नमः। ५ भं युगरूपायै गौर्यै नमः। ५ मं प्रळयरूपायै भवान्यै नमः। ५ यं पृथिव्यप्तेजोवाय्वाकाशाख्य पञ्चभूतरूपायै ब्रह्माण्यै नमः। ५ रं शब्दस्पर्शरूपरसगन्धाख्य पञ्चतन्मात्ररूपायै वागीश्वर्यै

---

* समुद्रतनयायै इति क पाठः। ऌं इन्दिरायै इति दर्शनात् युक्तोयं पाठो भाति।

नमः । ५ लं वाक्पाणिपादपायूपस्थाख्य पञ्चकर्मेन्द्रियरूपायै वाण्यै नमः । ५ वं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्य पञ्चज्ञानेन्द्रियरूपायै सावित्र्यै नमः । ५ शं प्राणापानव्यानोदानसमानाख्य पञ्चप्राणरूपायै सरस्वत्यै नमः । ५ षं सत्व-रजस्तमाख्य गुणत्रयरूपायै गायत्र्यै नमः । ५ सं मनोबुद्ध्यहंकारचित्ताख्यान्तः-करणरूपायै वाक्प्रदायै नमः । ५ हं जाग्रत्स्वप्नसुषुप्तितुर्याख्यावस्थाचतुष्टय-रूपायै शारदायै नमः । ५ ळं त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्राख्य सप्तधातुरूपायै भारत्यै नमः । ५ क्षं वातपित्तश्लेष्माख्य दोषत्रयात्मिकायै प्रपञ्चभूतव्याप-काधीश्वर्यै नमः । ५ अकारादिक्षकारान्तमुक्त्वा[1] सकलप्रपञ्चरूपायै पराम्बा-देव्यै नमः । इति व्यापकं कुर्यात् । इति प्रपञ्चन्यासं मातृकास्थानेषु न्यसेत् ॥

अथ भुवनन्यासः — ऐं ह्रीम् श्रीम् ह्सौः स्हौः अं आं इं अतललोक-निलयशतकोटिगुह्यकाद्ययोगिनीमूलदेवतायुताधारशक्त्यम्बादेव्यै नमः । ५ ईं उं ऊं वितललोकनिलयशतकोटिगुह्यतरानन्तयोगिनी मूलदेवताधारशक्त्यम्बादेव्यै नमः । ५ ऋं ॠं लृं सुतललोकनिलयशतकोटि गुह्याचिन्त्ययोगिनीमूलदेवतायुताधार-शक्त्यंबादेव्यै नमः । ५ॡं एं ऐं महातललोकनिलयशतकोटिमहागुह्यस्वतन्त्रयोगिनी मूलदेवतायुताधारशक्त्यम्बादेव्यै नमः । ५ओं औं तलातललोकनिलयशतकोटिपरम-गुह्येच्छायोगिनीमूलदेवतायुताधारशक्त्यम्बादेव्यै नमः । ५ अं अः रसातळलोक-निलयशतकोटिरहस्यज्ञानयोगिनीमूलदेवतायुताधारशक्त्यम्बादेव्यै नमः । ५ कं खं गं घं ङं पाताळलोकनिलयशतकोटिरहस्यतरक्रियायोगिनी मूलदेवतायुताधारशक्त्यंबा देव्यै नमः । ५ चं छं जं झं ञं भूलोकनिलयशतकोट्यतिरहस्य डाकिनीयोगिनी मूलदेवतायुताधारशक्त्यम्बादेव्यै नमः । ५ टं ठं डं ढं णं भुवर्लोकनिलयशतकोटि महारहस्य राकिनी योगिनी मूलदेवताधारशक्त्यम्बादेव्यै नमः । ५ तं थं दं धं नं स्वर्लोकनिलयशतकोटिपरमरहस्य लाकिनीयोगिनीमूलदेवताधारशक्त्यम्बा-देव्यै नमः । ५ पं फं बं भं मं महर्लोकनिलयशतकोटिगुप्तकाकिनीयोगिनीमूल-

---

१ उच्चार्य इति ख, ग, च मातृकापाठः ।

देवतायुताधारशक्त्यम्बादेव्यै नमः। ५ यं रं लं वं जनोलोकनिलयशतकोटिगुप्ततर श्रीडाकिनीयोगिनीमूलदेवतायुताधारशक्त्यम्बादेव्यै नमः। ५ शं षं सं हं तपोलोकनिलयशतकोट्यतिगुप्तहाकिनीयोगिनीमूलदेवतायुताधारशक्त्यम्बादेव्यै नमः। ५ ळं क्षं सत्यलोकनिलयशतकोटिमहागुप्त [1] यक्षिणीयोगिनीमूलदेवतायुताधारशक्त्यम्बादेव्यै नमः। ऐं ह्रीम् श्रीम् ह्सौः स्हौः सर्वमातृकामुक्ता चतुर्दशभुवनाधिपायै पराम्बादेव्यै नमः। इति व्यापकं कुर्यात्। बीजपञ्चकं सर्वत्र योज्यम्॥

पादयोः गुल्फयोर्जङ्घयोर्जान्वोरूर्वोः कटिद्वये [2]गुह्ये मूलाधारे स्वाधिष्ठाने मणिपूरके हृदये विशुद्धौ भ्रूमध्ये ब्रह्मरन्ध्रे इति क्रमेण न्यसेत्॥ एवं त्र्यग्नित्रिनेत्र [3] युगस्वरकचटतपयशळवर्गपूर्वकं भुवनन्यासं कृत्वा (कुर्यात्)॥

अथ मूर्तिन्यासः॥ तत्प्रकारः — ऐं ह्रीं श्रीं ह्सौः स्हौः अं केशवमूर्त्यक्षराशक्तिभ्यां नमः। ५ आं नारायणमूर्त्याद्याशक्तिभ्यां नमः। ५ इं माधवमूर्तीष्टदाशक्तिभ्यां नमः। ५ ईं गोविन्दमूर्तिईशानाशक्तिभ्यां नमः। ५ उं विष्णुमूर्त्युग्राशक्तिभ्यां०। ५ ऊं मधुसूदनमूर्त्यूर्ध्वनयनाशक्तिभ्यां०। ५ ऋं त्रिविक्रममूर्तिऋद्धिदाशक्तिभ्यां०। ५ ॠं वामनमूर्तिॠरूपिणीशक्तिभ्यां० ५ ऌं श्रीधरमूर्तिऌप्ताशक्तिभ्यां० ५ ॡं हृषीकेशमूर्तिॡनाशक्तिभ्यां० ५ एं पद्मनाभमूर्तिएकनाथाशक्तिभ्यां० ५ ऐं दामोदरमूर्तिऐकारिणीशक्तिभ्यां० ५ ओं संकर्षणमूर्ति ओघवतीशक्तिभ्यां० ५ औं वसुदेवमूर्त्यौर्ध्वकामाशक्तिभ्यां० ५ अं प्रद्युम्नमूर्त्यञ्जनाशक्तिभ्यां० ५ अः अनिरुद्धमूर्त्यक्षमालाधराशक्तिभ्यां० ५ कं भं भवमूर्तिकरभद्राशक्तिभ्यां० ५ खं बं शर्वमूर्ति-

---

१ याकिनीयोगिनी इति ङ पाठः।

२ गुह्ये मूलाधारे इति ख, ग, घ पाठः।

३ द्वियुगस्वर इति ख पाठः। द्वियुगमस्वर इति स्पष्टार्थः॥

खगवलाशक्तिभ्यां० ५ गं फं रुद्रमूर्तिगरिमादिफलप्रदाशक्तिभ्यां० ५ घं पं पशुपतिमूर्तिघण्टापराशक्तिभ्यां० ५ ङं नं उग्रमूर्तिज्ञानवतीशक्तिभ्यां० ५ चं धं महादेवमूर्तिचन्द्रधराशक्तिभ्यां० ५ छं दं भीममूर्तिछन्दोमयीशक्तिभ्यां० जं थं ईशानमूर्तिजगत्स्थापनाशक्तिभ्यां० ५ झं तं तत्पुरुषमूर्तिझणताराशक्तिभ्यां० ५ ञं णं अघोरमूर्तिज्ञानदाशक्तिभ्यां० ५ टं ढं सद्योजातमूर्तिटंकधराशक्तिभ्यां० ५ ठं डं वामदेवमूर्ति *टङ्कृतिडामरीशक्तिभ्यां० ५ यं ब्रह्ममूर्तियक्षिणीशक्तिभ्यां० ५ रं प्रजापतिमूर्तिरञ्जनीशक्तिभ्यां० ५ लं वेधोमूर्तिलक्ष्मीशक्तिभ्यां० ५ वं परमेष्ठिमूर्तिवज्रिणीशक्तिभ्यां० ५ शं पितामहमूर्तिशशिधराशक्तिभ्यां० ५ षं विधातृमूर्तिषडाधारनिलयाशक्तिभ्यां० ५ सं विरिञ्चिमूर्तिसर्वकामाशक्तिभ्यां० ५ हं स्रष्टृमूर्तिहसिताननाशक्तिभ्यां० ५ ळं चतुराननमूर्तिललिताशक्तिभ्यां नमः। ऐं ह्रीं श्रीं ह्सौः स्हौः क्षं हिरण्यगर्भमूर्तिक्षमाशक्तिभ्यां नमः। ५ अकरादिक्षकारान्तं सानुस्वारमुक्त्वा त्रिमूर्त्यात्मिकायै श्रीपराम्बादेव्यै नमः। इति व्यापकं न्यसेत् ॥

एतान् शिरोवक्त्रदक्षांसवामांस दक्षपार्श्व वामपार्श्व दक्षकटि वामकटि दक्षोरु वामोरु दक्षजानु वामजानु दक्षजंघा वामजंघा दक्षपाद वामपाद पुनर्दक्षपाद वामपाद दक्षपार्श्व वामपार्श्व दक्षकक्ष वामकक्ष कण्ठोर्ध्वमुख पूर्वमुख दक्षिणपश्चिमोत्तरमुखेषु मूलाधार स्वाधिष्ठान मणिपूरकानाहत विशुद्ध्याज्ञाललाट शिरउन्मनी ब्रह्मरन्ध्रेषु यथा-क्रमं विन्यसेत्। उन्मनी नाम ब्रह्मरन्ध्रस्याधोदेशः। बीजपञ्चकं सर्वत्र योज्यम् ॥

अथ मन्त्रन्यासः—ऐं ह्रीं श्रीं ह्सौः स्हौः इति बीजपञ्चकमुक्त्वा अं आं इं एकलक्षकोटिभेदप्रणवाद्येकाक्षरात्माखिलमन्त्राधिदेवतायै सकलफलप्रदायै एककूटेश्वर्यम्बादेव्यै नमः। ५ ईं उं ऊं द्विलक्षकोटिभेदहंसादिद्व्यक्षरात्माखिल-

* ठंकृति इति ख, ग, घ पाठः

मन्त्राधिदेवतायै सकलफलप्रदायै द्विकूटेश्वर्यम्बादेव्यै नमः। ५ ऋं ॠं लृं त्रिलक्षकोटिभेदवह्न्यादित्र्यक्षरात्माखिलमन्त्राधिदेवतायै सकलफलप्रदायै त्रिकूटेश्वर्यम्बादेव्यै नमः। ५ लॄं एं ऐं चतुर्लक्षकोटिभेद चन्द्रादिचतुरक्षरात्माखिलमन्त्राधिदेवतायै सकलफलप्रदायै चतुःकूटेश्वर्यम्बादेव्यै नमः। ५ ओं औं अं अः पञ्चलक्षकोटिभेदसूर्यादिपञ्चाक्षरात्माखिलमन्त्राधिदेवतायै सकलफलप्रदायै पञ्चकूटेश्वर्यम्बादेव्यै नमः। ५ कं खं गं षड्लक्षकोटिभेदस्कन्दादिषडक्षरात्माखिलमन्त्राधिदेवतायै सकलफलप्रदायै षट्कूटेश्वर्यम्बादेव्यै नमः। ५ घं ङं चं सप्तकोटिभेदगणेश्वरादिसप्ताक्षरात्माखिलमन्त्राधिदेवतायै सकलफलप्रदायै सप्तकूटेश्वर्यंबादेव्यै नमः। ५ छं जं झं अष्टलक्षकोटिभेदवटुकाद्यष्टाक्षरात्माखिलमन्त्राधिदेवतायै सकलफलप्रदायै अष्टकूटेश्वर्यम्बादेव्यै नमः। ५ ञं टं ठं नवलक्षकोटिभेद ब्रह्मादिनवाक्षरात्माखिल मन्त्राधिदेवतायै सकलफलप्रदायै नवकूटेश्वर्यंबादेव्यै नमः। ५ डं ढं णं दशलक्षकोटिभेदविष्ण्वादिदशाक्षरात्माखिलमन्त्राधिदेवतायै सकलफलप्रदायै दशकूटेश्वर्यम्बादेव्यै नमः। ५ तं थं दं एकादशलक्षकोटिभेदरुद्राद्येकादशाक्षरात्माखिलमन्त्राधिदेवतायै सकलफलप्रदायै एकादशकूटेश्वर्यम्बादेव्यै नमः। धं नं पं द्वादशलक्षकोटिभेदवाण्यादिद्वादशाक्षरात्माखिलमन्त्राधिदेवतायै सकलफलप्रदायै द्वादशकूटेश्वर्यम्बादेव्यै नमः। ५ फं बं भं त्रयोदशलक्षकोटिभेदलक्ष्म्यादित्रयोदशाक्षरात्माखिलमन्त्राधिदेवतायै सकलफलप्रदायै त्रयोदशकूटेश्वर्यम्बादेव्यै नमः। ५ मं यं रं चतुर्दशलक्षकोटिभेदगौर्यादिचतुर्दशाक्षरात्माखिलमन्त्राधिदेवतायै सकलफलप्रदायै चतुर्दशकूटेश्वर्यम्बादेव्यै नमः। ५ लं वं शं पञ्चदशलक्षकोटिभेददुर्गादि पञ्चदशाक्षरात्माखिलमन्त्राधिदेवतायै सकलफलप्रदायै पञ्चदशकूटेश्वर्यम्बादेव्यै नमः। ५ षं सं हं ळं क्षं षोडशलक्षकोटिभेदत्रिपुरादिषोडशाक्षरात्माखिलमन्त्राधिदेवतायै सकलफलप्रदायै षोडशकूटेश्वर्यम्बादेव्यै नमः। ऐं ह्रीं श्रीं ह्सौः स्हौः अं आं इत्यादि लं क्षं इत्यन्तं मातृकामन्त्रमुक्त्वा सकलमन्त्राधिदेवतायै सकलफलप्रदायै

श्रीपराम्बादेव्यै नमः । इति व्यापकं न्यसेत् ॥

मूलाधारस्वाधिष्ठानमणिपूरकाऽनाहतविशुध्याज्ञाशिरोधिकायां अर्धेन्दौ बिन्दौ कुलपदे नादे नादान्ते व्यापिन्यां समानायां उन्मन्यां ध्रुवमण्डले न्यसेत् ॥ अपानवृषणयोर्मध्यं मूलाधारम् । स्वाधिष्ठानं लिङ्गस्थानम् । मणिपूरकं नाभिः । अनाहतं हृदयं । विशुद्धिः कण्ठमूलं । आज्ञा भ्रूमध्यं । शिरोधिका ललाटोपरिकेशारम्भदेशः । अर्धेन्दु तस्योपरिप्रदेशः । तदुपरि बिन्दुस्थानम् । तदुपरि कुळपदस्थानम् । तदुपरि नादस्थानम् । तदुपरि नादान्तस्थानम् । तदुपरि व्यापिनीस्थानम् । तदुपरि समानास्थानम् । तदुपरि उन्मन्यास्स्थानम् ॥ तदुपरि ध्रुवमण्डलस्थानम् । एवं मातृकावर्णत्रयपूर्वकं न्यसेत् । मातृकावशिष्टद्व्याक्षरं षोडशलक्षकोटिमन्त्रेण सह न्यसेत् । बीजपञ्चकं मन्त्रादौ सर्वत्र योज्यम् ॥

अथ देवतान्यासः — ऐं ह्रीं श्रीं ह्सौः स्हौः अं आं सहस्रकोटियोगिनीकुलसेवितायै ऋषिनिवृत्त्यंबादेव्यै नमः । ५ इं ईं सहस्रकोटियोगिनीकुलसेवितायै योगिप्रतिष्ठाम्बादेव्यै नमः । ५ उं ऊं सहस्रकोटियोगिनी॰ तपस्विविद्याम्बादेव्यै नमः । ५ ऋं ॠं सहस्रकोटि॰ मुनिशान्त्यम्बादेव्यै नमः । ५ लृं लॄं सहस्रकोटि॰ मुनिशान्त्यतीताम्बादेव्यै नमः । ५ एं ऐं सहस्रकोटि॰ देवहल्लेखाम्बा॰ ५ ओं औं सहस्रकोटि॰ राक्षसगगनाम्बा॰ ५ अं अः सहस्रकोटि॰ विद्याधररक्ताम्बा॰ ५ कं खं सहस्रकोटि॰ सिद्धमहोच्छुष्माम्बा॰ ५ गं घं सहस्रकोटि॰ साध्यकरालिकाम्बा॰ ५ ङं चं सहस्रकोटि॰ अप्सरोजयाम्बा॰ ५ छं जं सहस्रकोटि॰ गन्धर्वविजयाम्बा॰ ५ झं ञं सहस्रकोटि॰ गुह्यकाजिताम्बा॰ ५ टं ठं सहस्रकोटि॰ यक्षापराजिताम्बा॰ ५ डं ढं सहस्रकोटि॰ किन्नरवामाम्बा॰ ५ णं तं सहस्रकोटि॰ पन्नगज्येष्ठाम्बा॰ ५ थं दं सहस्रकोटि॰ पितृरुद्राम्बा॰ ५ धं नं सहस्रकोटि॰ गणेशमायाम्बा॰

५ पफं सहस्रकोटि० भैरवकुण्डल्यम्बा० ५ बं भं सहस्रकोटि० वटुककाल्यंबा० २ मं यं सहस्रकोटि० क्षेत्रेशकालरात्र्यम्बा० ५ रं लं सहस्रकोटि० प्रमथभगवत्यम्बा० ५ वं शं सहस्रकोटि० ब्रह्मसर्वैश्वर्यम्बा० ५ षं सं सहस्रकोटि० विष्णुसर्वैश्वर्यम्बा० ५ हं ळं सहस्रकोटि० रुद्रसर्वैश्वर्यम्बा० ५ क्षं सहस्रकोटियोगिनीकुलसेवितायै चराचरशक्त्यम्बादेव्यै नमः। ऐं ह्रीं श्रीं ह्सौः स्हौः अं आं + क्षं इति सकलमातृकामुक्त्वा सकलदेवतात्मिकायै श्रीपराम्बादेव्यै नमः। इति व्यापकं विन्यसेत्॥ सर्वत्र मन्त्रादौ बीजपञ्चकमुक्त्वा मातृकावर्णद्वन्द्वपूर्वकं न्यसेत्॥ अस्य न्यासस्य स्थानानि॥ पादद्वयगुल्फद्वय जङ्घाद्वय जानुद्वय ऊरुद्वय कटिद्वय पार्श्वद्वय स्तनद्वय कक्षद्वयांसद्वय कर्णद्वय नेत्रद्वय शिरोब्रह्मरन्ध्रेषु क्रमेण न्यसेत्॥

अथ मातृभैरवन्यासः — ऐं ह्रीं श्रीं ह्सौः स्हौः कं खं गं घं ङं अनन्तकोटि भूचरीकुलसहितायै आं क्षां मङ्गलाम्बादेव्यै आं क्षां ब्रह्माण्यम्बादेव्यै नमोऽनन्तकोटिभूतकुलसहिताय अं क्षं मङ्गलनाथाय अं क्षं असितांगभैरवाय नमः। ५ चं छं जं झं ञं अनन्तकोटिखेचरीकुलसहितायै ईंळां अचिकाम्बादेव्यै ईंळां माहेश्वर्यम्बादेव्यै नमोऽनन्तकोटिवेतालकुलसहिताय इंळं अचिकानाथाय इंळं रुरुभैरवाय नमः। ५ टं ठं डं ढं णं अनन्तकोटिपातालचरकुलसहितायै ऊं हां योगेश्वर्यम्बादेव्यै ऊं हां कौमार्यम्बादेव्यै नमोऽनन्तकोटि पिशाचकुलसहिताय उं हं योगेश्वरीनाथाय उं हं चण्डभैरवाय नमः। ५ तं थं दं धं नं अनन्तकोटिडाकिनीकुलसहितायै ॠं सां हरसिद्धाम्बादेव्यै ॠं सां वैष्णव्यम्बादेव्यै नमोऽनन्तकोट्यपस्मारकुलसहिताय ऋं सं हरसिद्धाम्बानाथाय ऋसं क्रोधभैरवाय नमः। ५ पं फं बं भं मं अनन्तकोटिसहचरिकुलसहितायै ॡं षां भट्टारिकाम्बादेव्यै ॡं षां वाराह्यम्बादेव्यै नमोऽनन्तकोटिब्रह्मराक्षसकुलसहिताय ऌं षं भट्टारिकाम्बानाथाय ऌं षं उन्मत्तभैरवाय नमः। ५ यं रं लं वं अनन्तकोटिगिरिचरकुलसहितायै ऐं शां गिरिकिल्यम्बादेव्यै ऐं शां इन्द्राण्यम्बादेव्यै

नमोऽनन्तकोटिचेटीकुलसहिताय ऐं शं गिरिकिर्यम्बानाथाय ऐं शं कपाल-भैरवाय नमः। ५ शं षं सं हं अनन्तकोटिचराचरकुलसहितायै औं वां काल-रात्र्यम्बादेव्यै औं वां चामुण्डादेव्यै नमोऽनन्तकोटिप्रेतकुलसहिताय ओं वं काल-रात्र्यम्बानाथाय ओं वं भीषणभैरवाय नमः। ऐं ह्रीं श्रीं ह्सौः स्हौः ळं क्षं अनन्त-कोटिजलचरकुलसहितायै अः लां भीषण्यम्बादेव्यै अः लां महालक्ष्म्यम्बादेव्यै नमोऽनन्तकोटिशाकिनीकुलसहिताय अं ळं भीषण्याम्बानाथाय अं ळं संहारभैरवाय नमः। मूलाधार-स्वाधिष्ठान-मणिपूरकानाहतविशुद्ध्याज्ञाललाटशिरस्सु क्रमेण न्यसेत्। बीजपञ्चकं मन्त्रादौ सर्वत्र योज्यम्। एवमष्टमातृसहिताष्टभैरवन्यासः॥

अथ महाषोढान्यासस्य फलमाह—

एवं न्यासे कृते देवि साक्षात् शिवसमो भवेत्।
मन्त्री न चात्र सन्देहः निग्रहानुग्रहक्षमः॥

महाषोढाह्वयं न्यासं यः करोति दिनेदिने।
देवास्सर्वे नमस्यन्ति तं मामिव न संशयः॥

महाषोढाह्वयं न्यासं यः करोतीह पार्वति।
दिव्यक्षेत्रं समुद्दिष्टं समन्ताद्दशयोजनम्॥

कृत्वा न्यासमिदं देवि यत्र गच्छति मानवः।
तत्र स्याद्विजयो लाभः संमानं पौरुषं प्रिये॥

महाषोढाकृतन्यासः तदङ्गं यदि वन्दते।
मासान्मृत्युमवाप्नोति यदि त्राता शिवस्स्वयम्॥

वज्रपञ्जरनामानं एतन्न्यासं करोति यः।
दिव्यान्तरिक्षभूशैलजलारण्यनिवासिनः॥

उद्दण्डभूतवेतालदेवरक्षोग्रहादयः ।
भयग्रस्तेन मनसा नेक्षन्ते तं कुलेश्वरि ॥

महाषोढाह्वयं न्यासं ब्रह्मविष्णुशिवादयः ।
देवास्सर्वेपि कुर्वन्ति ऋषियोगिमुनीश्वराः ॥

बहुनोक्तेन किं देवि न्यासमेतं मम प्रिये ।
नापुत्राय वदेद्देवि नाशिष्याय प्रकाशयेत् ॥

आज्ञासिद्धिमवाप्नोति रहसि न्यासमाचरेत् ।
अस्मात्परतरा रक्षा देवताभावसिद्धिदा ॥

लोके नास्ति न सन्देहः सत्यं सत्यं वरानने ।
ऊर्ध्वाम्नायप्रवेशश्रीपराप्रासादचिन्तनम् ॥

महाषोढापरिज्ञानं नाल्पस्य तपसः फलम् ।
महाषोढाह्वयं न्यासं कृत्वा यो यत्र तिष्ठति ।
तत्क्षेत्रं हि महाशैवं शतयोजनमायतम् ॥

इति ते कथितं देवि ध्यानं न्यासादिकं प्रिये ।
समासेन कुलेशानि किं भूयः श्रोतुमिच्छसि ॥

इति महाषोढान्यासः समाप्तः ॥

कामकलान्यासः -- ईकारोर्ध्वगतं बिन्दुं देवीरूपस्यात्मनो वक्त्रं प्रकल्प्य, ह्रीं श्रीं श्रीमहात्रिपुरसुन्दरि परारूपवक्त्राय नमः । इति मुखे व्यापकं कृत्वा, ततः सपरार्धकबिन्दुद्वयं स्तनयुग्मं ध्यात्वा, ह्रीं श्रीं श्रीमहात्रिपुरसुन्दरि-परमार्धात्मकबिन्दुद्वयाय नमः । इति स्तनयोर्व्यापकं कृत्वा, तदधो बिन्दुमध्ये

सपरमार्धाभिव्यञ्जकरेखां योनिं प्रकल्प्य, ह्रीं श्रीं श्रीमहात्रिपुरसुन्दरि सपरार्धाभि-व्यंजकरेखात्मयोन्यै नमः । इति करतलेन नाभेरधः अधोमुखेन विन्यस्य, ऊर्ध्वविन्दुरूपं वक्त्रं तदन्तर्गतं नासाललाटकर्गतदपाङ्गजातं स्तनरूपविन्दुद्वयगतं भुजचतुष्टयं योनिरूपसपरार्धगतं पादद्वयं ध्यात्वा सर्वसमष्टिरूपं महाकाम-कलात्मकं कामेश्वरकामेश्वरी नामरहस्यात्मकं देवीरूपमात्मविग्रहं ध्यात्वा, ऐं ह्रीं श्रीं ऐं क ए ई ल ह्रीं सर्वज्ञायै महात्रिपुरसुन्दर्यै हृत् । ऐं ह्रीं श्रीं क्लीं ह स क ह ल ह्रीं नित्यतृप्तायै श्रीमहात्रिपुरसुन्दर्यै शिरः । ऐं ह्रीं श्रीं सौः स क ल ह्रीं अनादिबोधायै श्रीमहात्रिपुरसुन्दर्यै शिखा । ऐं ह्रीं श्रीं ऐं क ए ई ल ह्रीं स्वतन्त्रायै श्रीमहात्रिपुरसुन्दर्यै कवचाय हुं । ऐं ह्रीं श्रीं क्लीं ह स क ह ल ह्रीं अलुप्तायै श्रीमहात्रिपुरसुन्दर्यै नेत्रम् । ऐं ह्रीं श्रीं सौः स क ल ह्रीं अनन्तायै श्रीमहात्रिपुरसुन्दर्यै अस्त्रम् । ध्यानम्—

अरुणां करुणातरङ्गिताक्षीं धृतपाशाङ्कुशपञ्चबाणचापाम् ।
अणिमादिभिरावृतां मयूखैः अहमित्येव विभावये भवानीम् ॥

ध्यायेत्परशिवाङ्कस्थां पाशांकुशधनुश्शरैः ।
भासमानचतुर्बाहामरुणामरुणांशुकाम् ॥

प्रकाशमानां प्रथमे प्रयाणे प्रतिप्रयाणेऽप्यमृतायमानाम् ।
अन्तःपदव्यामनुसञ्चरन्तीं आनन्दमुद्रामवलोकयामः ॥

इति ध्यात्वा (ध्यायेत्) ॥

अथाङ्गुलिन्यासः— अं मध्यमाभ्यां नमः । आं अनामिकाभ्यां नमः । सौः कनिष्ठिकाभ्यां नमः । अं अङ्गुष्ठाभ्यां नमः । आं तर्जनीभ्यां नमः । सौः करतलकरपृष्ठाभ्यां नमः । इति प्रथमस्वरद्वयपराबीजानि क्रमेण संयोज्य मध्यमादिकनिष्ठान्तं अङ्गुष्ठादितलान्तं च न्यसेत् ॥

अथ खण्डत्रयन्यासः— करपादद्वयमूलमध्यमाग्रेषु मूलमन्त्रखण्डत्रयेण व्यापकं विन्यसेत् ॥

अथ परान्यासः— शिरस्यधोमुखस्थितसहस्रदळकमलकर्णिकामध्यगत-पूर्णशिशिरकरबिम्बे अकथा(थ)कगर्भं शिखाग्रं शृङ्गाटमनुस्मृत्य आधार-चतुर्दलकमले पूर्ववत् शृङ्गाटं विभाव्य हार्धकळारूपवह्निकुण्डलिनीं लिङ्गाकार-तया समुल्लास्य षट्सरसिजग्रन्थिभेदक्रमेण योनिरूपाममृतकुण्डलिनीं मध्यं प्रवेश्य अमृतानलकुण्डलिन्योः मिथो मथनसंभूतारुणामृतसारैः तुरीयं स्मारं स्मारं आत्मानं सिञ्चेत् ॥ तत्र शृङ्गाटमिति त्रिकोणम् । हार्धकला इति च त्रिकोणम् ॥ इति परान्यासः ॥

अथ पश्यन्तीन्यासः — शिरश्शिखाग्रं त्रिकोणं प्रकाशात्मं(त्मकं) विभाव्य तस्य वामरेखायां ऐं ह्रीं श्रीं वामायै (नमः) । ऐं ह्रीं श्रीं ज्येष्ठायै ३ रौद्र्यै नमः इति न्यस्त्वा, तस्य पूर्वरेखायां ३ अम्बिकायै० ३ अकारात्मिकायै० ३ इच्छायै० ३ ज्ञानायै० ३ क्रियायै नमः । इति न्यस्त्वा, तस्य दक्षिण-रेखायां ऐं ह्रीं श्रीं शान्त्यै हकारात्मिकायै० ३ अहरसात्मिकायै नमः इति न्यसेत् । इति पश्यन्तीन्यासः ॥

अथ मध्यमान्यासः — ऐं ह्रीं श्रीं अकथात्मने सविकृतनादाय नमः । ऐं ह्रीं श्रीं अकारात्मने शून्यनादाय नमः । ३ बिन्दुद्वयात्मने स्पर्शनादाय नमः । ३ षट्कोणरेखात्मने नाथनादाय नमः । ३ अर्धचन्द्रात्मने ध्वनिनादाय नमः । ३ वृत्तात्मने बिन्दुनादाय नमः । ३ एकारात्मने शक्तिनादाय नमः । ३ बिन्दुद्वयात्मने बीजनादाय नमः । ३ हंसरूपात्मने अक्षरनादाय नमः । ब्रह्म-रन्ध्रे ललाटे भ्रूमध्ये आस्ये कण्ठे हृदये नाभौ स्वाधिष्ठाने आधारे च यथाक्रमं न्यसेत् । तारत्रयं सर्वत्र मन्त्रादौ योज्यम् । इति मध्यमान्यासः ॥

अथ वैखरीन्यासः—आधारकमलचतुर्दळेषु ऐं ह्रीं श्रीं वहसैं । ३ शहसैं । ३ षहसैं । ३ सहसैं । इति न्यस्त्वा, स्वाधिष्ठानकमलषड्दलेषु ३ बहसैं । ३ भहसैं । ३ महसैं । ३ यहसैं । ३ रहसैं । ३ लहसैं । इति न्यस्त्वा (न्यसेत्) । तारत्रयं सर्वत्र योज्यम् । आधारस्वाधिष्ठानाक्षरदेवताः तपनभासुर-तनुलतावराभयकरा ध्येयाः ॥ अथ मणिपूरकमलदशदळेषु ऐं ह्रीं श्रीं डहसंक्लीं । ३ ढहसंक्लीं । ३ णहसंक्लीं । ३ तहसंक्लीं । ३ थहसंक्लीं । ३ दहसंक्लीं । ३ धहसंक्लीं । ३ नहसंक्लीं । ३ पहसंक्लीं । ३ फहसंक्लीं । इति न्यसेत् । तारत्रयं सर्वत्र योज्यम् । अनाहतकमलद्वादशदळेषु ऐं ह्रीं श्रीं कहसंक्लीं । ३ खहसंक्लीं । ३ गहसंक्लीं । ३ घहसंक्लीं । ३ ङहसंक्लीं । ३ चहसंक्लीं । ३ छहसंक्लीं । ३ जहसंक्लीं । ३ झहसंक्लीं । ३ ञहसंक्लीं । ३ टहसंक्लीं । ३ ठहसंक्लीं । इति न्यसेत् । तारत्रयं सर्वत्र योज्यम् । मणिपूरकानाहतदेवता-विलीनविद्रुमरसारुणाः पुष्पशरेक्षुशरासनाङ्का ध्येयाः ॥ विशुद्धिकमलषोडश-दळेषु ऐं ह्रीं श्रीं अहसौः । ३ आहसौः । ३ इहसौः । ३ ईहसौः । ३ उहसौः । ३ ऊहसौः । ३ ऋहसौः । ३ ॠहसौः । ३ ऌहसौः । ३ ॡहसौः । ३ एहसौः । ३ ऐहसौः । ३ ओहसौः । ३ औहसौः । ३ अंहसौः । ३ अःहसौः । इति विन्यस्य आज्ञाकमलदलद्वये ऐं ह्रीं श्रीं हहसौः । ३ क्षहसौः । इति विन्यसेत् । तारत्रयं सर्वत्र योज्यम् । विशुद्ध्याज्ञाक्षरदेवताः स्फटिकमयपाञ्चालिकासंभिन्नाः पुष्पमयबाणारोपित-रसाल-चाप-सृणि-पाशकलित पाणिपल्लवा ध्येयाः । इति वैखरीन्यासः ॥

अथ कामकलास्वरूपमात्मानं विचिन्तयेत् । तद्यथा— शिवशिवारूप-कुलाकुलकुण्डलिनीमेळनोदित प्रथमबिन्दुं देवीरूपस्यात्मनो मुखं परिकल्प्य ऐं ह्रीं श्रीं कएईलह्रीं श्रीमहात्रिपुरसुन्दरिपरारूपवक्त्रश्रीपादुकां पूजयामि । इति वक्त्रे व्यापकं विन्यस्य, प्रथमबिन्दुस्पन्दरूपबिन्दुद्वयं कुचयुगमनुस्मृत्य ऐं ह्रीं श्रीं हसकहलह्रीं श्रीमहात्रिपुरसुन्दरिसपरार्धकलात्मकस्तनयुगळश्रीपादुकां पूजयामि

इति स्तनयोर्व्यापकं विन्यस्य हार्धकळां योनिं विचिन्त्य ऐं ह्रीं श्रीं सकळह्रीं श्रीमहात्रिपुरसुन्दरिसपरार्धकलाव्यञ्जकरेखात्मकयोनिश्रीपादुकां पूजयामि। इति नाभेरधोभागे व्यापकतया विन्यस्य गुरुदेवतामन्त्रात्मनां ऐक्यं परिभाव्य पूर्वलिखितचक्रन्यासोक्तबाणाद्यायुधानि करयोः तत्तन्मुद्रया तत्तन्मन्त्रपूर्वकं प्रदर्शयेत्॥ तद्यथा— दक्षिणकराङ्गुलीषु बाणान् कर्पूरकनकसन्ध्यारागेन्द्र-नीलमञ्जिष्ठवर्णदेवताधिष्ठितान् विन्यस्य, धनुर्वामाधःकरे, सृणिं दक्षिणोर्ध्वकरे, पाशं वामोर्ध्वकरे च प्रदर्शयेत्॥

अथ नवयोनिन्यासः— श्रोत्रयोः चुबुके गण्डयोरास्ये दृशोर्नासिकायां अंसयोर्हृदये कूर्परयोः कुक्षौ जान्वोरण्डे पादयोः स्वाधिष्ठाने पार्श्वयोः हृदये स्तनयोः कण्ठे च मूलमन्त्रखण्डत्रयेण विन्यसेत्॥

अथ शृङ्खलान्यासः—

केशान्ते चुबुके वक्त्रे वक्त्रे कण्ठे च चैबुके।
चिबुके हृदये कण्ठे कण्ठे नाभौ तथा हृदि॥

हृदये गुह्ये नाभौ च नाभौ मूले च गुह्यके।
एतेषु स्थानेषु मूलमन्त्रखण्डत्रयेण विन्यसेत्॥

अथ तुर्यन्यासः— आधारहृदयभ्रूमध्येषु मूलमन्त्रखण्डत्रयं विन्यस्य ब्रह्मरन्ध्रे तुरीयखण्डं विन्यसेत्। तुर्यखण्डं चन्द्रकलाखण्डम्। श्रीबीजमित्यर्थः॥

अथ देहन्यासः— ऐं ह्रीं श्रीं क ए ई ल ह्रीं अग्निचक्रे कामगिर्यालये मित्रेशनाथनवयोनिचक्रात्मतत्व सृष्टिकृत्येच्छाशक्तिवाग्भवात्मकवागीश्वरी स्वरूप-कामेश्वरीदेवि ब्रह्मात्मशक्ति श्रीपादुकां पूजयामि। इति कामेश्वरीं अरुणां पाशांकुशाभयकपाल वरांकितचतुर्हस्तां चन्द्रकलावतंसां त्रिणेत्रां ब्रह्माङ्कस्थां

ध्यात्वा, मूलाधारत्रिकोणाग्रकोणे विन्यसेत् । ऐं ह्रीं श्रीं ह स क ह ल ह्रीं सूर्यचक्रे जालन्धरपीठे षष्ठीशनाथदशारद्वय चतुर्दशारचक्रविद्यातत्वस्थितिकृत्य-ज्ञानशक्तिकामराजात्मक कामकलास्वरूप वज्रेश्वरीदेवि विष्ण्वात्मशक्ति श्रीपादुकां पूजयामि इति वज्रेश्वरीं प्रवाळरुचिं करषट्कावलम्बितपाशांकुशचापबाणकपाल-मातुलङ्गां विष्ण्वङ्कवासिनीं ध्यात्वा मूलाधारत्रिकोणदक्षिणकोणे विन्यसेत् । ऐं ह्रीं श्रीं सकलह्रीं सोमचक्रे पूर्णगिरिगह्वरे ओड्डीशनाथाष्टारषोडशारचतुरश्र-चक्रशिवतत्वसंहारकृत्य क्रियाशक्तिशक्तिबीजात्मक परापरशक्तिस्वरूप भगमालिनी-देवी रुद्रात्मशक्ति श्रीपादुकां पूजयामीति भगमालिनीं शरच्चन्द्रचन्द्रिकावदातां पाशांकुशपुस्तकाक्षवलयविलसितबाहुचतुष्टयां त्रिलोचनां रुद्रोत्संगगतां ध्यात्वा मूलाधारत्रिकोणवामकोणे विन्यसेत् । ऐं ह्रीं श्रीं कएईलह्रीं हसकहळह्रीं सकल ह्रीं इत्यन्ते श्रीमित्युच्चार्य परब्रह्मचक्रे ओड्याणपीठे चर्यानाथसमस्तचक्रसपरि-वारपरमतत्व सृष्टिस्थिति संहार कृत्येच्छाज्ञानक्रिया शक्ति वाग्भवकामराज शक्ति-बीजात्मकपरमशक्तिस्वरूपश्रीत्रिपुरसुन्दरीदेवीपरब्रह्मात्मशक्तिश्रीपादुकां पूजयामि इति मूलाधार त्रिकोणमध्ये विन्यस्य, एवमेव कामेश्वर्यादिमन्त्रचतुष्टये एकैकेन, पुनरपि मूलाधार-हृदय-भ्रूमध्य-ब्रह्मरन्ध्रेषु च क्रमेण न्यसेत् । एवं श्रीविद्यान्यासं कृत्वा, मूलस्याङ्गऋष्यादीन्विन्यस्य ध्यात्वा, मानसराजोपचारान् दद्यात् । तत्प्रकारः —

बुद्धिस्तवासनं क्लृप्तं दर्पणं मङ्गळानि च ।
मनोवृत्तिर्विचित्रा ते नृत्तरूपेण कल्पिता ।
ध्वनयो गीतरूपेण महावाद्यप्रभेदतः ॥

छत्राणि तव पद्मानि कल्पितानि मया प्रभो ।
सुषुम्नाध्वजरूपेण प्राणाद्याश्चामरात्मना ॥

अहंकारो जगत्त्वेन क्लृप्तो देहो रथात्मना ।

इन्द्रियाण्यश्वरूपेण शब्दादि रथवर्त्मना ॥

मनः प्रग्रहरूपेण बुद्धिः सारथिरूपतः ।
सर्वमन्यन्मया क्लृप्तं तत्रोपकरणात्मना ॥

इति राजोपचारान्दत्वा मूलमन्त्रं जपेत् ॥

इति श्रीविद्यान्यासविधिः समाप्तः ॥

अथ श्रीविद्यासन्ध्यावन्दनविधिः —

अथ ब्राह्मे मुहूर्ते उत्थाय शुद्धस्सन् मृगीमुद्रया शिरसि स्वगुरुपादुकां त्रिवारं विन्यस्य, तत्राङ्गुष्ठमध्यमानामिकाग्राणां संहतिः मृगीमुद्रा ॥ पुनः स्वनाम च सकृत् हृदि विन्यस्य, पुनरपि स्वगुरुपादुकां त्रिवारं विन्यस्य, पञ्चोपचारैः संपूज्य योनिमुद्रां वक्ष्यमाणां मनसि प्रदर्श्य,

सहस्राराम्बुजारूढं कोटिसोमार्कसप्रभम् ।
सत्यामृतानन्दपदं भुक्तिमुक्तिप्रदं भजे ॥

इति सम्यक् ध्यात्वा, स्वगुरुपादुकां सप्तवारं संजप्य, काकचञ्चुपुटक्रमेण मारुतं पीत्वा, ह ह ह इत्युच्चार्य, सुषुम्नापर्वभेदं कृत्वा, तमेव गुरुं देवतारूपेण हृदयप्रविष्टं ध्यात्वा, सकुंकुमविलेपनामिति ध्यात्वा, मूलविद्यां सप्तवारं संजप्य, पुनः पञ्चवारजपेन आदित्यमार्गगतरजतसोपाने पद्मं संचिन्त्य, सप्तशक्तीनां सदीपिकानां रजतसोपानद्वारा निर्गमनं समीपप्राप्तिं वामभागे स्थितिं च संचिन्त्य, पुनरेकैकवारजपेन तासां त्वगादिधातुषु विलयं ध्यात्वा, पुनरेकवारजपेन भगवत्याः पुरोवस्थानं ध्यात्वा, मङ्गळदर्शनं कुर्यात् ॥

வர்ணன் புவநே, மறுளம்மே, முத்துக் குடையும் பச்சைத் தழையும், நேறுகைக்குப் பொன்னும் கடகமும் முத்துமாலையும்

பொன்னின் மாலையும், ரத்நகிரீடமும், மகர குண்டலமும், திருக் காலுக்குப் பொன்னின் சிலம்பும், உதரபந்தமும், உடை ஞாணும், நூத்தெட்டு முகமுள்ள திருப்பொன்னின் விளக்கில் கற்பூரத்திரியிட்டு, இடத்தே பாகத்தும் வலத்தே பாகத்தும் ஆயிரத்தெட்டு அல்லியார் சேவிக்க, ஆயிரத்தெட்டு இதழுள்ள ஒரு செந்தாமரைப் பூவினகமே இருக்கின்ற தேவி, உன் முகம் நோக்கிய என் முகமாய் வருக, என் கண் ஒளி விளங்கி மறு கண் ஒளி மாந்த, என் சொல் மேலிட்டு மறு சொல் கீழ்ப்பட்டு, என் முகம் நோக்கியவரெல்லாம் எனக்கு வசமாய் வருக, என்னம்மே, என் முகம் பொன் முகமாய் வருக ஸ்வாஹா.

*अस्यार्थः —

வருணன் புவநே - अकारादिक्षकारान्तवर्णमातृकास्वरूपभुवनेश्वरि மருளம்மே-मदोन्मत्ते முத்துக் குடையும்-मौक्तिकछत्रं பச்சைத் தழையும் இரு கைக்குப் பொன்னும் கடகமும்-उभयहस्ते स्वर्णकंकणम् முத்து மாலையும்-मुक्ताहार பொன்னு மாலையும்-स्वर्णमाला ரத்நகிரீடமும்-नवरत्नखचितकिरीट மகர குண்டலமும்-मकरकुण्डल திருக்காலுக்குப் பொன்னும் சிலம்பும்-श्रीपादीस्वर्णनूपुर, உதரபந்தம்-कटिमेखला, ஒடைஞாளும்-स्वर्णकटिसूत्र, நூத்தெட்டு முகமுள்ள திருப்பொன்னின் விளக்கில்-अष्टोत्तरशतकोणयुक्त पात्रामध्ये कर्पूरदीपप्रकाशमान, கற்பூரத்திரியிட்டு-कर्पूरवर्तिका, யடத்தே பாகத்தும்-डावेकडे, வலத்தே பாகத்தும்-उजिवीकडे, ஆயிரத் தெட்டு அல்லியார் ஸேவிக்க-अष्टोत्तरसहस्रस्त्रियां हि सेव्यमान, ஆயிரத் தெட்டு இழளுள்ள ஒரு செந்தாமரைப் பூவினகமே இருக்குன்ன தேவி-अष्टोत्तरसहस्रदळरक्तकमलाचे ठायीं वासकरणारप्रसीदेवी, உன் முகம் நோக்கி என் முகம் பொன்முகமாய் வருக-तुझे मुख पाहून माझे मुख शोभनवर्णहो, என் கண் ஒளி விளங்கி மறு கண் ஒளி மாந்த-माझे नेत्राचें तेज अधिक हि माच्या वैर्याचें नेत्राचें तेज मन्दहोय, என் சொல் மேலிட்டு மறு சொல் கீழிட்டு-माझी वार्ता उच्चहो वैर्याची वार्ता नीचहो, என் முகம் நோக்கிய வரெல்லாம் எனக்கு வரமாய் வருக-माझे मुख पाहणार अवेये मलावश्य होत्, என்னம்மே-माझि माये, என் முகம் பொன் முகமாய் வருக ஸ்வாஹா-माझे मुखजें ते स्वर्णमुखाचे परिहो । भाषामन्त्रार्थः ॥

सोहं शिवाय रहौं कएईलह्रीं हसकहलह्रीं सकलह्रीं हयवरलक्षं सहयरहौं यौं वौं शौं षों सौं हौं इत्यनेन मन्त्रेण ऐक्यं परिभाव्य,

---

*अयं भाषार्थः क मातृकायां केवलं भवति ।

आसीनाय शयानाय गच्छते तिष्ठते क्रियाः ।
सर्वतो गुरुरूपाय गुरवे करवै नमः ॥

इति गुरुं नमस्कृत्य बहिर्निर्गत्य आवश्यादिकं निर्वर्त्य, ऊरुदघ्नजले स्थित्वा, ह्रां हृदयाय नमः इत्यादि द्वात्रिंशत्पटलानन्तरं वक्ष्यमाणाङ्कुशमुद्रया सवितृ-मण्डलार्थमावाह्य,

गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धु कावेरि जलेस्मिन्सन्निधिं कुरु ॥

इति मन्त्रेण सन्निधापनं कृत्वा तस्मिन् त्रिकोणं परिभाव्य मूलमन्त्रेण सप्त-वारजप्तेन अघमर्षणस्नानं कृत्वा स्नात्वोत्थाय, त्रयस्त्रिंशत्पटले वक्ष्यमाणकलश-मुद्रया मूलमुच्चरन् सप्तवारं शिरस्यभिषिच्य, तीरमागत्य वाससी परिधाय तत्वचतुष्टयेन वक्ष्यमाणेनाचम्य, दक्षिणकरे जलमादाय मूलेन सप्तवारं संजप्य तज्जलं इडया आकृष्य अन्तः कुम्भितनिखिलकलुषप्रक्षाळनेन कृष्णरूपं जलं पिङ्गळया विरेच्य, वामे ज्वलितायां वज्रशिलायां अस्त्रेण प्रक्षिपेत् । पुनरपि दक्षिणकरे जलमादाय सप्तवारमभिमन्त्र्य, मूलव्यस्तसमस्तबीजैः पादहृदय-भ्रूमध्यसर्वगात्रेषु संप्रोक्ष्य, पुनरपि जलं गृहीत्वा मूलेन सप्तवारमभिमन्त्र्य, तज्जलं पीत्वा तत्वचतुष्टयेनाचम्य, मूलेन त्रिवारं संप्रोक्ष्य, ओं ऐं ह्रीं श्रीं ह्रां ह्रीं सः मार्ताण्डभैरवाय प्रकाशशक्तिसहिताय नमः । ऐं ह्रीं श्रीं ऐं त्रिपुरा-देवि विद्महे क्लीं कामिनीश्वरी धीमहि । सौः तन्नः क्लिन्नः प्रचोदयात् । इत्याभ्यां मूलेन च त्रिवारमर्घ्यं दत्वा, ततो जले श्रीचक्रं संचिन्त्य, मूलेन सप्तवारं सन्तर्प्य, देवेभ्यः स्वाहा । ऋषिभ्यो नमः । पितृभ्यः स्वधा । सर्वेभ्यो भूतेभ्यो वौषट् । सर्वे भैरवास्तृप्यन्तु । सर्वे क्षेत्रपालाः तृप्यन्तु । इत्येतै-स्त्रिवारं परिवारान्सन्तर्प्य तत्वचतुष्टयेनाचम्य, तीर्थं संहारमुद्रया त्रयस्त्रिंशत्पटले

वक्ष्यमाणया सवितर्युपसंहृत्य, नियतवचनो निजपदमात्रावलोकनो बाह्यजनानस्पृशन् अनवलोकयन्नसंभाषयन् देव्यर्चनाय समागच्छेत् गृहम् ॥

इति सन्ध्यावन्दनविधिः ॥

तत्वचतुष्टयमन्त्रप्रकारः — ॐ प्रकृत्यहंकारबुद्धिमनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणवाक्पाणिपादपायूपस्थशब्दस्पर्शरूप रस गन्धाकाशवायुवह्निसलिलभूम्यात्मना अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ओं औं अं अः ऐं कएईलह्रीं आत्मतत्वेन स्थूलदेहं परिशोधयामि स्वाहा ॥

ॐ मायाऽविद्या कला रागकाल नियति पुरुषात्मना कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं क्लीं हसकहळह्रीं विद्यातत्वेन सूक्ष्मदेहं परिशोधयामि स्वाहा ॥

ॐ शिवशक्तिसदाशिवेश्वरशुद्धविद्यात्मना यं रं लं वं शं षं सं हं ळं क्षं सौः सकलह्रीं शिवतत्वेन कारणदेहं परिशोधयामि स्वाहा ॥

ॐ प्रकृत्यहंकार बुद्धि मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राण वाक्पाणिपादपायूपस्थशब्दस्पर्शरूपरसगन्धाकाशवायुवह्निसलिल भूमि मायाविद्याकलारागकाल नियतिपुरुष शिवशक्तिसदाशिवेश्वरशुद्धविद्यात्मना अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ओं औं अं अः कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं ळं क्षं ऐं कएईलह्रीं क्लीं हसकहलह्रीं सौः सकलह्रींश्रीं षट्त्रिंशत्तत्वात्मकसर्वतत्वेन स्थूलसूक्ष्मकारणात्मकसर्वदेहं परिशोधयामि स्वाहा ॥ इति ॥

अथ कल्पसूत्रोक्तप्रकारेण श्रीविद्यायाः प्रयोगविधिर्लिख्यते —

यदि काम्यमीप्सेताभीष्टं श्रीविद्यादेवतायै विज्ञाप्य, संकल्पं कृत्वैतत्कर्म-

सिद्धयर्थं एतावतीराहुतीः करिष्यामीति, तिलाज्यैः शान्त्यै, अन्नैरन्नाय, अमृतासमिच्चूतपल्लवैर्ज्वरशमनाय, दूर्वाभिरायुषे, कृतमालैर्धनाय, (कृतमालं கொன்றை) उत्पलैर्भोगाय, बिल्वदलैः राज्याय, पद्मैः साम्राज्याय, शुद्धलाजैः कन्यायै, नन्द्यावर्तैः कवित्वाय, वञ्जुलैर्वृष्टयै, मल्लिकाजातिपुन्नागैः भाग्याय, बन्धूकजपाकिंशुकवकुळमधूकैः वश्याय, लवणैराकर्षणाय, कदम्बकैस्सर्ववश्याय, शालितण्डुलैः धान्याय, कुंकुमरोचनादिसुगन्धैः सौभाग्याय, पलाशपुष्पैः कपिलाघृतैर्वा तेजसे, धुत्तूरकुसुमैरुन्मादनाय, विषवृक्षनिम्बश्लेष्मातक विभीतक समिद्भिः शत्रुनाशाय, निम्बतैलाक्तलवणैः मारणाय, काकोलूकपक्षैः विद्वेषणाय, तिलतैलाक्तमरीचैः कासश्वासशमनाय जुहुयात् । बलिं प्रदाय तत्तत्कर्महोमान्ते, ॐ भूरग्नये च पृथिव्यै च महते च स्वाहा । ॐ भुवो वायवे चान्तरिक्षाय च महते च स्वाहा । ॐ सुवरादित्याय च दिवे च महते च स्वाहा । ॐ भूर्भुवस्स्वश्चन्द्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च महते च स्वाहा । इति चतुर्भिर्मन्त्रैः महाव्याहृतिहोमं कुर्यात् ।। इति त्रिपुराहोमविधिः ।।

अथ त्रिपुराविषय(क)नवमुद्राक्रमो लिख्यते —

संक्षोभद्रावणाकर्षवश्योन्मादमहांकुशाः ।
खेचरीबीजयोन्याख्या नव मुद्राः प्रकीर्तिताः ।।

कनिष्ठानामिके मध्ये योजिते पृष्ठपृष्ठके ।
अंगुष्ठौ संमुखौ योज्य तर्जन्यौ दण्डवत्सृजेत् ।।

एषा संक्षोभिणीत्यन्या द्राविणी मध्यतर्जनी ।
द्राविण्या मध्यतर्जाग्रे अन्तराकुञ्चयेच्छनैः ।।

मुद्रैषाऽऽकर्षणी प्रोक्ता वश्याख्या च ततः परा ।
कनिष्ठेऽनामिके मध्ये स्वपृष्ठविवरे क्षिपेत् ।।

तलाभ्यां गृह्य तर्जाग्रे अंगुष्ठाग्रे नियोजयेत् ।
अंगुल्यन्तः कनिष्ठे द्वे व्यत्यस्याकर्षयेच्छनैः ॥

ते मध्यमाभ्यामावेष्ट्य मध्याग्रांगुष्ठयोगतः ।
विरळे सर्ज(ज्ज)येत्तर्जमुद्रैषोन्मादिनी मता ॥

अस्यास्त्वनामतर्जाग्रे संमुख्याकुञ्चनात्ततः ।
एवं महांकुशामुद्रा खेचरी च ततः परा ॥

रज्वाकारौ करौ कृत्वा योनिमुद्राप्रदेशतः ।
कनिष्ठे तर्जपृष्ठे च वृद्धाभ्यां योजयेत् शनैः ॥

कनिष्ठपृष्ठे मध्ये द्वे तयोः पृष्ठे त्वनामिके ।
अष्टमी बीजमुद्रैषा नवमी योनिरीरिता ॥

मिथः कनिष्ठिके बध्वा तर्जनीभ्यामनामिके ।
अनामिकोर्ध्वगश्लिष्टदीर्घमध्यमयोरधः ॥

अंगुष्ठाग्रद्वयं न्यस्येद्योनिमुद्रेयमीरिता ।

एवं नवमुद्राः जपकाले प्रदर्शयेत् ॥

अथ त्रिखण्डमुद्रालक्षणम् — हस्तद्वयांगुलिः(लीः) योनिमुद्रावदवबध्वा करतलद्वयस्य पृष्ठभागे कनिष्ठिकाद्वयमूर्ध्वीकृत्य अन्योन्यमामूलाग्रं संश्लेषयेत्। पुनरंगुष्ठद्वयमपि हस्ततलोपरि ऊर्ध्वीकृत्य अन्योन्यमामूलाग्रं संश्लेषयेत्। एषा त्रिखण्डमुद्रा। अनया त्रिपुरावाहने त्रिखण्डरूपांगुलीषु त्रिसृष्वपि पुष्पत्रयं निधाय विद्यात्रिखण्डस्य मध्ये एकैकखण्डजपपूर्वकं एकैकखण्डस्थं पुष्पं चक्रमध्ये विनिक्षिपेत्। एवं आवाहनविधिः ॥

अथ त्रिपुरसुन्दरीषोडशाक्षरीविधानं लिख्यते —

श्रीबीजमायास्मरयोनि [1] शक्तिः
तारं च बीजद्वयमात्मविद्या ।
शक्त्यादिबीजानि विलोमितानि
श्रीषोडशार्णा त्रिपुराम्बिकायाः ॥

अस्यार्थः—श्रीबीजं लक्ष्मीबीजम् । मायेति भुवनेशी । स्मरः कामबीजम् । योनिरिति वाग्भवम् । शक्तिरिति पराबीजम् । तारं प्रणवः । बीजद्वयं भुवनेशी कमलाबीजद्वयम् । आत्मविद्येति त्रिपुरसुन्दर्या वह्निसूर्यसोमात्मकं त्रिखण्डम् । तत्र कादिः वह्निखण्डः । हादिः सौरखण्डः । सादिः सोमखण्डः । एवं त्रिपुरायाः मन्त्रखण्डक्रमः । शक्त्यादिबीजानि विलोमितानीति पराबाग्भवकामभुवनेशीकमलाबीजानि क्रमेण । एवं त्रिपुराषोडशाक्षरमन्त्रक्रमः ॥

अस्य उद्धारमन्त्रस्वरूपम्—श्रींह्रींक्लींऐंसौः ओंह्रींश्रीं कएईलह्रीं हसकहलह्रीं सकलह्रीं सौः ऐंक्लींह्रींश्रीं इति त्रिपुराषोडशाक्षरीमन्त्रस्वरूपम् ॥ अस्य ऋष्यादिकं च न्यासपूजादिकं च त्रिपुरसुन्दरीविधानवत् ॥ ऐश्वर्यफलप्रधानोयं मन्त्रः ॥

(अथास्य) अक्षरन्यासः—

स्थितिन्यासं ततः कुर्यात् श्रीविद्याषोडशाक्षरैः ।
पश्चाङ्गुलीषु करयोः ब्रह्मरन्ध्रे मुखे हृदि ॥

त्रयं विन्यस्य नाभ्यादिपादान्तं चैकमद्रिजे ।
गळादिनाभिपर्यन्तमपरं हि ततः परम् ॥

---

१ शक्तीः इति ग, घ, ङ पाठः

ब्रह्मरन्ध्रादिकण्ठान्तमेकं विन्यस्य पादयोः ।
अंगुळीषु च विन्यस्येन्न्यासोयं सिद्धिकारकः ॥

सृष्टिन्यासं ततः कुर्यात् सद्यस्सिद्धिप्रदायकम् ।
ब्रह्मरन्ध्रेऽलिके नेत्रे श्रुतिघ्राणोष्ठकेषु च ॥

दन्ताधरद्वये देवि जिह्वायां चोरुमूलके ।
पृष्ठे सर्वाङ्गहृदये स्तनकुक्षिषु लिङ्गके ॥

श्रीविद्यार्णैर्न्यसेद्देवि मन्त्री सर्वसमृद्धये ॥

अथ श्रीविद्यात्रिपुराषोडशाक्षरमन्त्रप्रसंगात् श्रीविद्यापराषोडशाक्षरीमन्त्रविधानं महालक्ष्मीरत्नकोशे पञ्चलक्षग्रन्थे प्रोक्तं लिख्यते —

लक्ष्मीपरामदनवाग्भवशक्तियुक्ता
तारं च भूतिकमले कथिता च विद्या ।
शक्त्यादिकन्तु विपरीततया प्रयुक्तं
श्रीषोडशार्णमिदमागमसंप्रसिद्धम् ॥

अस्यार्थः – लक्ष्मीति श्रीबीजं । परेति बालातृतीयबीजं । मदन इति कामबीजम् । वाग्भव इति बालाप्रथमबीजम् । शक्तिरिति भुवनेशी । तार इति प्रणवः । भूतिरिति भुवनेशी । कमलेति श्रीबीजम् । कथिता च विद्येति । श्रीविद्यायाः सोमसूर्यानलात्मकक्रमेण खण्डत्रितयम् । तत्र सादिखण्डः सोमात्मकः । हादिखण्डः सूर्यात्मकः । कादिखण्डः वन्ह्यात्मकः । एवं त्रिखण्डस्य क्रमः । शक्त्यादिकन्तु विपरीततयेति ॥ भुवनेशी वाग्भव कामबीज पराबीज श्रीबीजानि । एवं पराविद्याषोडशाक्षरीमन्त्रः ॥ श्रीं सौः क्लीं ऐं ह्रीं ओं ह्रींश्रीं सकलह्रीं हसकहलह्रीं कएईलह्रीं ह्रीं ऐं क्लीं सौः श्रीं इति पराषोडशाक्षरीमन्त्रः । ऐश्वर्यफलप्रधानोयं मन्त्रः ॥

अस्य मन्त्रस्य ऋष्यादिरुच्यते — नारायण ऋषिः। गायत्री छन्दः। पराश्रीर्देवता। श्रीं बीजम्। ह्रीं शक्तिः। क्लीं कीलकम्। श्रां सर्वज्ञायै हृत्। श्रीं नित्यतृप्तायै शिरः। श्रूं अनादिबोधायै शिखा। श्रैं स्वतन्त्रायै कवचम्। श्रौं अलुप्तशक्तये नेत्रम्। श्रः अनन्तशक्तये अस्त्रम्। ध्यानम् —

ताक्ष्र्यरूढहरिहृत्सरोजके भाति या परमचित्स्वरूपिणी।
पद्मयुग्ममणिपात्रधारिणी भासतां हृदि सदा ममाम्बिका॥

अक्षरलक्षं जपेत्। कमलैः बिल्वसमिद्भिः आज्यैश्च दशांशं पुरश्चरणाहोमः॥

अथ पूजाविधिः। (तत्र) यन्त्रश्लोकः —

बिन्दुत्रिकोणकाष्ठावतारयुगलोकपत्रवृत्तयुतम्।
वसुदळवृत्तकलादळवृत्तत्रिमहीगृहं भजे चक्रम्॥

पूर्वप्रोक्तचक्रलेखनवत् अस्य चक्रस्य लेखनप्रकारः। अस्मिन् श्रीचक्रे पूर्वोक्तत्रिपुरापीठवत् पीठं संपूजयेत्। तत्र विशेषः। सदाशिवमञ्चफलकाय इत्यादिशिवलिङ्गपदेषु अत्र विष्णुलिङ्गपदानि योजनीयानि। अस्मिन् पीठे परां शक्तिं समावाह्य आवरणैस्सह समर्चयेत्। प्रथमं बिन्दुमध्ये ताक्ष्र्याधिरूढनारायणोरसि परां श्रियं समर्चयेत्। तत्प्रकारः — प्रथमं क्षिप ओं स्वाहा इत्यनेन ताक्ष्र्यमन्त्रेण ताक्ष्र्यं समभ्यर्च्य, तस्य स्कन्धोपरि ॐ नमो नारायणाय इत्यनेन मन्त्रेण नारायणं समर्च्य, तस्य वक्षस्स्थले परालक्ष्मीमूलेन समर्चयेत्। प्रथमं बिन्दौ परितः श्रां सर्वज्ञाम्बा श्रीपादुकां पूजयामि। श्रीं नित्यतृप्ताम्बा० श्रूं अनादिबोधाम्बा० श्रैं स्वतन्त्रशक्त्यम्बा० श्रौं अलुप्तशक्त्यम्बा० श्रः अनन्तशक्त्यम्बा० इत्याद्यङ्गशक्तीरभ्यर्च्य, पुनरपि बिन्दोर्बहिः त्रिकोणान्तराळे वक्ष्यमाणबिन्दूद्धारक्रमेण षोडश त्रिकोणानि संभाव्य तेषु षोडशकोणेषु पराषोडशाक्षरीशक्तीस्समभ्यर्चयेत्॥

तत्प्रकारः — श्रीं श्रियै नमः । सौः परायै नमः । क्लीं कामदायै नमः । ऐं ऐन्द्र्यै नमः । ह्रीं भुवनाधिपायै नमः । ओं आनन्दायै नमः । ह्रीं विभूतिदायै नमः । श्रीं कमलायै० सकलह्रीं कलायै० हसकहलह्रीं परमेश्वर्यै० कएई ल ह्रीं सरस्वत्यै० ह्रीं मायायै० ऐं वागीश्वर्यै क्लीं महामोहिन्यै० सौः महा-परायै० इति पञ्चदशत्रिकोणेषु प्रागादिक्रमेण समभ्यर्च्य, बिन्द्वाख्य मध्य-खण्डस्थ बिन्दुमध्ये मूलमन्त्रं समस्तमुच्चार्य, तदन्ते पराश्रियै नमः । इति पराश्रियं समर्च्य, श्रीचक्रमध्यत्रिकोणत्रिरेखासु श्रीं मित्रेशानन्दनाथ श्रीपादुकां पूजयामि । षष्ठीशानन्दनाथ० ओड्डीशानन्दनाथ० चर्यानन्दनाथ० लोपा-मुद्राम्बा० अगस्त्यानन्दनाथ० कालतापनानन्दनाथ० धर्माचार्यानन्दनाथ० मुक्तकेशीश्वरानन्दनाथ० दीपकलानन्दनाथ० विष्णुदेवानन्दनाथ० प्रभाकरदेवा-नन्दनाथ० तेजोदेवानन्दनाथ० मनोजवदेवानन्दनाथ० कल्याणदेवानन्दनाथ० शक्तिदेवानन्दनाथ० वासुदेवानन्दनाथ० श्रीरामानन्दनाथ० श्रीपादुकां पूजया-मीति त्रिरेखासु समभ्यर्च्य, विष्णुतार्क्ष्यब्रह्ममयीं श्रीपादुकां पूजयामीति मध्ये समर्चयेत् । मन्त्रादौ श्रीबीजं सर्वत्र योज्यम् ॥

बिन्दौ पुरतः सर्वानन्दमयचक्रस्वामिनिमहापरमश्रियै नमः । परापररहस्य-योगिन्यै नमः । महायोनिमुद्रायै नमः । इति समभ्यर्च्य महायोनिमुद्रां प्रदर्शयेत् । एताः परापररहस्ययोगिन्यः सर्वानन्दमये महाचक्रे बैन्दवे परब्रह्मस्वरूपिणि परामृतशक्तिस्वरूपिणि सर्वमन्त्रेश्वरि सर्वयन्त्रेश्वरि सर्वतन्त्रेश्वरि सर्वचक्रेश्वरि सर्वपीठेश्वरि सर्वयोगेश्वरि सर्वतत्त्वेश्वरि सर्ववागीश्वरि सर्वजगदुत्पत्तिमातृकाः समुद्राः ससिद्धास्सशक्तयः सायुधास्सवाहनाः सपरिवाराः सचक्रेश्वरीकाः सर्वोपचारैः संपूजितास्सन्तु नमः । इति पुष्पाञ्जलिं समर्प्य,

त्रिकोणकोणेषु सरस्वतीचतुराननाभ्यां नमः । शाम्भवीशम्भुभ्यां नमः । धरणीवराहाभ्यां नमः । इति प्रागादिकोणेषु अभ्यर्च्य, त्रिकोणस्य पुरतः सर्व-

सिध्दिप्रदायकचक्रस्वामिनिपराम्बायै नमः। रहस्यतरयोगिन्यै नमः। सर्व-बीजमुद्रायै नमः। इति समभ्यर्च्य, बीजमुद्रां प्रदर्श्य, एता रहस्यतर-योगिन्यः, सर्वसिद्धिप्रदायके चक्रे समुद्रा इत्यादि पुष्पाञ्जलिं समभ्यर्चयेत्। मूलमन्त्रमुक्त्वा बिन्दुस्थां परां देवीं समर्चयेत्। श्रीबीजं मन्त्रादौ सर्वत्र योज्यम्॥

अष्टकोणेषु, त्रिपुरसुन्दर्यम्बाश्रीपादुकां पूजयामि। सिद्ध-लक्ष्म्यम्बा०। मातङ्गेश्वर्यम्बा०। भुवनेश्वर्यम्बा०। वाराह्यम्बा०। अन्न-पूर्णाम्बा०। राज्यलक्ष्म्यम्बा०। पद्मावत्यम्बा०। तत्र त्रिपुरादिपूर्वादि-कोणेषु वाराह्याद्याग्नेयादिकोणेषु इत्यभ्यर्च्य, अष्टकोणस्य पुरतः-- सर्वरोग-हरचक्रस्वामिनी परसिद्धाम्बा० रहस्ययोगिन्यम्बा० खेचरीमुद्राम्बा० इत्यभ्यर्च्य खेचरीमुद्रां प्रदर्श्य, एता रहस्ययोगिन्यः सर्वरोगहरे चक्रे समुद्रा इत्यादिना पुष्पाञ्जलिं समर्चयेत्। मूलमन्त्रमुक्त्वा बिन्दुमध्ये परां देवीं समर्चयेत्। श्रीबीजं सर्वत्र मन्त्रादौ योज्यम्॥

अन्तर्दशारे-- रतिमन्मथाभ्यां नमः। वसुधाराशङ्खनिधिभ्यां नमः। लक्ष्मीवासुदेवाभ्यां नमः। कमलवासिनीसंकर्षणाभ्यां० मोहना प्रद्युम्नाभ्यां० वसुदाऽनिरुद्धाभ्यां० स्वर्णदास्वर्णाकर्षणभैरवाभ्यां० विभूतिमहागणपतिभ्यां० वसुमतीपद्मनिधिभ्यां० प्रीतिवसुन्धराभ्यां नमः। इति पूर्वादिक्रमेण समभ्यर्च्य, अन्तर्दशारस्य पुरतः सर्वरक्षाकरचक्रस्वामिनिपरामालिन्यम्बा० निगर्भयोगिन्यम्बा० सर्वमहांकुशमुद्राम्बा० इत्यभ्यर्च्य, महांकुशमुद्रां प्रदर्श्य, एता निगर्भयोगिन्यः सर्वरक्षाकरे चक्रे समुद्रा इत्यादि पूर्ववत् समभ्यर्च्य मूलमन्त्रमुक्त्वा बिन्दुमध्ये परादेवीं समर्चयेत्। श्रीबीजं सर्वत्र मन्त्रादौ योज्यम्॥

बहिर्दशारे -- ऋद्धितार्क्ष्याभ्यां नमः। समृद्धिहरिभ्यां० कान्ति-सुदर्शनाभ्यां० मदनावत्यापदुद्धारणाभ्यां० मदद्रवामहाशास्तृभ्यां० द्राविणी-कामराजाभ्यां० क्षोभिणीकन्दर्पाभ्यां बन्धिनीमन्मथाभ्यां० मोहिनीमकर-ध्वजाभ्यां० आकर्षणीमनोभवाभ्यां नमः। इति पूर्वादिक्रमेण समभ्यर्च्य,

बहिर्दशारस्य पुरतः सर्वार्थसाधकचक्रस्वामिनी पराश्रियम्बा० कुलोत्तीर्ण-योगिन्यम्बा० सर्वोन्मादिनीमुद्राम्बा० इति समभ्यर्च्य, उन्मादिनीमुद्रां प्रदर्श्य, एताः कुलोत्तीर्णयोगिन्यः सर्वार्थसाधके चक्रे समुद्रा इत्यादि पूर्ववत् समभ्यर्च्य, मूलमन्त्रमुक्त्वा बिन्दुमध्ये परां देवीं समर्चयेत्। श्रीबीजं मन्त्रादौ सर्वत्र योज्यम् ॥

चतुर्दशारे — रेणुकाम्बा० दुर्गाम्बा० भद्रकृत्याम्बा० वागीश्वर्यम्बा० नकुल्यम्बा० हसन्त्यम्बा० बालिकाम्बा० विमलाम्बा० कमलाम्बा० वन-मालिन्यम्बा० विभीषिकाम्बा० मालिकाम्बा० शाङ्कर्यम्बा० नवमालिकाम्बा० इति पूर्वादिक्रमेण समभ्यर्च्य चतुर्दशारस्य पुरतः सर्वसौभाग्यदायकचक्र-स्वामिनी परावासिन्यम्बा० संप्रदाययोगिन्यम्बा० सर्ववशीकरिणीमुद्राम्बा० इति समभ्यर्च्य वशीकरिणीमुद्रां प्रदर्शयेत् ॥ एतास्संप्रदाययोगिन्यः सर्वसौभाग्य-दायके चक्रे समुद्रा इत्यादि पूर्ववत् समभ्यर्च्य मूलमन्त्रमुक्त्वा बिन्दुमध्ये परां देवीं समर्चयेत् ॥ श्रीबीजं मन्त्रादौ सर्वत्र योज्यम् ॥

वसुदले — अणिमासिद्ध्यम्बा० लघिमासिद्ध्यम्बा० गरिमासिद्ध्यम्बा० महिमासिद्ध्यम्बा० ईशित्वसिद्ध्यम्बा० वशित्वसिद्ध्यम्बा० प्राप्तिसिद्ध्यम्बा० प्राकाम्यसिद्ध्यम्बा० इति प्रागादिक्रमेण संपूज्य, वसुदलस्य पुरतः सर्वसंक्षोभण-चक्रस्वामिनी परसुन्दर्यम्बा० गुप्ततरयोगिन्यम्बा० आकर्षिणीमुद्राम्बा० इति समभ्यर्च्य आकर्षणीमुद्रां प्रदर्शयेत् ॥ एता गुप्ततरयोगिन्यः सर्वसंक्षोभणकारके चक्रे समुद्रा इत्यादि पूर्ववत् समभ्यर्च्य मूलमन्त्रमुक्त्वा बिन्दुमध्ये परां देवीं समर्चयेत् । श्रीबीजं मन्त्रादौ सर्वत्र योज्यम् ॥

षोडशदले — कामेश्वर्यम्बा० भगमालिन्यम्बा० नित्यक्लिन्नाम्बा० भेरुण्डाम्बा० वह्निवासिन्यम्बा० महावज्रेश्वर्यम्बा० शिवदूत्यम्बा० त्वरिताम्बा० कुलसुन्दर्यम्बा० नित्याम्बा० नीलपताकाम्बा० विजयाम्बा० सर्वमङ्गलाम्बा०

ज्वालामालिन्यम्बा० [1]चित्राम्बा० महानित्याम्बा० इति पूर्वादिक्रमेण समभ्यर्च्य, षोडशदळस्य पुरतः सर्वाशापरिपूरकचक्रस्वामिनी परेश्वर्यम्बा० गुप्तयोगिन्यम्बा० द्राविणीमुद्राम्बा० इत्यभ्यर्च्य द्राविणीमुद्रां प्रदर्श्य, एता गुप्तयोगिन्यः सर्वाशापरिपूरके चक्रे समुद्रा इत्यादि पूर्ववत् समभ्यर्च्य मूलमन्त्रमुक्त्वा बिन्दुमध्ये परां देवीं समर्चयेत् । श्रीबीजं मन्त्रादौ सर्वत्र योज्यम् ॥

प्रथमचतुरश्रे-- श्रियै नमः । लक्ष्म्यै० वरदायै० विष्णुपत्न्यै० [2]वसुदेवायै० हिरण्यवर्णायै० स्वर्णस्रग्मालिन्यै० रजतस्रजायै० स्वर्णप्राकारायै० पद्मवासिन्यै० पद्महस्तायै० मुक्तालङ्कारशोभितायै० बिल्वप्रियायै० भूत्यै० विभूत्यै० ऋध्यै० समृध्यै० पुष्ट्यै० धनदायै० धनेश्वर्यै० श्रद्धायै० भोगिन्यै० भोगदायिन्यै० विधात्र्यै० सर्वेश्वर्यै० सर्वसौभाग्यदायिन्यै० ॥

द्वितीयचतुरश्रे – शाङ्कर्यै० ईशान्यै० इन्दुशेखरशक्त्यै० जगत्कुटुम्बिन्यै० अर्धनारीश्वरायै० अघोररूपिण्यै० हुतवहायै० अशन्यै० हालाहलधरायै० भूरिभारायै० शैव्यै० नारायण्यै० केशवायै० माधवायै० गोविन्दायै० [3] वैष्णव्यै० त्रिविक्रमायै० वामनायै० श्रीधरायै० हृषीकेशायै० विष्णुरञ्जनिकायै० पद्मोदरायै० कमलनयनायै० चतुर्मुख्यै० चतुराननशक्त्यै० चतुरश्रसुगेहिन्यै चतुरश्रसुगात्र्यै० चतुर्वर्गफलदायै० त्रयीशक्त्यै० त्रिमुखायै० त्र्यश्रायै० त्रिरेखायै० ॥

---

१ विचित्राम्बा इति ख–ङ पाठः ।

२ वसुप्रदायै० हिरण्यवर्णायै० स्वर्णस्रङ्मालिन्यै० रजतस्रजायै० स्वर्णगर्भायै० स्वर्णप्राकारायै० पद्मवासिन्यै० पद्मप्रियायै० पद्महस्तायै० मुक्तालङ्कारशोभितायै० चन्द्रप्रियायै० बिल्वप्रियायै० भूत्यै० प्रभूत्यै० विभूत्यै० ऋध्यै० समृध्यै० पुष्ट्यै० तुष्ट्यै० धनदायै० धनेश्वर्यै० श्रद्धायै० भोगिन्यै० भोगदायिन्यै० धात्र्यै० विधात्र्यै० इति ख, ग, घ, ङ मातृकापाठः ॥

३ वैष्णव्यै इत्यतः परं माधवायै० इति, ङ मातृकायामधिकः पाठः ।

तृतीयचतुरश्रे–इन्द्रादिलोकपालानर्चयेत् ॥ चतुर्द्वारेषु दमनकाय शलभाय गुग्गुलवे कुरण्डकाय इति संपूज्य, चतुरश्रस्य पुरतः त्रैलोक्यमोहन-चक्रस्वामिनी परांम्बा० प्रकटयोगिन्यम्बा० सर्वसंक्षोभिणीमुद्राम्बा० इति समभ्यर्च्य[1] बिन्दुमध्यस्थां परां देवीं समर्चयेत् ॥ श्रीबीजं सर्वत्र मन्त्रादौ योज्यम् ॥ एवं सृष्टिक्रमेण परासमर्चनं कृत्वा, पुनः चतुरश्रमारभ्य संहार-क्रमेण तत्तच्चक्रान्तरालेषु परां समर्चयेत् ॥ तत्प्रकारः — प्रथमचतुरश्रान्तराले असिताङ्गभैरवाय० रुरुभैरवाय० चण्डभैरवाय० क्रोधभैरवाय० उन्मत्तभैरवाय० कपालीभैरवाय० भीषणभैरवाय० संहारभैरवाय इति असिताङ्गाद्यष्टभैरवान् समभ्यर्च्य, श्रीबीजं मन्त्रादौ सर्वत्र योज्यम् ॥ द्वितीयचतुरश्रान्तराले ब्राह्मयाद्यष्टशक्तीस्समर्चयेत् । श्रीबीजं सर्वत्र मन्त्रादौ योज्यम् ॥

तृतीयचतुरश्रस्यान्तराळे — सर्वसंक्षोभिणीमुद्राम्बा० इत्यादि दशमुद्राः पूर्वादिक्रमेण समभ्यर्च्य, चतुरश्रस्य पुरतः त्रैलोक्यमोहनचक्रान्तराळचक्रस्वामिनी त्रिपुराम्बा० प्रकटयोगिन्यम्बा० सर्वसंक्षोभिणीमुद्राम्बा० इत्यभ्यर्च्य संक्षोभण-मुद्रां प्रदर्शयेत् ॥ बौद्धसमयविद्याधिष्ठानदेवतायै० तारांबायै० इत्यभ्यर्चयेत् ॥ समुद्रा इत्यादि पूर्ववत् समभ्यर्च्य मूलमन्त्रमुक्त्वा परां देवीं समर्चयेत् ॥ श्रीबीजं मन्त्रादौ सर्वत्र योज्यम् ॥

षोडशदळान्तराळे — कामाकर्षिण्यम्बा० इत्यादित्रिपुरापद्धतिवत् षोडश-शक्तीः समर्चयेत् । सर्वाशापरिपूरकचक्रान्तराळचक्रस्वामिनी त्रिपुरेश्वर्यम्बा० गुप्तयोगिन्यम्बा० सर्वविद्राविणीमुमुद्राम्बा० इत्यभ्यर्च्य द्राविणीमुद्रां प्रदर्शयेत् ॥ वैदिकसमयविद्याधिष्ठानदेवतायै गायत्र्यम्बायै इति समर्चयेत् ॥ समुद्रा इत्यादि

---

१ समभ्यर्च्य इत्यतः परं, सर्वसंक्षोभिणीमुद्रां प्रदर्शयेत् । एताः प्रकट-योगिन्यः त्रैलोक्यमोहनचक्रे समुद्रा इत्यादि पूर्ववत् समभ्यर्च्य मूलमन्त्रमुक्त्वा इति, ख, ग, घ मातृकासु अधिकः पाठः ।

पूर्ववत् समभ्यर्च्य मूलमन्त्रमुक्त्वा परां देवीं समर्चयेत् ॥ श्रीबीजं मन्त्रादौ सर्वत्र योज्यम् ॥

अष्टदळान्तराळे पूर्वादिचतुर्दिक्षु अनङ्गकुसुमादि(द्याः) आग्नेयादिकोणेषु अनङ्गरेखादि(द्याः) समर्चयेत् ॥ पुरतस्सर्वसंक्षोभणचक्रान्तराळचक्रस्वामिनी त्रिपुरसुन्दर्यम्बा० गुप्ततरयोगिन्यम्बा० आकर्षिणीमुद्रांबा० इत्यर्चयेत् । आकर्षणी मुद्रां प्रदर्शयेत् ॥ शैवसमयविद्याधिष्ठानदेवतास्वरूपाय शिवाय नमः । इत्यभ्यर्च्य समुद्रा इत्यादि पूर्ववत् समभ्यर्च्य मूलमन्त्रमुक्त्वा परां देवीं समर्चयेत् ॥ श्रीबीजं मन्त्रादौ सर्वत्र योज्यम् ॥

मन्वश्रान्तराळेः — सर्वसंक्षोभिण्यम्बादिचतुर्दशशक्तीः पूर्वादिक्रमेण समभ्यर्च्य पुरतः सर्वसौभाग्यदायकचक्रान्तराळचक्रस्वामिनी [1] त्रिपुरावासिन्यम्बा० संप्रदाययोगिन्यम्बा० सर्ववशीकरिणीमुद्राम्बा० इत्यभ्यर्चयेत् ॥ वशीकरिणीमुद्रां प्रदर्शयेत् ॥ सौरसमयविद्याधिष्ठानदेवतास्वरूपाय सूर्याय नमः ॥ समुद्रा इत्यादि पूर्ववत् समभ्यर्च्य मूलमन्त्रमुक्त्वा परां देवीं समर्चयेत् ॥ श्रीबीजं मन्त्रादौ सर्वत्र योज्यम् ॥

बहिर्दशारचक्रान्तराळे - सर्वसिद्धिप्रदाम्बादिदशशक्तीः समभ्यर्च्य, पुरतः सर्वार्थसाधकचक्रान्तराळचक्रस्वामिनी त्रिपुराश्रियम्बा० कुलोत्तीर्णयोगिन्यम्बा० सर्वोन्मादिनीमुद्राम्बा० इति समभ्यर्च्य उन्मादिनीमुद्रां प्रदर्शयेत् ॥ समुद्रा इत्यादि पूर्ववत् समभ्यर्च्य मूलमन्त्रमुक्त्वा परां देवीं समर्चयेत् ॥

अन्तर्दशारचक्रान्तराळे — सर्वज्ञाम्बादिदशशक्तीः समभ्यर्च्य, सर्वरक्षाकरचक्रान्तराळचक्रस्वामिनी त्रिपुरामालिन्यम्बा० निसर्गयोगिन्यम्बा० सर्वमहांकुशमुद्राम्बा० इति समर्चयेत् ॥ महांकुशमुद्रां प्रदर्श्य, वैष्णवसमयविद्याधिष्ठानदेवतास्वरूपाय नारायणाय नमः । समुद्रा इत्यादि पूर्ववत्

---

१ त्रिपुरवासिन्यम्बा इति घ, ङ पाठः ।

समभ्यर्च्य मूलमन्त्रमुक्त्वा परां देवीं समर्चयेत् ॥ श्रीबीजं मन्त्रादौ सर्वत्र योज्यम् ॥

वसुकोणान्तराले — वशिनीवाग्देवताम्बादि अष्टवाग्देवताः समभ्यर्च्य, सर्वरोगहरचक्रान्तरालचक्रस्वामिनी त्रिपुरासिद्ध्यम्बा० रहस्ययोगिन्यम्बा० खेचरीमुद्राम्बा० इति समभ्यर्च्य खेचरीमुद्रां प्रदर्श्य, शाक्तसमयविद्याधिष्ठानदेवतायै बालात्र्यक्षरस्वरूपिणीबालाम्बा० समुद्रा इत्यादि पूर्ववत् समभ्यर्च्य मूलमन्त्रमुक्त्वा परां देवीं समर्चयेत् ॥ श्रीबीजं मन्त्रादौ सर्वत्र योज्यम् ॥

त्रिकोणान्तराले — महाकामेश्वर्यम्बादि शक्तित्रयं समभ्यर्च्य सर्वसिद्धिप्रदायक चक्रान्तराल चक्रस्वामिनी त्रिपुराम्बा० रहस्यतरयोगिन्यम्बा० बीजमुद्राम्बा० इति समभ्यर्च्य बीजमुद्रां प्रदर्श्य समुद्रा इत्यादि पूर्ववत् समभ्यर्च्य मूलमन्त्रमुक्त्वा परां देवीं समर्चयेत् ॥ श्रीबीजं मन्त्रादौ सर्वत्र योज्यम् ॥

बिन्दुमध्ये — महातार्क्ष्यस्कन्धाधिरूढमहाविष्णुवक्षस्स्थलालयसर्वानन्दमय महापराश्रियै नमः ॥ सर्वानन्दमयचक्रस्वामिनी महापरात्रिपुरसुन्दर्यम्बा० महापरमश्रियम्बा० पुरतः परापररहस्ययोगिन्यम्बा० महायोगिनीमुद्राम्बा इत्यभ्यर्च्य योगिनीमुद्रां प्रदर्शयेत् ॥

बिन्दुमध्ये – महाराज्ञ्यम्बा० महाशक्त्यम्बा० महामहागुप्त्यम्बा० महामहानन्दाम्बा० महामहास्कन्दाम्बा० महामहामायाम्बा० महाश्रीचक्रनगरसाम्राज्ञी महापरा श्री श्रीपादुकां पूजयामि ॥ मूलदेवीं समभ्यर्च्य, धूपदीपनैवेद्यादीन् कृत्वा, प्रसन्नपूजां च कृत्वा पूजां समापयेत् ॥ एवं पराश्रीपूजाक्रमः ॥

अथ श्रीचक्रत्रिकोणमध्ये बिन्दूद्धार प्रकार प्रतिपादकश्लोका नित्याषोडशार्णवे प्रोक्ता लिख्यन्ते —

श्रीचक्रमध्ये त्र्यश्रान्तः तिर्यग्रेखात्रयं लिखेत् ।
आरभ्य कोणौ रेखायाः तृतीयस्यास्तथा पुनः ॥

त्रिकोणस्याद्यरेखान्तं तस्या एव तु पार्श्वयोः ।
तुरीयांशावशिष्टं तु व्यत्यासाद्विलिखेत्सुधीः ॥

रेखाद्वयं तदन्तौ तु प्रथमाश्रयोस्तु योजयेत् ।
मध्यमायास्तु रेखायां कोणयोर्युगळं पुनः ॥

त्रिकोणस्याद्यरेखाया मध्यभागेन योजयेत् ।
एवं विलिखिते चक्रं भवेत् षोडशकोष्ठकम् ॥

ऐं त्रिपुरादेवि विद्महे क्लीं कामेश्वरी च धीमहि । सौः तन्नः क्लिन्नः प्रचोदयात् ॥ इति त्रिपुरागायत्रीमन्त्रः[1] ॥

अथ प्रसिद्ध श्रीविद्यापञ्चदशाक्षरी मन्त्रप्रसङ्गात् उपासकभेदेन द्वादशविध श्रीविद्यामन्त्राश्च शास्त्रान्तरोक्तप्रकारेण लिख्यन्ते —

प्रथमं तावदुपासकानां नामानि लिख्यन्ते —

मनुं चन्द्रं कुबेरं च लोपामुद्रां च मन्मथम् ।
अगस्त्यं नन्दिकेशं च सूर्यं विष्णुं च षण्मुखम् ॥

शिवं दूर्वाससं चादौ क्रमेणान्ते समर्चयेत् ।

अथ क्रमेण तत्तन्मन्त्रोद्धारश्लोका लिख्यन्ते—

मादनं शिवशक्तिं च बिन्दुमालिनिसंस्थितम् ।
ऐन्द्रस्थं भुवनेशी च वाग्भवं प्रथमं भवेत् ॥

---

१ महादेव्यै च विद्महे विष्णुपत्न्यै च धीमहि । तन्नो लक्ष्मीः प्रचोदयात् । इति ख, ग, घ मातृकासु अधिकः पाठः ।

महाघोषं सुखीशक्तिबिन्दुमालिनिशक्रदम् ।
भुवनेशीयुतं विद्यात् द्वितीयं कामदं भवेत् ॥

शान्तान्तं कामशक्ती च चतुर्थस्वरमैन्द्रकम् ।
भुवनेशीयुतं प्रोक्तं मनुविद्या च सुन्दरि ॥

अस्यार्थः— मदनः ककारः । शिवः सकारः । शक्तिः एकारः । बिन्दुमालिनी ईकारः । ऐन्द्रः लकारः । भुवनेशी ह्रींकारः । अयं वाग्भवः प्रथमः खण्डः ॥ महाघोषो हकारः । सुखी ककारः । शक्तिः एकारः । बिन्दुमालिनी ईकारः । शक्रः लकारः । भुवनेशी ह्रींकारः ॥ (इति) द्वितीयः कामदः खण्डः । शान्तान्तः सकारः । कामः ककारः । शक्तिः एकारः । चतुर्थस्वरः ईकारः । ऐन्द्रः लकारः । भुवनेशी ह्रींकारः ॥ (इति तृतीयः खण्डः) इयं मनुनोपासिता विद्या ॥ कसएईलह्रीं हकएईलह्रीं सकएईलह्रीं इत्यष्टादशाक्षरो मनुः ॥ १ ॥

शान्तान्तं च महाघोषं मादनं शक्तिसंयुतम् ।
बिन्दुमालिनिशक्रस्थं भुवनेशीयुतं शिवे ॥

शक्तिं शिवं कामघोषं शक्तियुक्तं तथैव च ।
बिन्दुमालिनिशक्रस्थं भुवनेशी मनोभवम् ॥

शिवशक्तिमदं शक्तिचतुर्थस्वरमैन्द्रकम् ।
भुवनेशीयुतं विद्याच्चान्द्रं त्रैपुरमुच्यते ॥

अस्यार्थः — शान्तान्तः सकारः । महाघोषः हकारः । मदनः ककारः । शक्तिः एकारः । बिन्दुमालिनी ईकारः । शक्रः लकारः । भुवनेशी ह्रींकारः । इति प्रथमः खण्डः ॥ शक्तिः हकारः । शिवः सकारः । कामः ककारः । घोषः हकारः । शक्तिः एकारः । बिन्दुमालिनी ईकारः । शक्रः लकारः ।

भुवनेशी ह्रींकारः। इति द्वितीयखण्डः॥ शिवो हकारः। शक्तिः सकारः। मदनः ककारः। शक्तिरेकारः। चतुर्थस्वर ईकारः। ऐन्द्रः लकारः। भुवनेशी ह्रींकारः। इति चन्द्रोपासिता विद्या॥ सहकएईलह्रीं हसकहएईलह्रीं हसकएईलह्रीं॥ इति द्वात्रिंशत्यक्षरो मन्त्रः॥ २॥

महाघोषं शक्तियुक्तं मादनं शक्तिसंयुतम्।
चतुर्थस्वरशक्रस्थं भुवनेशी च वाग्भवम्॥

शिवं शक्तिं मादनं च शिवशक्तिं तथैव च।
महामायां शक्रयुतं भुवनेशीं मनोभवम्॥

शक्तिं शिवं कामशक्तिं महामायासुसंयुतम्।
शक्रस्थं भुवनेशी च कौबेरो मूलविद्यया॥

अस्यार्थः — महाघोषो हकारः। शक्तिः सकारः। मदनः ककारः। शक्तिः एकारः। चतुर्थस्वरः ईकारः। शक्रः लकारः। भुवनेशी ह्रींकारः। इति वाग्भवः प्रथमः खण्डः॥ शिवो हकारः। शक्तिः सकारः। मदनः ककारः। शिवो हकारः। शक्तिः एकारः। महामाया ईकारः। शक्रः लकारः। भुवनेशी ह्रींकारः॥ इति द्वितीयो मनोभवखण्डः॥ शक्तिस्सकारः। शिवो हकारः। कामः ककारः। शक्तिरेकारः। महामाया ईकारः। शक्रो लकारः। भुवनेशी ह्रींकारः। इयं कुबेरोपासिता विद्या॥ ह स क ए ई ल ह्रीं ह स क ह ए ई ल ह्रीं स ह क ए ई ल ह्रीं॥ इति द्वात्रिंशत्यक्षरो मन्त्रः॥ ३॥

मदनं शक्तियुक्तं च बिन्दुमालिनिशक्रदम्।
भुवनेशीयुतं विद्यात् वाग्भवं प्रथमं भवेत्॥

महाघोषं तथा शक्तिं मादनं शिवसंयुतम्।
शक्रस्थं भुवनेशीं च द्वितीयं कामसंभवम्॥

शक्तिपूर्वं महाघोषं शक्तिवैं मादनं तथा ।
ऐन्द्रस्थं भुवनेशीं च लोपामुद्रा च सुन्दरि ॥

एवं त्रैपुरविद्यायाः सहवर्जन्तु मान्मथम् ।

अस्यार्थः — मदनः ककारः । शक्तिः एकारः । बिन्दुमालिनी ईकारः । शक्रः लकारः । भुवनेशी ह्रींकारः । इति वाग्भवः प्रथमः खण्डः ॥ महाघोषः हकारः । शक्तिः सकारः । मदनः ककारः । शिवः हकारः । शक्रो लकारः । भुवनेशी ह्रींकारः । इति मन्मथखण्डः ॥ शक्तिः सकारः । महाघोषो हकारः । शक्तिः सकारः । मदनः ककारः । ऐन्द्रः लकारः । भुवनेशी ह्रींकारः ॥ इति लोपामुद्रोपासिता विद्या ॥ कएईलह्रीं हसकहलह्रीं सहसकलह्रीं ॥ इति सप्तदशार्णो मनुः ॥ ४ ॥

तत्र सहवर्जन्तु मान्मथं इत्युक्त्या अन्त्यखण्डे सकारहकारवर्जितं । अयमेव पञ्चदशाक्षरो मन्त्रः ॥ इयं मन्मथोपासिता विद्या ॥ ५ ॥

महाघोषं शक्तियुतं मदनं शक्रसंयुतम् ।
भुवनेशीयुतं विद्यात्प्रथमं वाग्भवं भवेत् ॥

महाघोषं शक्तियुक्तं मादनं घोषशक्रदम् ।
भुवनेशीयुतं विद्यात् द्वितीयं कामदं भवेत् ॥

शक्ति मादनशक्रस्थं भुवनेशीयुतं परम् ।
मुनिना साधिता विद्या महात्रिपुरसुन्दरि ॥

अस्यार्थः — महाघोषो हकारः । शक्तिः सकारः । मदनः ककारः । शक्रो लकारः । भुवनेशी ह्रींकारः । इति प्रथमो वाग्भवखण्डः ॥ महाघोषो हकारः । शक्तिस्सकारः । मदनः ककारः । घोषः हकारः । शक्रो लकारः । भुवनेशी ह्रींकारः ॥ इति द्वितीयः मन्मथखण्डः ॥ शक्तिस्सकारः । मदनः

ककारः। शक्रः लकारः। भुवनेशी ह्रींकारः। इयमगस्त्योपासिता विद्या॥ इसकलह्रीं हसकहलह्रीं सकलह्रीं इति पञ्चदशाक्षरो मन्त्रः॥ ६॥

चान्द्रं शक्ति महामायां शक्रस्थं भुवनेश्वरी।
शिवकामं घोषकामं शक्रस्थं भुवनात्मकम्॥

शक्तिकामं शक्रयुतं भुवनेशीमहामनुम्।
साधिता नन्दिना विद्या त्रैपुरं परिकीर्तितम्॥

अस्यार्थः — चान्द्रं सकारः। शक्तिः एकारः। महामाया ईकारः। शक्रः लकारः। भुवनेशी ह्रींकारः। शिवो हकारः। कामः ककारः। घोषो हकारः। कामः ककारः। शक्रः लकारः। भुवनात्मकं ह्रींकारः॥ शक्तिस्सकारः। कामः ककारः। शक्रो लकारः। भुवनेशी ह्रींकारः॥ इयं नन्दिकेशोपासिता विद्या॥ सएईलह्रीं हकहकलह्रीं सकलह्रीं (इति) पञ्चदशाक्षरो मन्त्रः॥ ७॥

शिवशक्ति तथा कामं शक्रस्थं भुवनेश्वरी।
शक्ति च शिवकामस्थं शक्रदं भुवनेशिकम्॥

शक्ति कामं महाघोषं शक्तियुक्तमतः परम्।
भुवनेशीयुतं विद्यात् सौरसाधितमुच्यते॥

अस्यार्थः — शिवो हकारः। शक्तिः सकारः। कामः ककारः। शक्रो लकारः। भुवनेशी ह्रींकारः। शक्तिः सकारः। शिवो हकारः। कामः ककारः। शक्रो लकारः। भुवनेशी ह्रींकारः। शक्तिः हकारः। कामः ककारः। महाघोषः हकारः। शक्तिः सकारः। भुवनेशी ह्रींकारः॥ इयं सूर्योपासिता विद्या॥ हसकलह्रीं सहकलह्रीं हकहसह्रीं इति पञ्चदशाक्षरोयं मन्त्रः॥८॥

महाघोषं शक्तिकामं शक्रस्थं भुवनाधिपम् ।
शिवशक्ति कामघोषं शक्रं भुवननायकम् ॥

चन्द्रं कामयुतं शक्रं भुवनेशी ततः परम् ।
शक्ति शिवं कामयुतं शक्रं भुवननायकम् ॥

शक्ति शिवं कामशिवं शक्रं भुवननायकम् ।
शक्ति शिवं शक्तिकामं शक्रस्थं भुवनेश्वरी ॥

एवं षट्पदविद्यायाः चक्रपाणिस्तु साधकः ।

अस्यार्थः — महाघोषो हकारः । शक्तिस्सकारः । कामः ककारः । शक्रो लकारः । भुवनाधिपः ह्रींकारः । शिवः सकारः । शक्तिः एकारः । कामः ककारः । घोषः हकारः । शक्रः लकारः । भुवननायकः ह्रींकारः । चन्द्रः सकारः । कामः ककारः । शक्रः लकारः । भुवनेशी ह्रींकारः । शक्तिः सकारः । शिवः हकारः । कामः ककारः । शक्रः लकारः । भुवन-नायकः ह्रींकारः । शक्तिः सकारः । शिवः हकारः । कामः ककारः । शिवः हकारः । शक्रः लकारः । भुवननायकः ह्रींकारः । शक्तिः सकारः । शिवो हकारः । शक्तिः एकारः । कामः ककारः । शक्रः लकारः । भुवनेशी ह्रींकारः ॥ इयं विष्णूपासिता विद्या ॥ हसकलह्रीं सएकहलह्रीं सकलह्रीं सहकलह्रीं सहकहलह्रीं सहएकलह्रीं ॥ द्वात्रिंशदक्षरोयं मन्त्रः ॥ ९ ॥

महाघोषं शक्तिकामं शक्रं भुवननायकम् ।
आकाशशक्तिकामस्थं सकलं भुवनेश्वरी ॥

शक्तिघोषं मादघोषं शक्रस्थं भुवनाधिपम् ।
एवं त्रैपुरविद्यायाः स्कन्दानुष्ठानमेव च ॥

अस्यार्थः — महाघोषो हकारः । शक्तिस्सकारः । कामः ककारः । शक्रः लकारः । भुवननायकः ह्रींकारः । आकाशो हकारः । शक्तिस्सकारः । कामः ककारः । सकलं सकारश्च ककारश्च लकारश्च । भुवनेश्वरी ह्रींकारः । शक्तिः सकारः । घोषो हकारः । मादः ककारः । घोषः हकारः । शक्रः लकारः । भुवनाधिपः ह्रींकारः ॥ इयं षण्मुखोपासिता विद्या ॥ हसकलह्रीं हसकसकलह्रीं सहकहलह्रीं । अष्टादशाक्षरो मन्त्रः ॥ १० ॥

उद्धारं दशविद्याया उक्तं त्रिपुरसुन्दरि ।
अथान्ये संप्रवक्ष्यामि तवाद्ये हि त्वदात्मिके ॥

रहस्यानां रहस्यन्ते शृणु विद्ये मम प्रिये ।
एका मयार्चिता देवि अन्या दूर्वाससार्चिता ॥

व्योमार्णं शक्तिकामस्थं शक्रं भुवननायकम् ।
शिवशक्तिं कामशिवं शक्रस्थं भुवनेश्वरी ॥

शक्तिं च कामशक्रस्थं भुवनेशी ततः परम् ।
घोषं शक्तिं मदं शक्रं घोषं शक्तिमदं शिवम् ॥

शक्रं सकलसंयुक्तं भुवनेशी ततः परम् ।
एवं तुरीयविद्यायाः त्रिपुरेति शिवार्चिता ॥

अस्यार्थः — व्योमार्णो हकारः । शक्तिः सकारः । कामः ककारः । शक्रः लकारः । भुवनेशी ह्रींकारः । शिवो हकारः । शक्तिः सकारः । कामः ककारः । शिवो हकारः । शक्रः लकारः । भुवनेशी ह्रींकारः । शक्तिः सकारः । कामः ककारः । शक्रः लकारः । भुवनेशी ह्रींकारः । घोषः हकारः । शक्तिः सकारः । मदः ककारः । शक्रो लकारः । घोषो हकारः । शक्तिः सकारः । मदः ककारः । शिवः हकारः । शक्रः लकारः ।

सकलसंयुक्तं सकारश्च ककारश्च लकारश्च । भुवनेशी ह्रींकारः । इयं शिवोपासिता विद्या ॥ हसकलह्रीं हसकहलह्रीं सकलह्रीं हसकल हसकहल सकलह्रीं ॥ अयं चतुर्थः खण्डः । अष्टाविंशत्यक्षरोयं मन्त्रः ॥ ११ ॥

मदनं शक्तियुक्तं च तुरीयं लहरीयुतम् ।
शिवं मदनघोषं च लहरीसंयुतात्मकम् ॥

चान्द्रं मादनसंघोषं लहरीसंयुतं भवेत् ।
एवं महामनुं विद्यात् दुर्वासोनुष्ठितं भवेत् ॥

अस्यार्थः — मदनः ककारः । शक्तिः एकारः । तुरीयं ईकारः । लहरीयुतं लकारश्च ह्रींकारश्च । शिवो हकारः । मदनः ककारः । घोषो हकारः । लहरीसंयुतात्मकं लकारश्च ह्रींकारश्च । चन्द्रः सकारः । मदनः ककारः । घोषो हकारः । लहरीसंयुतं लकारश्च ह्रींकारश्च । इयं दुर्वाससोपासिता विद्या ॥ कएईलह्रीं हकहलह्रीं सकहलह्रीं पञ्चदशार्णो मन्त्रः ॥ १२ ॥ इति त्रिपुराद्वादशभेदाः ॥

अथ श्रीविद्याया अक्षरस्तोत्रमपि प्रसङ्गात् लिख्यते —

कल्याणवृष्टिभिरिवामृतपूरिताभिः
　लक्ष्मीस्वयंवरणमङ्गळदीपिकाभिः ।
सेवाभिरम्ब तव पादसरोजमूले
　नाकारि किं मनसि भाग्यवतां जनानाम् ॥ १ ॥

एतावदेव जननि स्पृहणीयमास्ते
　त्वद्वन्दनेषु सलिलस्थगिते च नेत्रे ।
सान्निध्यमुद्यदरुणाम्बुजसोदरस्य
　त्वद्विग्रहस्य परया सुधयाऽऽप्लुतस्य ॥ २ ॥

ईशित्वभावकलुषाः कति नाम सन्ति
ब्रह्मादयः प्रतिभवं प्रळयाभिभूताः ।
एकस्स एव जगति स्थिरसिद्धिरास्ते
यः पादयोस्तव सकृत्प्रणतिं करोति ॥ ३ ॥

लब्ध्वा सकृत् त्रिपुरसुन्दरि तावकीनं
कारुण्यकन्दळितकान्तिभरं कटाक्षम् ।
कन्दर्पभावसुभगाः खलु भक्तिभाजः
संमोहयन्ति तरुणीर्भुवनत्रयेऽपि ॥ ४ ॥

ह्रींकारमेव तव नाम गृणन्ति वेदाः
मातस्त्रिकोणनिलये त्रिपुरे त्रिणेत्रे ।
यत्संस्मृतौ यमभटाभिभवं विहाय
दीव्यन्ति नन्दनवने सह लोकपालैः ॥ ५ ॥

हन्तुः पुरामधिगळं परिपीयमानः
क्रूरः कथं च भविता गरळस्य वेगः ।
नाश्वासनाय यदि मातरिदं तवार्धं
देहस्य शश्वदमृताप्लुतशीतळस्य ॥ ६ ॥

सर्वज्ञतां सदसि वाक्पटुतां प्रसूते
देवि त्वदंघ्रिसरसीरुहयोः प्रणामः ।
किञ्च स्फुरन्मुकुटमुज्ज्वलमातपत्रं
द्वे चामरे च महतीं वसुधां ददाति ॥ ७ ॥

कल्पद्रुमैरभिमतप्रतिपादनेषु
कारुण्यवारिधिभिरम्ब भवत्कटाक्षैः ।

आलोकय त्रिपुरसुन्दरि मामनाथं
त्वय्येव भक्तिभरितं त्वयि बद्धतृष्णम् ॥ ८ ॥

हन्तेतरेष्वपि मनांसि निधाय चान्ये
भक्तिं वहन्ति किल पामरदैवतेषु ।
त्वामेव देवि मनसाहमनुस्मरामि
त्वामेव नौमि शरणं जननि त्वमेव ॥ ९ ॥

लक्ष्येषु सत्स्वपि कटाक्षनिरीक्षितानां
आलोकय त्रिपुरसुन्दरि मां कथञ्चित् ।
नूनं मया तु सदृशः करुणैकपात्रं
जातो जनिष्यति जनो न च जायते वा ॥ १० ॥

ह्रीं ह्रीमिति प्रतिदिनं जपतां तवाख्यां
किन्नाम दुर्लभमिह त्रिपुराधिवासे ।
माला किरीट मदवारण माननीयान्
तान्सेवते वसुमती स्वयमेव लक्ष्म्या ॥ ११ ॥

संपत्कराणि सकलेन्द्रियनन्दनानि
साम्राज्यदाननिरतानि सरोरुहाक्षि ।
त्वद्वीक्षितानि दुरिताहरणोद्यतानि
मामेव मातरनिशं कलयन्तु नान्यम् ॥ १२ ॥

कल्पोपसंहृतिषु कल्पितताण्डवस्य
देवस्य खण्डपरशोः परभैरवस्य ।
पाशांकुशैक्षवशरासनपुष्पबाणा
सा साक्षिणी विजयते तव मूर्तिरेका ॥ १३ ॥

लग्नं सदा भवतु मातरिदं तवार्धं
तेजः परं बहुलकुंकुमपङ्कशोणम् ।
भास्वत्किरीटममृतांशुकलावतंसं
मध्ये त्रिकोणनिलयं परमामृतार्द्रम् ॥ १४ ॥

ह्रींकारमेव तव नाम तदेव रूपं
त्वन्नाम दुर्लभमिह त्रिपुरे गृणन्ति ।
त्वत्तेजसा परिणतं वियदादिभूतं
सौख्यं तनोतु सरसीरुहसंपदाद्यैः ॥ १५ ॥

ह्रींकारत्रयसंपुटेन महता मन्त्रेण सन्दीपितं
स्तोत्रं यः प्रतिवासरं तव पुरो मातर्जपेत् मन्त्रवित् ।
तस्य क्षोणिभुजो वहन्ति(भवन्ति)वशगाः लक्ष्मीः चिरस्थायिनी
वाणी निर्मलसूक्तिभारभरिता जागर्ति दीर्घं वयः ॥ १६ ॥

इति विरचितमेतत्त्रैपुरस्तोत्रमात्रं
प्रकटितपरमार्थं योगिभिर्योगमृग्यम् ।
सकलदुरितरोगध्वंसनानन्यकार्यं
प्रथितजनविधानं सेव्यतां भक्तियुक्तैः ॥ १७ ॥

बन्धूकाभां त्रिणेत्रां शिशिररुचिकलाशेखरां रक्तवस्त्रां
अत्यन्तोत्तुङ्गपीनस्तनभरनमितां यौवनारम्भरूढाम् ।
सर्वालङ्कारदीप्तां सरसिजनिलयां मन्त्रसंक्रान्तमूर्तिं
देवीं पाशांकुशाढ्यामभयवरकरां विश्वयोनिं नमामि ॥ १८ ॥

अथ श्रीविद्यामन्त्रप्रसङ्गात् विद्यासहितगोपालकमन्त्रोपि लिख्यते —

श्रीनारद ऋषिः । गायत्रीछन्दः । श्रीकृष्णो देवता ॥ श्रीं ह्रीं क्लीं

हृत् । कृष्णाय शिरः । गोविन्दाय शिखा । गोपीजन कवचम् । वल्लभाय नेत्रम् । स्वाहा अस्त्रम् । पुनः विद्याया अङ्गऋष्यादीन्पूर्ववत् कृत्वा ॥

ध्यानम् —

अर्धं शोणमथार्धमम्बुदनिभं बद्धं ललाटे स्रजा
बर्हाकल्पितया विलाससदनं स्त्रीपुंमयं वैष्णवम् ।
हस्तैराद्दतवेणुनादसृणिसत्पाशेक्षुचापाशुगं
वस्त्वत्यद्भुतमस्तु मे हृदि सदा गोपालचूडामणिः ॥

ध्यानान्तरम् —

क्षीराम्भोनिधि मध्यसंस्थितलसद्द्वीपस्थकल्पद्रुमो-
द्यानोद्यन्मणि मण्डपान्तरुदित श्रीपीठपाथोजगम् ।
दोर्दण्डैररिशङ्खवेणुश्रृणिसत्पाशेक्षुचापाशुगान्
बिभ्राणं कमलामहीविलसितं वन्देरुणाङ्गं हरिम् ॥

श्रीं ह्रीं क्लीं कएईलह्रीं कृष्णाय हसकहलह्रीं गोविन्दायं सकलह्रीं गोपीजनवल्लभाय कएईलह्रीं हसकहलह्रीं सकलह्रीं स्वाहा ॥ इति मन्त्रः ॥ ऐश्वर्यफलप्रधानोयं मन्त्रः ॥ लक्षजपः ॥ आज्येन पायसेन च दशांशं होमः ॥ सप्तदशपटले वक्ष्यमाण गोपालकविंशत्यक्षरी विधानोक्तवत् पूजादिकम् ॥

अथास्य यन्त्रम् —

बिन्दुत्रिकोणं षट्कोणं वृत्तमष्टदलाम्बुजम् ।
स्वरकेसरसंयुक्तं त्रिवृत्तं भूपुरद्वयम् ॥

चतुर्द्वारसमायुक्तं वज्राष्टकविभूषितम् ।
बिन्दौ मायां लिखेद्वह्नि त्रिकोणेषु रमां स्मरम् ॥

प्रणवं तत्कपोलेषु साध्याख्यं कर्मगर्भितम् ।
षट्कोणेषु रमामाये लेख्ये अष्टदळाम्बुजे ॥

गोपालाष्टादशार्णान्वै त्रित्रिशो विलिखेद्दळे ।
देव्याः पञ्चदशार्णे तु सप्तवर्णास्तथा लिखेत् ॥

त्रित्रिशोऽन्त्यदळेऽन्त्यन्तु विलिखेच्च यथाक्रमम् ।
मिळित्वा वा लिखेदेवमन्त्यमन्त्यदळे लिखेत् ॥

केसरेषु स्वरा लेख्याः प्रादक्षिण्यक्रमेण तु ।
वृत्तत्रयस्य वीथ्योस्तु मारमालामनुं लिखेत् ॥

भूगृहद्वयसन्धौ तु मातृकार्णान् क्रमाल्लिखेत् ।
लक्ष्मीं मायां लिखेद्द्वारपार्श्वयोस्तु क्रमाद्बुधः ॥

पाशांकुशे दिग्विदिक्षु विलिखेच्चक्रबाह्यतः ।
वाराहं नारसिंहं च कपोलेषु समालिखेत् ॥

एतत् त्रिपुरसुन्दर्या यन्त्रं त्रैलोक्यमोहनम् ।
सर्वसंपत्करं नृणां सद्यस्सिद्धिकरं परम् ॥

गोपालमिळितं ह्येतत् गोपनीयं प्रयत्नतः ।
राज्यदं राज्यकामानां वश्यदं वश्यमिच्छताम् ॥

सुतार्थिनां च सुतदं रोगिणां रोगशान्तिदम् ।
दरिद्रोपि धनाध्यक्षो भवेद्यन्त्रप्रपूजनात् ॥

हाटके राजते पट्टे लिखित्वा संप्रपूज्य च ।
प्राणस्थापनपूर्वन्तु धारयेद्यन्त्रमुत्तमम् ॥

सर्वान्कामानवाप्नोति राजवत्पूज्यते जनैः ।
राजानो वशतां यान्ति नरा नार्यस्तथोरगाः ॥

गन्धर्वा यक्षरक्षांसि पिशाचा डाकिनीग्रहाः ।
शाकिन्यो लाकिनश्चैव दृष्ट्वा तं भैरवग्रहाः ॥

यन्त्रधारिणमन्ये ये नमस्कृत्वा तु दूरतः ।
देशं विसृज्य धावन्ति तं तु नत्वा पुनः पुनः ॥

अस्यार्थः — प्रथमं त्रिकोणं विलिख्य तन्मध्ये बिन्दुं विलिख्य, तन्मध्ये भुवनेशीं विलिख्य, त्रिषु कोणेषु श्रीबीजं विलिख्य, कोणकपोलेषु कामबीजं प्रणवं च साध्यनामगर्भितं पार्श्वद्वयविभागेन विलिखेत् । पुनस्तद्बहिः षट्कोणं विलिख्य, तस्य प्रागग्रकोणत्रितये रमाबीजं इतरत्रितये भुवनेशीं च विलिखेत् । पुनस्तद्बहिरष्टदळपद्मं विलिख्य, तत्केसरेषु स्वरद्वन्द्वं विलिख्य, पुनः षट्सु दळेषु कामबीजादिगोपालाष्टादशवर्णान् त्रिशः त्रिशो विलिखेत् । अवशिष्टदळद्वये तु श्रीविद्यापञ्चदशार्णे आदित आरभ्य सप्तवर्णान् त्रिशस्त्रिशो विलिख्य अवशिष्टमेकमप्यन्त्ये दळे विलिखेत् । इतरवर्णानां तेष्वेवान्तर्भूतत्वात् न लेखनविधिः पृथगुक्तः ॥

अथवा मन्त्रद्वयं मिळित्वा विलिखेत् ॥ तत्प्रकारः — श्रीबीजभुवनेशीबीजद्वयं च श्रीविद्यायाः द्वितीयावृत्तिं च विहाय मूलमन्त्रे कामबीजादित्रयस्त्रिंशद्वर्णान् दळेषु चतुरश्चतुरो विलिखेत् । अवशिष्टमेकमपि वर्णमन्त्यदळे विलिखेत् । तद्बहिः वृत्तत्रयं विलिख्य तद्वीथ्योस्तु मारमालामन्त्रेण चतुश्शब्दान् मारगायत्र्या च स्वयंवराविधाने वक्ष्यमाणया संवेष्ट्य तद्बहिश्चतुरश्रद्वयं विलिख्य, तद्वीथ्यां मातृकावर्णैः संवेष्ट्य चतुरश्रस्य चतुर्द्वारेषु पार्श्वयोः श्रीबीजं च भुवनेशीं च विलिख्य, चतुरश्रस्य दिक्षु आमिति

पाशाक्षरं विदिक्षु क्रोमिति अंकुशाक्षरं च विलिख्य [1]चक्रस्य पूर्वतः बहिश्चतुरश्रकोणपार्श्वयोः ह्रूमिति वाराहबीजं च क्ष्रौमिति नारसिंहबीजं च विलिखेत् ॥ चतुरश्ररेखासु वज्राद्यायुधाष्टकं च विलिखेत् ॥ इति ॥

अथास्य न्यासविधिः —

सव्यं पादमुपादाय दक्षिणोपरि विन्यसेत् ।
तथैव दक्षिणं पादं सव्यस्योपरि विन्यसेत् ॥

विष्टभ्य कट्युरोग्रीवा नासाग्रन्यस्तलोचनः ।
पद्मासनं भवेदेतत् सर्वेषामपि पूजितम् ॥

इति श्लोकोक्तेन पद्मासनेनोपविश्य पुनर्गुरुगणपतिवन्दनादीन् पूर्वं सप्तमपटलादावुक्तेन प्रकारेण कृत्वा, भूतशुद्धिं तत्रैवोक्तप्रकारेण कृत्वा, हंस इत्युच्चार्य, मूलाधारस्थजीवं सुषुम्नया द्वादशान्तं नयन्, मूलेन व्याप्य, अमिति षोडशवारं दक्षिणनासिकया [2]विरेच्य, उमिति द्वादशवारं वामनासिकया पूरयित्वा, मकारपूर्वकविद्यासहितमन्त्रराजं द्वादशवारमावर्तयन् कुम्भकं कुर्यात् । एवं प्राणायामत्रयं कृत्वा, वैष्णवपीठन्यासं सप्तदशे पटले वक्ष्यमाणप्रकारेण कृत्वा, मानसपूजां च प्राङ्मातृकाविधाने उक्तप्रकारेण कृत्वा, मूलमन्त्रं प्रतिलोममुच्चार्य तेजोरूपतामापाद्य, तत्तेजः करतले दक्षिणनासिकाश्वासमार्गेण निपात्य करन्यासं कुर्यात् ॥ तत्प्रकारश्च उपरिष्टात् सप्तदशपटले गोपालकाष्टादशाक्षरीविधाने वक्ष्यते ॥ अत्र तु दशाक्षरीवर्णैकैकेन सह विंशत्यक्षर्याः पूर्वार्धवर्णैकैकमपि क्रमेण पुरतो योजयेदिति विशेषः ॥ पुनरपि, विंशत्यक्षरीमन्त्रषडङ्गैरपि तत्रैवोक्तप्रकारेणैव करन्यासं कृत्वा, पुनः श्रीविद्याषडङ्गैरपि प्रागुक्तैः करन्यासं कृत्वा, वैष्णवषडध्वन्यासं कुर्यात् ॥ तत्प्रकारो लिख्यते —

---

१ चक्रस्य सर्वतः बहिः इति ख, मातृकापाठः ।

२ विरचय्य इति ख, ग, घ पाठः ।

स पुनः षड्विधः कला तत्व भुवन वर्ण पद मन्त्रभेदेन । तत्र प्रथमं कलान्यासो लिख्यते —

हौं नमः पराय शान्त्यतीतकलात्मने नमः । ह्यैं नमः पराय शान्तिकलात्मने नमः । ह्रूं नमः पराय विद्याकलात्मने नमः । ह्रीं नमः पराय प्रतिष्ठाकलात्मने नमः । ह्रां नमः पराय निवृत्तिकलात्मने नमः । (इति) मूर्धास्यहृदयगुह्यपादेषु न्यसेत् ॥

पुनस्तत्वन्यासः ॥ तत्प्रकारस्तु उपरिष्टात् सप्तदशपटले वक्ष्यते । पुनर्भुवनन्यासः — ॐ भूर्लोकाय नमः । ॐ भुवर्लोकाय नमः । ॐ सुवर्लोकाय नमः । ॐ महोलोकाय नमः । ॐ जनोलोकाय नमः । ॐ तपोलोकाय नमः । ॐ सत्यलोकाय नमः । एतैर्नाभ्युदरहृत्कण्ठानन-भ्रूमध्यमूर्धसु न्यसेत् ॥ अं अतलाय नमः । अं वितलाय नमः । अं सुतलाय नमः । अं नितलाय नमः । अं महातलाय नमः । अं रसातलाय नमः । अं पातालतलाय नमः । एतैः कट्यूरुजानुजङ्घागुल्फपदतदग्रेषु विन्यसेत् ॥

पुनर्वर्णन्यासं कुर्यात् ॥ स तु लिपिन्यासः । काननवृत्तेत्याद्युक्त-प्रकारः ॥ पुनः पदन्यासं कुर्यात् ॥ ॐ ह्रीं जाग्रत्पदात्मने नमः । हंसः स्वप्नपदात्मने० सोहं सुषुप्तिपदात्मने० स्वाहा तुरीयपदात्मने नमः । (इति) कट्यादिपादान्तं कण्ठादिकट्यन्तं शिरआदिकण्ठान्तं शीर्षादिपादान्तं च व्याप्य, पुनर्मन्त्रन्यासः ॥ स तु पुरुषसूक्तन्यासः ॥ तत्प्रकार उच्यते—

वामाङ्गाद्यं करचरणजानूरुयुग्मेषु नाभौ
हृत्कण्ठांसद्वितयवदनाक्ष्युत्तमाङ्गेषु [1] मन्त्रैः (इति) ॥

तत्राक्षीत्येकमेव स्थानम् । अयं तु संहारन्यासः ॥ एतद्विपरीतक्रमेण

---

१ मन्त्री इति ख, ग, घ पाठः ।

सृष्टिन्यासः ॥ पुनर्नाभेरारभ्य वामकरान्तं न्यस्त्वा, शिष्टाभिः ऋग्भिः शिरआदिहृदन्तं न्यसेत् । एवं स्थितिन्यासः । एवं षडध्वन्यासं कृत्वा,

पुनः पञ्चतत्वन्यासं कुर्यात् — षों नमः पराय परमेष्ठ्यात्मने वासुदेवाय नमः । यं नमः पराय पुरुषात्मने संकर्षणाय नमः । रां नमः पराय विश्वात्मने प्रद्युम्नाय नमः । वं नमः पराय निवृत्त्यात्मने अनिरुद्धाय नमः । लां नमः पराय सर्वात्मने नारायणाय नमः । क्ष्रौं नमः पराय कोपतत्वात्मने नृसिंहाय नमः । एतैर्मूर्धास्यहृदयगुह्यपादेषु न्यस्त्वा, षष्ठेन शिरआदिपादान्तं न्यस्त्वा, पुनर्मूर्तिपञ्जरन्यासं कुर्यात् ॥ तत्प्रकारस्तु उपरिष्टात् सप्तदशपटले वक्ष्यते ॥ पुनर्दशतत्वन्यासं कुर्यात् ॥ तत्प्रकारश्च तत्रैव वक्ष्यते ॥ पुनर्विंशत्यक्षरन्यासं कुर्यात् ॥ तत्प्रकारश्च तत्रैव विंशत्यक्षरीविधाने वक्ष्यते ॥ पुनर्विद्याया अक्षरन्यासं कुर्यात् ॥

काधारे हृदये नेत्रत्रितये श्रवणास्यके ।
बाह्वोश्च पृष्ठके जान्वोर्जठरे चाक्षरान्न्यसेत् ॥

एवमक्षरन्यासं कृत्वा, पुनर्वाग्देवताष्टकन्यासं कुर्यात् ॥ तदुच्यते —

ऐं ह्रीं श्रीं अं आं इं ईं उं ऊं ऋं ॠं ऌं ॡं एं ऐं ओं औं अं अः ब्लूं वशिनी वाग्देवतादेविश्रीपादुकां पूजयामि । ३ कं खं गं घं ङं कलह्रीं कामेश्वरी-वाग्देवतादेविश्रीपादुकां पूजयामि । ३ चं छं जं झं ञं न्व्लीं मोदिनी वाग्देवता-देविश्रीपादुकां पूजयामि । ३ टं ठं डं ढं णं य्लूं विमलावाग्देवतादेविश्रीपादुकां पूजयामि । ३ तं थं दं धं नं ज्म्रीं अरुणावाग्देवतादेविश्रीपादुकां पूजयामि । ३ पं फं बं भं मं ह्स्ल्व्यूं जयिनीवाग्देवतादेविश्रीपादुकां पूजयामि । ३ यं रं लं वं शं झ्म्र्यूं सर्वेश्वरीवाग्देवतादेविश्रीपादुकां पूजयामि । ३ षं सं हं ळं क्षं क्ष्म्र्यीं कौळिनीवाग्देवतादेविश्रीपादुकां पूजयामि ॥

मूर्ध्नि फाले भ्रुवोर्मध्ये कण्ठहृन्नाभिषु क्रमात् ।

लिङ्गे च पादयोर्न्यस्येत् वाग्देव्याश्चाष्टकं सुधीः ॥ (इति)

पुनश्चतुष्पीठन्यासं कुर्यात् ॥ तदुच्यते —

ऐं ह्रीं श्रीं क ए ई ल ह्रीं अग्निचक्रे कामगिर्यालये मित्रीशनाथात्मिके श्रीकामेश्वरीदेवि श्रीरुद्रात्मशक्ति श्रीपादुकां पूजयामि । ३ ह स क ह ल ह्रीं सूर्यचक्रे जालन्धरपीठे ओड्डीशनाथात्मिके श्रीवज्रेश्वरीदेवि श्रीविष्णवात्मशक्ति-श्रीपादुकां पूजयामि । ३ स क ल ह्रीं सोमचक्रे पूर्णगिर्यालये षष्ठीशनाथात्मिके श्रीभगमालिनीदेवि श्रीब्रह्मात्मशक्तिपादुकां पूजयामि । ३ कएईलह्रीं हसकहल ह्रीं सकलह्रीं परब्रह्मचक्रे ओड्याणपीठे श्रीचर्यानाथात्मिके श्रीमहात्रिपुरसुन्दरि देवि श्रीपरब्रह्मात्मशक्ति श्रीपादुकां पूजयामि । (इति) । मूलाधारहृदय-भ्रूमध्यमूर्धसु न्यसेत् ॥

पुनश्चतुस्तत्वानि विन्यसेत् – ऐं ह्रीं श्रीं कएईलह्रीं आत्मतत्वेश्वर्यै श्री महात्रिपुरसुन्दर्यै नमः । ३ हसकहलह्रीं विद्यातत्वेश्वर्यै श्रीमहात्रिपुरसुन्दर्यै नमः । ३ सकलह्रीं शिवतत्वेश्वर्यै श्रीमहात्रिपुरसुन्दर्यै नमः । ऐं ह्रीं श्रीं कएईलह्रीं हसकहलह्रीं सकलह्रीं सर्वतत्वेश्वर्यै श्रीमहात्रिपुरसुन्दर्यै नमः । (इति) कट्यादिपादान्तं, कण्ठादिकट्यन्तं, शिरआदिकण्ठान्तं, शिरआदिपादान्तं च व्याप्य, पुनः मूलमन्त्रेण शिरआदिपादान्तं त्रिर्व्याप्य, गोपालमन्त्रैश्च श्री-विद्याषडङ्गैश्च षडङ्गानि कृत्वा जपेत् ॥

अथ श्रीविद्यामन्त्रप्रसङ्गात् शाक्तेयत्वसामान्येन राजमातङ्गीमन्त्रविधान-मपि कल्पान्तरोक्तं लिख्यते –

मतङ्ग ऋषिः । महाविराट् छन्दः । राजमातङ्गेश्वरी देवता । ऐं बीजम् । स्वाहा शक्तिः । सर्ववशंकरी कीलकम् । मम इष्टकाम्यार्थे विनियोगः । ऐं ह्रीं श्रीं ऐं क्लीं सौः ओं नमो भगवति हृत् । ऐं ह्रीं श्रीं ऐं क्लीं सौः श्रीमातङ्गेश्वरि सर्वजनमनोहरि शिरः । बीजान्युक्त्वा सर्वमुख-

रञ्जिनि क्लीं ह्रीं श्रीं शिखा। बीजान्युक्त्वा सर्वराजवशंकरि सर्वस्त्रीपुरुषवशंकरि कवचम्। बीजान्युक्त्वा सर्वदुष्टमृगवशंकरि सर्वसत्ववशंकरि सर्वलोकवशंकरि अमुकं मे वशमानय स्वाहा नेत्रम्। सौः क्लीं ऐं श्रीं ह्रीं ऐं अस्त्रम्॥

ध्यानम् –

ध्यायेयं रत्नपीठे शुककलरणितं शृण्वतीं श्यामगात्रीं
न्यस्तैकांघ्रिं सरोजे शशिशकलधरां वल्लकीं वादयन्तीम्।
कल्हाराबद्धमालानियमितविलसच्चूलिकां रक्तवस्त्रां
कर्णोद्यच्छङ्खपत्रां कठिनकुचभरक्रान्तकान्तावलग्नाम्॥

उन्मीलद्यौवनोद्यन्निबिडमदभरोद्वेललीलाविलासां
रत्नग्रैवेयहाराङ्गदकनककटीसूत्रमञ्जीरघोषाम्।
आनीयार्थानभीष्टान् स्मितमधुरदृशा साधकांस्तर्पयन्तीं
देवीं ध्यायेच्छुकाभां शुकमखिलकलारूपमस्याश्च पार्श्वे॥

वामे विस्तृतिशालिनि स्तनतटे विन्यस्तवीणामुखं
तन्त्रीं तारविराविणीं स्वकरजैरास्फालयन्ती नखैः।
अर्धोन्मीलदपाङ्गमंसविलसद्ग्रीवं मुखं बिभ्रती
माया काचन मोहिनी विजयते मातङ्गकन्यामयी॥

ऐं ह्रीं श्रीं ऐं क्लीं सौः ओं नमो भगवति श्रीमातङ्गेश्वरि सर्वजनमनोहरि सर्वमुखरञ्जिनि क्लीं ह्रीं श्रीं सर्वराजवशंकरि सर्वस्त्रीपुरुषवशंकरि सर्वदुष्टमृग-वशंकरि सर्वसत्ववशंकरि सर्वलोकवशंकरि अमुकं मे वशमानय स्वाहा सौः नः क्लीं ऐं श्रीं ह्रीं ऐं॥ इति मन्त्रः॥ ऐश्वर्यविद्यागानफलप्रधानोयं मन्त्रः॥

अथ राजमातङ्गेश्वरीमन्त्रप्रसङ्गात् शारदातिलकोक्तप्रकारेणापि राज-मातङ्गेश्वरीमन्त्रविधानं लिख्यते—

ऐं ह्रीं श्रीं ॐ नमो भगवति श्रीमातङ्गेश्वरि सर्वजनमनोहरि सर्वमुखराजि सर्वमुखरञ्जिनि सर्वराजवशंकरि सर्वस्त्रीपुरुषवशंकरि सर्वदुष्टमृगवशंकरि सर्वसत्ववशंकरि सर्वलोकममुकं मे वशमानय स्वाहा ॥ इत्यष्टाशीत्यक्षरो मन्त्रः ॥ ऐश्वर्यविद्यावश्यगानफलप्रधानोऽयं मन्त्रः ॥ अङ्गानि मन्त्रवर्णान्विभज्य वक्ष्यमाणक्रमेण । ऋषिध्यानादिकं पूर्ववदेव ॥

अथास्य मन्त्रस्य न्यासः —

शिरोललाटभ्रूमध्यतालुकण्ठगळोरसि ।
भुजद्वन्द्वे च जठरे विन्यसेन्नाभिमण्डले ॥

स्वाधिष्ठाने गुह्यदेशे पादयोर्दक्षिणान्ययोः ।
मूलाधारे गुदे न्यस्येत्पदान्यष्टादश क्रमात् ॥

गुणैकद्विचतुष्षड्भिः वसुरुद्रसप्तकाष्टभिः ।
दशपंक्त्यष्टवेदाग्निचन्द्रयुग्मगुणाक्षिभिः ॥

पदक्लृप्तिरियं प्रोक्ता मन्त्रवर्णैर्यथाक्रमम् ।

पंक्तिशब्दो दशवाचकः । चन्द्र इत्येकम् । पुनः ऐं ह्रीं श्रीं रत्यै नमः । ऐं ह्रीं श्रीं प्रीत्यै नमः ॥ ऐं ह्रीं श्रीं मनोभवायै नमः । मातङ्ग्यै नमः । इति मूलाधारहृदयभ्रूमध्येषु न्यसेत् । मातङ्ग्या व्यापयेत् । ऐं ह्रीं श्रीं हं हल्लेखायै नमः । गं गगनायै नमः । रक्तायै । कराळिकायै । महोच्छुष्मायै । मातङ्ग्यै नमः ॥ एताः बीजत्रयादिसबिन्दुकस्वस्वनामाद्यवर्णपूर्विकाः, शिरोवदनहृदयगुह्यपादेषु विन्यस्य, मातङ्ग्या व्यापयेत् ॥ पुनष्षडङ्गानि कुर्यात् । मूलमन्त्रस्य चतुर्विंशतिभिर्वर्णैः हृदयम् । त्रयोदशभिश्शिरः । अष्टादशभिश्शिखा । वर्म च तावद्भिः । त्रयोदशभिर्नेत्रम् । द्वाभ्यामस्त्रम् । पुनः द्रां द्राविण्यै० शों शोषिण्यै० बं बन्धिन्यै० मों मोहिन्यै० आं

आकर्षिण्यै नमः ॥ इति, मूर्धपादास्यगुह्येषु हृदम्भोजे प्रविन्यसेत् ॥ मातङ्ग्यै नम इति गात्रे । पुनः ऐं ह्रीं श्रीं मन्मथाय नमः । बीजत्रयादि मकरध्वजाय नमः । बीजत्रयादि मदनाय नमः । ३ पुष्पधन्विने० ३ कुसुमायुधाय० ३ कन्दर्पाय० ३ मनोभवाय० ऐं ह्रीं श्रीं रतिप्रियाय नमः । (इति) वदनांसपार्श्वकटि-नाभिकटिपार्श्वांसकेषु विन्यस्य, मातङ्ग्यै नम इति देहे विन्यस्य, पुनः अनङ्ग-कुसुमायै० अनङ्गमेखलायै० अनङ्गमदनायै० अनङ्गमदनातुरायै० अनङ्गमदन-वेगायै० अनङ्गसंभवायै० अनङ्गपवनपालिन्यै० अनङ्गशशिरेखायै० मातङ्ग्यै नमः । एताः पूर्वोक्तमदनादीनामुक्तस्थानेषु न्यसेत् ॥ लक्ष्म्यै नमः । सरस्वत्यै नमः । रत्यै० प्रीत्यै० कृत्तिकायै० शान्त्यै०[1] तुष्ट्यै० मातङ्ग्यै नमः । (इति) मूलाधाराधिष्ठानमणिपूरकहृत्कण्ठास्यभ्रूमध्यमस्तकेषु सर्वाङ्गे च न्यसेत् ॥ पुनर्मूलमन्त्रं सर्वमेव वक्ष्यमाणस्थाने विन्यसेत् ॥

मूलमन्त्रं प्रविन्यस्य निजमूर्धनि मन्त्रवित् ।
पुनः, आधारदेशेऽधिष्ठाने नाभौ पश्चादनाहते ॥

कण्ठदेशे भ्रुवोर्मध्ये बिन्दौ भूयः कलापदे ।
शिरोधिकायामर्धेन्दौ नादनादान्तयोः पुनः ॥

उन्मन्यां विषुवे वक्त्रे भ्रुवमण्डलदेशके ।

मातङ्ग्यन्ताः प्रविन्यसेदिति स्थानानि ॥

पुनरेषु स्थानेषु शक्तयः । वामायै नमः । ज्येष्ठायै नमः ॥ रौद्र्यै० प्रशान्त्यै० श्रद्धायै० माहेश्वर्यै० क्रियाशक्त्यै० लक्ष्म्यै० सृष्ट्यै० मोहिन्यै० प्रमथाश्वासिन्यै० विद्युल्लतायै० चिच्छक्त्यै० असुरानन्दायै० सुरानन्दायै० आनन्दाढ्यै नमः । इति । मातङ्ग्या व्यापयेत् ॥

---

१ शान्त्यै इत्यतःपरं पुष्ट्यै इति ग, घ, ङ मातृकासु अधिकः पाठः ।

अथवात्र मातङ्गीपदन्यासः तत्रतत्र तत्तन्मन्त्रान्ते संयोज्य तत्तन्मन्त्रोक्तस्थानेषु सर्वेष्वपि रत्यै मातङ्ग्यै नमः। प्रीत्यै मातङ्ग्यै नमः। इति रतिन्यासमारभ्य सर्वत्रैवंप्रकारेण संयोजयेत् । पुनः मातङ्ग्यै नमः। मातङ्ग्यै नमः। महदालक्ष्म्यै मातङ्ग्यै नमः। महालक्ष्म्यै मातङ्ग्यै नमः। सिद्धलक्ष्म्यै मातङ्ग्यै नमः ॥ इति,

शिरःफालहृदाधारेष्वेता बीजत्रयादिकाः ।
मातङ्ग्यन्ताः प्रविन्यस्येद्यथावत् साधकोत्तमः ॥

तत्र बीजत्रयं सर्वशक्त्यादौ वाग्भवभुवनेशीश्रीबीजानि ॥ पुनर्मूलमन्त्रं मूलाधारे न्यस्य तेनैव व्यापकं कृत्वा ध्यात्वा अयुतं जपेत् ॥ मधूकपुष्पैः दशांशं हुनेत् पुरश्चरणार्थम् ॥

अथ पूजा—(तत्र यन्त्रम्)

त्रिकोणकर्णिकं पद्ममष्टपत्रं प्रकल्पयेत् ।
अष्टपत्रावृतं बाह्ये वृतं षोडशभिर्दलैः ॥

चतुरश्रसमायुक्तं कान्त्या दृष्टिमनोहरम् ।

अस्मिन्मण्डले नवशक्तिभिः पीठं समर्चयेत् ॥ विभूत्यै० उन्नत्यै० कान्त्यै० सृष्ट्यै० कीर्त्यै० सन्नत्यै० पुष्ट्यै० उत्कृष्ट्यै० वृद्ध्यै० इति मातङ्गीपदान्ताः समर्चनीयाः ॥ ऐं ह्रीं श्रीं सर्वशक्तिकमलासनाय नमः। इत्यभ्यर्च्य, अस्मिन्समावाह्य समर्चयेत् ॥

रत्यै० प्रीत्यै० मनोभवायै० इति त्रिषु कोणेषु, हृल्लेखायै० गगनायै० रक्तायै० करालिकायै० महोच्छुष्मायै० इति त्रिकोणे दिक्षु मध्ये च। तद्बहिरङ्गानि समर्चयेत् । तद्बहिः द्रां द्राविण्यै० शों शोषिण्यै० बं बन्धिन्यै० मों मोहिन्यै० आं आकर्षिण्यै० इति बाणपञ्चकदेवताः दिक्षु पुरतश्च यजेत् ॥

तद्बहिरष्टदळमध्येषु अनङ्गकुसुमाद्याभिः न्यासविधानोक्ताभिः समर्चयेत् । तद्बहिः पत्राग्रेषु, लक्ष्म्याद्या न्यासविधानोक्ताः समर्चनीयाः । तद्बहिरष्टदळमूलेषु मन्मथ-मकरध्वजादिभिः न्यासविधानोक्तैः समर्चयेत् । तद्बहिः दळमध्येषु, मातृभि-स्समर्चयेत् । तद्बहिर्दळाग्रेषु, असिताङ्गाद्यष्टभैरवान् पञ्चत्रिंशपटले आपदुद्धारण-विषये वक्ष्यमाणान् समर्च्य, तद्बहिः षोडशपत्रेषु वामाद्याः न्यासविधानोक्ताः संपूज्य तद्बहिः चतसृषु दिक्षु मातङ्ग्याद्याः न्यासविधानोक्ताः चतस्रः पूजनीयाः । आग्नेये कोणे विघ्नेशं, दुर्गां नैशाचरे, वायव्ये बटुकं, ऐशान्ये क्षेत्रपं च यजेत् ॥ तद्बहिरिन्द्रादिभिः, तद्बहिर्वज्रादिभिर्यजेत् ॥

अथ प्रयोगः —

मल्लिकाजातिपुन्नागैर्होमाद्भाग्यालयो भवेत् ।
फलैर्बिल्वसमिद्भूतैस्तत्पत्रैर्वा हुताद्भवेत् ॥

राजपुत्रस्य राज्याप्तिः पङ्कजैः श्रियमाप्नुयात् ।
उत्पलैर्वशयेद्विश्वं लक्ष्मीपुष्पैस्तथा पुनः ॥

बन्धूकपुष्पैर्बकुळैः जपोत्थैः किंशुकोद्भवैः ।
वश्याय जुहुयान्मन्त्री मधुना सर्वसिद्धये ॥

लवणैर्मधुरोपेतैः हुत्वा कर्षति सुन्दरीम् ।
वञ्जुळस्य समिद्धोमैः वृष्टिं वितनुतेऽचिरात् ॥

क्षीराक्तैरमृताखण्डैः होमो नाशयति ज्वरम् ।
दूर्वाभिरायुराप्नोति कदम्बैर्वशमाप्नुयात् ॥

जाति-சிறுசெண்பகம் लक्ष्मी - ஸ்ரீதாளி बन्धूकं-உச்சசிலந்தன்
बकुळं-மெகிழ் किंशुकं-முருக்கு वञ्जुळं-நீர்வஞ்சி अमृता-சீந்தில்

(यन्त्रान्तरम्)

त्रिकोणमादावथ पञ्चकोणं अष्टाब्जयुग्मेन्दुकलाम्बुजानि ।
वस्वब्जवेदाम्बुजभूगृहाणि मातङ्गकन्या वरयन्त्रमाहुः ॥

अथ राजमातङ्गी मन्त्रप्रसङ्गात् सुरेन्द्रसंहितोक्तप्रकारेण लघुमातङ्गी-मन्त्रोऽपि अत्र लिख्यते—

अङ्गिरा ऋषिः । अनुष्टुप् छन्दः । लघुश्यामला देवता । ऐं बीजं । स्वाहा शक्तिः । ऐं नमः हृत् । उच्छिष्टशिरः । चण्डाली शिखा । मातङ्गिकवचम् । सर्ववशंकरि नेत्रम् । स्वाहा अस्त्रम् । ध्यानम्—

दिव्यामृतरसाम्भोधौ रत्नद्वीपे मनोहरे ।
कदम्बकानने रत्नमण्डपान्ते महेश्वरीम् ॥

ध्यायेत्सिंहासनासीनां प्रसन्नवदनाम्बुजाम् ।
इन्द्रनीलमणिश्यामां नवनीलोत्पलश्रियम् ॥

रक्तांशुकपरीधानां यावकार्द्रपदाम्बुजाम् ।
उल्लसद्घनतारुण्यसमुन्नतपयोधराम् ॥

पीयूषोदधिसंभूतकम्बुकुण्डलमण्डिताम् ।
विनम्रकामकोदण्डसौन्दर्यविजयिभ्रुवम् ॥

बिम्बाधरां स्मितज्योत्स्नां कपोलफलकोज्वलाम् ।
लसत्कुरङ्गशावाक्षीं नासाकलितमौक्तिकाम् ॥

पृष्ठदेशोल्लसल्लोलवेल्लच्चामरवेणिकाम् ।
कस्तूरीतिलकां चारुचन्द्ररेखावतंसकाम् ॥

दिव्यचन्दनदिग्धाङ्गीं मदाघूर्णितलोचनाम् ।
मुक्ताप्रवालावलिभिः विभूषितपृथुस्तनीम् ॥

मेखलाहारकेयूरमञ्जीरसमलंकृताम् ।
वीणाक्वणितविस्रंभविश्रान्ताश्रान्तमानसाम् ॥

स्विद्यत्कपोलफलकामालोलालकवल्लरीम् ।
लसत्कदम्बकल्हारप्रसूनैस्तु विराजिताम् ॥

लीलाशुकं शिक्षयन्तीं चतुराम्नायपद्धतिम् ।
आत्मैकसुमुखीभूतां रश्मिभिः परिवारिताम् ॥

ध्यात्वा हृदि महादेवीं निश्चलेनान्तरात्मना ।
साधकः परया भक्त्या भुक्तिं मुक्तिं च विन्दति ॥

ऐं नमः उच्छिष्टचण्डालि मातङ्गि सर्ववशंकरि स्वाहा ॥ इति विंशत्यर्णो मनुः विद्यावश्यैश्वर्यगानफलप्रधानोयं मन्त्रः ॥

कलौ कलिजिते काले साधकस्य प्रसीदति ।
लघुशीघ्रेण तेनेयं लघुश्यामेति गीयते ॥

निशादौ लक्षं जपेत् ॥ किंशुकपुष्पैर्वा जपाकुसुमैर्वा रक्तकरवीरैर्वा मधूकपुष्पैर्वा त्रिमधुरसिक्तैः अयुतं जुहुयात् पुरश्चरणार्थम् ॥

यस्तु विंशतिलक्षाणि पूर्ववत्प्रजपेन्मनुम् ।
जुहोति च यथापूर्वं तस्य प्रत्यक्षतां व्रजेत् ॥

किंशुकं-புரசம்பூ மधूकं-இலுப்பைப்பூ.

अथ पूजा —

प्रतिमायां पटे पात्रे स्त्रीयोनौ चापि पुस्तके ।
कन्यामूर्तौ तथा खड्गे यन्त्रे वाऽमलदर्पणे ॥

धनलाभो ग्रामलाभः कन्यालाभस्तथा पुनः ।
सुलभो मन्त्रिणो नित्यं प्रतिमायां प्रपूजने ॥

डाकिनीशाकिनीदोषशान्तये पटपूजनम् ।
पात्रे तु योऽर्चयेद्देवीं धनाढ्यस्सोऽचिराद्भवेत् ॥

सर्वसौभाग्यसंपत्तिवश्याकर्षणसिद्धये ।
जनिचक्रे तु संस्थायाः पूजनं कुलशासने ॥

महाभयस्य शान्त्यर्थं सर्वविघ्नविशुद्धये ।
पूजनं कन्यकामूर्तौ खड्गे शत्रुवधोद्यमे ॥

अणिमाद्यष्टकं यन्त्रे दर्पणे वश्यकर्मणि ।
सिद्धयश्चैव विज्ञानं भवेयुः पुस्तकेऽर्चनात् ॥

त्रिपञ्चाष्टदलाष्टारकलाश्रवसुपत्रकम् ।
चतुरश्रं भवेद्देव्याः पूजायन्त्रं वरानने ॥

अस्मिन्यन्त्रमण्डले मूलाधाराद्वामनाडीद्वारेण हृदयमन्त्रेण महादेवीं समावाह्य योनिमुद्रां द्वात्रिंशत्पटलानन्तरं वक्ष्यमाणां प्रदर्श्य, कवचमन्त्रेणोद्वर्तनं कुर्यात् । शिरोमन्त्रेण अभ्यञ्जनं, नेत्रमन्त्रेण तीर्थाभिषेचनं, वर्ममन्त्रेणाचमनं शिरोमन्त्रेण कुसुमानि वासः पुनराचमनं च, वर्ममन्त्रेण तेनैव दीपालङ्कारान्तांश्च दद्यात् ॥ पुनरङ्गैः प्रथमावृतिः । पुनस्त्रिकोणकोणेषु ऐं रत्यै नमः । ऐं प्रीत्यै नमः । ऐं मनोभवाय नमः । इति समभ्यर्च्य, पुनरपि त्रिकोणेष्वेव स्वरेभ्यो नमः । रागेभ्यो नमः । रागिणीभ्यो नमः । इति समभ्यर्च्य, पुनरपि तत्रैव

त्रिकोणेषु, इच्छाशक्त्यै नमः। ज्ञानशक्त्यै नमः। क्रियाशक्त्यै नमः। इति समर्चयेत् ॥ वाग्भवं पूर्ववन्मन्त्रादौ सर्वत्र योज्यम्। पुनस्तद्बहिः पञ्चकोणे, द्रां द्रावणबाणाय नमः। द्रीं क्षोभणबाणाय नमः। क्लीं वशीकरणबाणाय नमः। ब्लूं आकर्षणबाणाय नमः। सः संमोहनबाणाय नमः। इति समर्च्य, तद्बहिरष्टपत्रेषु सुभगायै० भगायै० भगसर्पिण्यै० भगमालिन्यै० अनङ्गायै० अनङ्गकुसुमायै० अनङ्गमेखलायै० अनङ्गमदनायै० इति समभ्यर्च्य तद्बहिरष्टदळेषु मातृभिर्यजेत्। तद्बहिः षोडशदळेषु उर्वश्यै० मेनकायै० रम्भायै० घृताच्यै० पुञ्जिकायै० सुकेश्यै० मञ्जुघोषायै० महारङ्गायै० यक्षकन्यायै० गन्धर्वकन्यायै० सिद्धकन्यायै० किन्नरकन्यायै० उरगकन्यायै० विद्याधरकन्यायै० किंपुरुषकन्यायै० पिशाचकन्यायै० इति समर्च्य, तद्बहिष्टपत्रेषु अणिमादिसिद्ध्यष्टकेन समर्चयेत्। तत्र पूर्वादिदिक्षु चतुष्टयं ईशानादिविदिक्षु चतुष्टयं च, पुनर्वामतः उच्छिष्टपादुकायै नम इति समर्चयेत् ॥

इति सुरेन्द्रसंहितोक्तलघुमातङ्गीपूजाविधिः समाप्तः ॥

अथ मातङ्गेश्वरीमन्त्रप्रसङ्गात् शाक्तेयत्वसामान्येन स्वयंवरामन्त्रविधानं मन्त्रसारोक्तमपि योग्यतावशात् लिख्यते —

ब्रह्मा ऋषिः। देवीगायत्री छन्दः ॥ जगन्माता श्रीपार्वती देवता ॥ त्रैलोक्यवश्यमोहिनी हृत्। जगत्त्रयवश्यमोहिनी शिरः। उरगवश्यमोहिनी शिखा। राजवश्यमोहिनी कवचम्। स्त्रीपुरुषवशङ्करी नेत्रत्रयम्। सर्वस्त्रीपुरुषमुखहृदयं मम वशं कुरु कुरु स्वाहा अस्त्रम् ॥ अथवा ह्रां हृत्। ह्रीं शिरः इत्यादिषडङ्गं कुर्यात् ॥ ध्यानम् —

बालार्कायुतसुप्रभां करतले रोलम्बमालाकुलां
मालां सन्दधतीं मनोहरतनुं मन्दस्मितोद्यन्मुखीम्।

मन्दं मन्दमुपेयुषीं वरयितुं शम्भुं जगन्मोहिनीं
वन्दे देवमुनीन्द्रवन्दितपदामिष्टार्थदां पार्वतीम् ॥

ह्रीं योगिनि योगिनि योगेश्वरि योगभयङ्करि सकलस्थावरजङ्गमस्य मुखहृदयं मम वशमाकर्षयाकर्षय स्वाहा ॥ इति मन्त्रः ॥ वश्यप्रधानोयं मन्त्रः पञ्चचत्वारिंशदर्णः ॥

शीर्षालिक श्रुतिविलोचन घोणगण्ड-
दन्तोष्ठदोश्चरण सावधिसन्धिकेषु ।
आधारपार्श्वहृदयस्तनकक्षसांस-
शीर्षेषु विन्यसतु मन्त्रवरस्य वर्णान् ॥

तत्र दोश्चरणेति दोश्चरणयोः साग्रसन्धिष्वित्यर्थः ।

शीर्षदक्षकपोलांसे पार्श्वनाभ्यन्यपार्श्वके ।
अंसतालुशिरोवक्त्रपृष्ठहृत्सु पदानि च ॥

एवं पदन्यासं च कुर्यात् ॥ पुनः झौं चापाय नमः इति भ्रुवोर्न्यसेत् । ज्यां ज्यायै नमः इति नेत्रयोरधः । द्रां द्राविण्यै नमः । द्रीं क्षोभिण्यै नमः । क्लीं वशीकरिण्यै नमः । भूं (ब्लूं) अक्षिण्यै नमः । सः संमोहिन्यै नमः । एतास्तु बाणपञ्चकदेवताः नेत्रघ्राणेत्यादिवक्ष्यमाण-स्थानेषु (न्यसेत्) । पुनः एतासां देवतानां आयुधवर्णा उच्यन्ते ॥

पुष्पबाणेक्षुकोदण्डपाशांकुशलसत्कराः ।
रक्ता रक्ताम्बरालेपाः सुप्रसन्नाननाम्बुजाः ॥

व्याख्यानरूपशीलाश्च प्रमदा मदविह्वलाः ।
सबाणशिरसो ध्येयाः कामदा बाणदेवताः ॥

एवं न्यस्त्वा लक्षत्रयं जपेत् ॥ त्रिमधुरसिक्तैः पङ्कजैर्वा आज्यसिक्तैः क्षीरपायसैर्वा तत्सिक्तैरुत्पलैर्वा दशांशं पुरश्चरणाहोमः ॥ उत्पलं-நீலோத்பலம்,

अथ पूजाविधिः —

जयायै० विजयायै० अजितायै० अपराजितायै० नित्यायै० विलासिन्यै० दोग्ध्र्यै० अघोरायै० मङ्गळायै इत्यष्टदलेषु अष्टशक्तीः नवमीं कर्णिकायां च संपूज्य, अस्मिन्शाक्ते पीठे स्वयंवरामूर्तिं समावाह्य समर्चयेत् ॥ अङ्गैः प्रथमावृतिः ॥ सुभगायै० भगायै० भगसर्पिण्यै० भगमालिन्यै० अनङ्गायै० अनङ्गकुसुमायै० अनङ्गमेखलायै० अनङ्गमदनायै० इति द्वितीयावृतिः ॥ पञ्चबाणमन्त्रैः वक्ष्यमाणैः तृतीया । मातृभिश्चतुर्थी ॥ अस्मिन्नेव पटले त्रिपुराविधानोक्ताष्टभैरवैः पञ्चमी ॥ इन्द्रादिभिः षष्ठी ॥ वज्रादिभिस्सप्तमी ॥ एवं संपूज्य पुरश्चर्य प्रयोगान्कुर्यात् ॥

अथ प्रयोगः —

एवं प्रपूज्याथ जुहोतु वन्हौ बन्धूकपुष्पैरयुतं नरो यः ।
त्रिस्वादुयुक्तैर्नियमेन भक्त्या कुर्यात् त्रिलोकीं नचिराद्वशेऽसौ ॥

बन्धूकं-உச்சச் சிலந்தன். अयमर्थः — बन्धूकपुष्पैः त्रिमधुरसिक्तैः अयुतं जुहुयात् त्रैलोक्यवश्यार्थम् ॥

प्रयोगान्तरम् —

पाटीरपङ्कलुलितैः वकुलप्रसूनैः
अष्टोत्तरं दशशतं प्रजुहोति योऽसौ ।
षण्मासतः स विपुलां समवाप्य लक्ष्मीं
नारीनरक्षितिपतीन्स्ववशे विदध्यात् ॥

वकुलं-மகிழ் पाटीरपङ्कं-சந்தனம்,

अयमर्थः — पाटीरपङ्कसिक्तैः वकुळपुष्पैः अष्टोत्तरसहस्रं जुहुयान्नित्यशः। एवं षण्मासे कृते लक्ष्मीश्च सर्ववश्यं च भवति ॥

प्रयोगान्तरम् —

पारन्तीसुमनोभिस्स्वादुयुताभिर्हुतक्रिया नचिरात् ।
लक्ष्मीकरी नराणां सैव स्याल्लोकरञ्जनी चोक्ता ॥

पारन्ती-வெழச்சி. अयमर्थः — अनेन कुसुमेन त्रिमधुरसिक्तेन संख्यानुक्ते सहस्रमिति न्यायात् सहस्रं हुनेत् । उक्तफलं भवति ॥

प्रयोगान्तरम् —

ससितेन घृतेन च यो हवनं वितनोत्यनले सुसमिद्धतरे ।
अयुतं परमां समवाप्य रमां जगतां त्रितयं कुरुते स वशे ॥

सिता शर्करा अयमर्थः — सितालुलितेनाज्येन अयुतं जुहुयात् । उक्तफलं भवति ॥

प्रयोगान्तरम् —

सुधालतोत्थैरयुतं सुशुद्धैः खण्डैर्दिनादौ मधुरत्रयाक्तैः ।
जुहोति वह्नावभिवाद्य देवीं जरापमृत्युग्रहरोगशान्त्यै ॥

सुधालता–சீந்திக்கொடி अयमर्थः — सुधाखण्डैः त्रिमधुरसिक्तैरयुतं जुहुयात् । उक्तफलं भवति ॥

प्रयोगान्तरम् —

जातिप्रसूनैर्विकसत्पलाशैः पाटीरपङ्कस्नपितैस्सहस्रम् ।
सन्ध्यां तृतीयां समुपास्य पश्चात् जुहोतु वह्नावनुरञ्जनाय ॥

जाती–சாதிமுல்லை. पाटीरं–சந்தனம். अयमर्थः — जातीपुष्पैः पाटीरपङ्कसिक्तैः सायं सन्ध्यायां जुहुयात्। उक्तफलं भवति ॥

अथ प्रातःकालीनध्यानम् —

हेमाभामतिवागतीतगुणशीलान्तामशिल्पाकृतिं
प्रेमारोहमनोहरां करलसत्कल्याण[1]दामान्विताम् ।
श्यामामीश्वरमुद्यतां वरयितुं त्रैलोक्यसंमोहिनीं
कामापादनकल्पवल्लिमनिशं वन्दे परां देवताम् ॥

प्रातःकाले जगद्वश्यां ध्यायेत्सर्वसमृद्धिदाम् ।

मध्याह्नकालीनध्यानं बालार्केत्यादि उक्तम्। सायंकालीनध्यानम् —

विधृतवरणमाल्या सर्वरत्नाङ्गभूषा
निखिलनयनचेतोहारिरूपाग्र्यवेषा ।
भवतु भवदभीष्टप्राप्तये शैलकन्या
पुरुषयुवतिवश्याकृष्टिनित्यप्रहर्षा ॥

दीक्षापूर्वं गुरुवरमुखात्प्राप्य सत्संप्रदायात्
विद्यामेतां विमलचरितस्तन्नियोगक्रमेण ।
जप्त्वा हुत्वा विधिवदभिवाह्यार्चयित्वा तथैवं
योगान्युञ्ज्याद्भुवनवशताकृष्टिसंक्षोभदक्षान् ॥

नद्यास्तीरे सुविमलमरुल्लोलरम्ये तदन्ते
यद्वा दुर्गाभवनमहिते नीलकण्ठालये वा ।
शुद्धे यद्वा भवनकुहरे विष्टरं न्यस्य तस्मिन्
बध्वा पद्मासनमथ ततस्स्वस्तिकं वाऽऽसनाग्र्यम् ॥

---

१ दामाञ्चिताम्। इति घ, ङ पाठः ।

स्थित्वैवं शोषणाद्यैरमलतनुरथाधारतो विद्युदाभा-
मुद्गच्छन्तीं सुषुम्नामुखचरणपरां सार्धसोमप्रभां ताम् ।
पीयूषाम्बुप्रवाहं मनुमयमनिशं स्नापयन्तीं निजाङ्गं
ध्यायेन्मुच्येत वैरूप्यकदुरितविषक्षोभदारिद्र्यरोगैः ॥

आधारोद्यच्छिखिपुटगतो वेष्टितो मातृकार्णैः
सौषुम्नाध्वाचरणनिपुणो वाग्भवाद्यश्च मन्त्रः ।
सोयं ध्यातो वदनकुहरान्निस्सरन्नाशु दद्यात्
वागैश्वर्यं विबुधतटिनीलोलकल्लोलरम्यम् ॥

हृत्पद्मस्थखरांशुमण्डललसद्योन्यन्तराळस्थितं
मन्त्रं मारपुरस्सरं नवजपाशोणं धिया भावयेत् ।
योमुं धान्यधरा सुवर्णविभवैः संप्रीणयेदिन्दिरा
किञ्चासौ भुवनत्रयं निजवशे कुर्यादवश्यं नरः ॥

षड्द्वन्द्वान्तगपद्ममध्यविलसद्बालार्कबिम्बस्फुरत्-
योनिस्थं कमलादिको मनुरयं कौसुम्भपुष्पारुणः ।
ध्यातो मन्त्रविदामनर्घविभवस्तोमादिभूताळका-
नाथैश्वर्यविनिन्दिनीमनुपमां लक्ष्मीं चिरायार्पयेत् ॥

मार्ताण्डमण्डलस्थां मौळीन्दुगळत्सुधार्द्रतनुलतिकाम् ।
मिहिरमृगाङ्कमरुन्मुखनेत्रां मुकुरोपमानगण्डलताम् ॥

मञ्जिष्ठाधरविलसन्मन्दस्मितचन्द्रिकां मनोज्ञमुखीम् ।
मत्तेन्द्रकुम्भिकुम्भप्रोन्नतकुचकुम्भखिन्नमध्यलताम् ॥

मन्मथरथपृथुजघनां मुनिमुख्याराध्यमानपदकमलाम् ।
मणिमयमञ्जीराङ्गदकाञ्चीग्रैवेयकनकमकुटाढ्याम् ॥

काश्मीरकर्दमनिभां करधृतरत्नाभिपूर्णकनकघटाम् ।
संचिन्त्यैवं देवीं वसुसंख्यं मन्त्रमेनमथ जप्त्वा ॥

अमृताम्बुसंप्लाविण्या विलोकयन्तीं निजाननं दृष्ट्वा ।
स्मृत्वा हिमगिरितनयां षोडशसंख्यं प्रजप्य भूयश्च ॥

आराध्य पादपीठात् तस्याः संकल्प्य रजतसोपानम् ।
स्वाङ्गावधिमनुमेनं द्वात्रिंशत्संख्यकं प्रजप्य ततः ॥

स्मृत्वा परिवारयुतां मार्गेणानेन मन्दमवतीर्य ।
तिष्ठन्तीं निजपुरतो ध्यात्वा चाष्टोत्तरं शतं जप्त्वा ॥

रत्नघटाननिर्यत्सु[1] बहुळरत्नाम्बुधारया गौरीम् ।
अभिषिच्य पूरयन्तीं निजतनुमनुचिन्त्य यो मनुं जप्यात् ॥

अष्टोत्तरं सहस्रं मनुवरमेनं महत्तरा नचिरात् ।
संप्राप्नुयान्मनोज्ञा धनधान्यसमृद्धिसंकुला लक्ष्मीः ॥

पुनस्साध्यं मन्त्री शिवतनुममुं मारविवशं
निजां मूर्तिं तद्वद्गिरिवरसुतामुज्ज्वलतनुम् ।
शिवौ मारार्ताङ्गावभिमिळितदेहौ स्मरयति
यमुद्दिश्यासौ नो भवति नचिरादेव वशगः ॥

साध्यं शिवातनुममुं नवनीतरूपं
लीनं निजे शिवतनावनलस्वरूपे ।
संचिन्त्य साध्यमनुना शयनासनाद्यं
नित्यं करोतु मतिमाननुरञ्जनाय ॥

---

१ बहल इति घ, ङ पाठः ।

स्वस्मै क्रुद्धं नरममलधीश्शम्भुरूपं भवानी-
विश्लेषार्तं निजतनुमुमां तद्वदत्यन्तहृद्याम् ।
[1] क्रोधध्वान्तैः प्रणयमधुरैः क्षोभयन्तीमपाङ्गैः
ध्यायेद्योसौ स खलु निखिलं तिष्ठते कर्तुमिष्टम् ॥

ततो वासगेहे प्रदीपांकुशाग्रप्रहारद्रुतध्वान्तदन्तावलेन्द्रे ।
विविक्ते वितानप्रसूनाम्बराद्यैः मनोज्ञे सुवेषः प्रविश्यात मन्त्री ॥

स तुङ्गोपधानां समास्तीर्य शय्यां
स्थितोस्यां निशीथे सितप्रच्छदायाम् ।
सपाशांकुशानिक्षुचापार्तवेषून्
कराब्जैर्दधानां कुसुंभाभवर्णाम् ॥

सुरक्ताम्बरालेपभूषां त्रिणेत्रां
भवानीं सुसाध्यां विचिन्त्य स्वयं च ।
भवात्माथ पाशांकुशाद्यं च मन्त्रं
जपन्वर्णसंख्यं निजाङ्केऽग्निरूपे ॥

सुधारूपदेहां विलीनां शितात्मा
विचिन्त्याष्टयुक्तं सहस्रं जपेद्यः ।
असावुर्वशीमप्यमर्त्यालयो द्राक्
समाकर्षयेत्किंपुनर्मर्त्यनारीम् ॥

मदनमन्दिररन्ध्रमुखस्फुर-
न्मदनगं मनुमिन्दुनिभं स्मरन् ।
ज्वलनरूपनिजांगुलिघट्टनैः
निजहितां वितनोतु वशेऽवशाम् ॥

---

१ क्रोधध्वान्तं इति घ, ङ मातृकापाठः । (क्रोधध्वस्तं इति सुगमार्थः ।)

अथ यन्त्रश्लोकः --

सप्ताध्यां हृल्लेखां प्रथममथ षट्कोणविवरे
षडर्णं किञ्जल्के स्वरयुगळमन्तश्शरमितान् ।
मनोः पत्रेष्वर्णान्विलिखतु तथान्त्ये त्वथ परान्
वृतं काद्यैर्यन्त्रं निखिलसुखदं भूपुरगतम् ॥

अस्यार्थः — प्रथमं षट्कोणं विलिख्य, तत्कर्णिकायां भुवनेशीं विलिख्य तन्मध्ये साध्यनामादीन् विलिख्य षट्सु कोणेषु,

वाग्भवस्मरशक्तिस्त्रींब्लूंस इत्युद्धृतो मनुः ।
षडर्णो मुनिभिस्सोयमभीष्टार्थसुरद्रुमः ॥

अस्यार्थः – वाग्भवः ऐंकारः । स्मरः कामबीजम् ॥ शक्तिः, पराबीजम् । इतरत् त्रयं स्त्रीं ब्लूं सः इति । एतदुक्तं भवति — ऐं क्लीं सौः स्त्रीं ब्लूं सः इति विलिख्य, तद्बहिरष्टदळपद्मं विलिख्य, तत्केसरेषु स्वरद्वन्द्वं विलिख्य, दळमध्येषु मूलमन्त्रस्य वर्णान् प्रतिदलं पञ्चशः पञ्चशः विलिख्य, अवशिष्टानन्त्यदळे च विलिख्य, तद्बहिः कादिवर्णैः संवेष्टय, तद्बहिश्चतुरश्रं विलिखेत् ॥

यन्त्रान्तरम् —

स्वयंवराख्यविद्याया यन्त्रं वक्ष्ये यथाश्रुतम् ।
सुदुश्चरं तपस्तप्त्वा दृष्टं दुर्वाससा किल ॥

पाशांकुशलसत्पार्श्वां शक्तिं मध्ये विलेख्य च ।
कोणमध्ये लिखेत् स्त्रीं ब्लूं ऐं क्लीं सौः स इति क्रमात् ॥

अष्टपत्रस्य पद्मस्य मन्त्रार्णान्मुनिसंख्यकान् ।
पत्रेष्वालिख्य तद्बाह्ये वृत्तानां त्रितये क्रमात् ॥

मारमालामनुं बाणान्मातृकां च धरापुटे ।
दिक्षु शक्तिं मारबीजं विदिक्षु च समालिखेत् ॥

यन्त्रं स्वयंवरस्येदमालिख्य कनकादिषु ।
सुजप्तसिक्तसंपातं दधानः शोभने दिने ॥

धनधान्यधराधेनुसस्यभूषादिसंयुताम् ।
लब्ध्वा हृद्यतमां लक्ष्मीं त्रैलोक्यमपि रञ्जयेत् ॥

अस्यार्थः -- प्रथमं षट्कोणं विलिख्य तन्मध्ये भुवनेशीं विलिख्य, तस्याः पार्श्वद्वन्द्वे आं क्रों इति पाशांकुशबीजद्वयं विलिख्य, पुनः साध्यनामादीन् विलिख्य, पुनः षट्सु कोणेषु स्त्रीं ब्लूं ऐं क्लीं सौः सः इति क्रमात् पूर्वोक्तबीजषट्कं विलिख्य, तद्बहिरष्टदळं पद्मं विलिख्य तेषु मन्त्रवर्णान् सप्तशो विलिख्य, अस्मिन्पक्षे योगेश्वर्यादिपदद्वयस्यापि वीप्सा जायते । तद्बहिः वृत्तत्रयं विलिख्य, प्रथमे वृत्ते काममालामन्त्रैः वक्ष्यमाणैः वेष्टयेत् । द्वितीये वृत्ते तत्पञ्चबाणमन्त्रैः वक्ष्यमाणैर्वेष्टयेत् । तृतीये वृत्ते मातृकावर्णैः वेष्टयेत् । तद्बहिश्चतुरश्रं विलिख्य तद्दिक्षु भुवनेशीं विदिक्षु कामबीजं च विलिखेत् ॥

प्रयोगान्तरम् --

बैल्वैः पुष्पैः तत्फलैर्नागपुष्पैः नन्द्यावर्तैरुत्पलैः कैरवैर्वा ।
होमं कुर्यात्स्वादुयुक्तं सहस्रं लक्ष्म्यै कान्त्यै लोकसंरञ्जनाय ॥

उत्पलम् -- நீலோத்பலம். नागपुष्पं -- நாகப்பூ. कैरवं -- ஆம்பல். त्रिमधुरसिक्तैरेतैः प्रातःकाले सहस्रं जुहुयात् । उक्तफलं भवति ॥

प्रयोगान्तरम् --

मार्ताण्डमण्डलगतामथ चेक्षुचाप-
पाशांकुशार्तवशरोज्वलपाणिपद्माम् ।

स्थित्वोरुदघ्नसलिले प्रविचिन्त्य गौरीं
जप्यात् श्रियै सुयशसे जनरञ्जनाय ॥

प्रयोगान्तरम् —

समाप्य सायन्तनकर्म मन्त्री मनोज्ञवेषां प्रविचिन्त्य गौरीम् ।
प्रत्यङ्मुखोऽष्टोर्ध्वशतं प्रजप्यात् मन्त्रं समृध्द्यै जनरञ्जनाय ॥

अयमर्थः — सायन्तनानुष्ठानं कृत्वा, प्रत्यङ्मुखो भूत्वा, अष्टोर्ध्वशतं नित्यशो जपेत् गौरीं ध्यात्वा । तस्मादुक्तफलं भवति ॥

प्रयोगान्तरम्

उद्यद्राकाशशाङ्कान्तरपरिविलसत्पद्मसंस्थां त्रिणेत्रां
दोर्भिः पाशेक्षुचापाङ्कुशकुसुमशरान्बिभ्रतीमिन्दुचूडाम् ।
गौरीं गौराङ्गरागाम्बररुचिरतनुं चिन्तयन्मन्त्रमेनं
जप्यात्कान्त्यै समृध्द्यै सुविपुलयशसे लोकसंरञ्जनाय ॥

प्रयोगान्तरम् —

ऐं क्लीं सौः स्त्रीं ब्लूं सः इति षडक्षरीमन्त्रः । अस्य मन्त्रस्यादौ साध्यनाम संयोजयेत् । अनेन मन्त्रेण प्रयोग उच्यते —

पुष्यर्क्षेऽष्टसहस्रं घृतेन हुत्वा शरावके न्यस्य ।
सम्पातं दशपुष्पैः वर्तिं कृत्वा च तेन संसिच्य ॥

प्रज्वाल्य दीपिकायां देवीं संपूज्य यन्त्रवर्यमथो ।
नूतनघटे लिखित्वा हरिद्रयास्मिन्मषीं समुत्पाद्य ॥

अस्मिन्पात्रे तावन्निक्षिप्य जपेत्सहस्रमष्टोर्ध्वम् ।

त्रैलोक्यमोहनिद्रामषिरेषा श्रीकरी च संप्रोक्ता ॥

अयमर्थः — पुष्यनक्षत्रे अष्टोत्तरसहस्रसंख्यं घृतेन हुत्वा संपातं च एकस्मिन्शरावके संपाद्य, पुनर्दशपुष्पं पिष्ट्वा अनेन वर्तिं संपाद्य तां वर्तिमनेन संपाताज्येन संसिच्य अनेन षडक्षरीमन्त्रेण तां वर्तिं संजप्य, पुनर्दीपे स्वयंवरामूर्तिं संपूज्य तस्मिन्दीपे अनया वर्त्या मषीं संपाद्य, पुनरेकस्मिन्नवघटे हरिद्राजलेन पूर्वोक्तयन्त्रं विलिख्य, तस्मिन्घटे मषीं विनिक्षिप्य अनेन षडक्षरीमन्त्रेण अष्टोत्तरसहस्रं तत्स्पृष्ट्वा जप्त्वा नेत्रयोर्विलेपयेत् । तस्मात्त्रैलोक्यवश्यं च श्रीकरं च भवेत् ॥

अथ यन्त्रमुच्यते —

अथ कथयामि समासात् अपरं त्रैलोक्यमोहिनीयन्त्रम् ।
अष्टपलाशं पद्मं विलिख्य तत्कर्णिकान्तरे शक्तिम् ॥

तस्या मध्ये जीवं साध्याख्यं कर्मवर्तिमपि कुर्यात् ।
दृष्टिं पार्श्वद्वन्द्वे शक्तिं परितश्च बाणमन्त्रेण ॥

प्राणस्थापनमनुनाप्यावेष्टयाशादळस्थितां शक्तिम् ।
संवेष्टय बाणमन्त्रैः चतुर्भिरपरैः क्रमेण विशदमतिः ॥

आग्नेयाद्यष्टदळस्फुरन्मनोजन्मबीजमभिवेष्टय ।
यन्त्रान्तरे च संस्था (स्थं) स्मरमालामन्त्रमूलमन्त्रैश्च ॥

ऐंस्त्रींब्लूमित्येतैः बाह्ये चावेष्टय चाष्टपत्रस्य ।
अजपां परमात्ममनुं गायत्रीं मन्त्रयन्त्रयोः सुलिपिम् ॥

विलिखेद्यथावकाशं हैमे पट्टे सुवर्णलेखिन्या ।
शोभनतरे मुहूर्ते यन्त्रमिदं वाञ्छितार्थदं नृणाम् ॥

अस्यार्थः—प्रथमं अष्टपत्रपद्मं विलिख्य, तत्कर्णिकामध्ये भुवनेश्वरीं विलिख्य, तन्मध्ये साध्यनामादीन् विलिख्य, तत्र शक्तिं परितश्चेति षष्ठ्यर्थे द्वितीया। तत्र कर्णिकायां लिखितस्य सर्वस्य परितः पञ्चबाणमन्त्रैः वक्ष्यमाणैस्संवेष्ट्य, तत्रैव तद्बहिः प्राणप्रतिष्ठामन्त्रेणापि संवेष्ट्य, पुनः प्रागादिदिग्दळेषु भुवनेशीं विलिख्य तां बाणमन्त्रचतुष्टयेन संवेष्ट्य, पुनराग्नेयादि-दलेषु कामबीजं विलिख्य, पञ्चबाणमन्त्रेण तद्वेष्ट्य पुनस्तत् बाणपञ्चकं यन्त्रमध्ये विलिख्य, पुनस्तस्याष्टदळस्य बहिः "क्लीं नमः कामदेवाय" इत्यादि-काममालामन्त्रैः वक्ष्यमाणैश्च तद्बहिः कामबीजेन च तद्बहिः ऐं स्त्रीं ब्लूं इत्येतैः त्रिभिश्च पञ्चवृत्तेषु संवेष्ट्य, पुनः हंस इत्यजपां, सोहमिति परमात्ममनुं, मन्त्रराजाय विद्महे इत्यादि मन्त्रगायत्रीं, यन्त्रराजाय विद्महे इत्यादियन्त्रगायत्रीं च यथावकाशं विलिखेत्॥ इति॥

अथ यन्त्रान्तरमुच्यते—

तिसृभिस्तिसृभिर्बिन्दुभिरूर्ध्वाधस्संयुक्तपकारममुम्।
संवेष्ट्य रेखयोर्ध्वं बिन्दुं कृत्वा तदन्तरा नीत्वा॥

एतद्यन्त्रान्तरमिति कथितं ज्ञेयं गुरूपदेशेन।

अस्यार्थः—पकारं विलिख्य, तस्य बिन्दुरेखया पकाराकाररेखया उपरि चाधस्ताच्च तादृशं बिन्दुत्रयं यथा भवति तथा विलिख्य, तद्रेखाग्रेण परितः संवेष्ट्य, तदग्रे बिन्द्वाख्यं विलिख्य, तदग्रमन्तः प्रवेशयेदिति॥

अथ दशपुष्पसंज्ञा लिख्यते—

सहा-देवी-दूर्वा-मधुप-मुसली-विष्णुदयिता-
सदाभद्रा-लक्ष्मीः शतमखलताऽऽथाञ्जलिकरी॥

अस्यार्थः — सहा - எழுத்தாணிப்பூண்டு, देवी-ஸ்ரீதேவி-செங்கழநீர், दूर्वा-அருகம்புல், मधुप-கறுச்சாறங்கண்ணி, मुसली-நிலப்பனை, विष्णुदयिता-விஷ்ணுக்கிராந்தி, *सदाभद्रा-சிறுசன்னை, लक्ष्मीः-ஸ்ரீதாளி, शतमखलता-முடக்கத்தான், अञ्जलिकारि-ஆனைவணங்கி.

अस्य दशविधपुष्पस्य योजनार्थं परिमाणमुच्यते -

एकं धूर्जटिनयनं त्रयोदश द्वे च सप्त मनुरुद्राः ।
मणिरविदिक्क्रमभागाः विहिता (दशपुष्पपरिमाणाः) ॥

अस्यार्थः- सहा-ஒரு கழஞ்சு देवी-மூன்று கழஞ்சு इत्यादिप्रमाणोक्तक्रमेण गन्धद्वारामित्यादिमन्त्रैः एकैकैः एकैकं संयोजयेत् । अथवा गन्धद्वारामित्याद्यर्चा सर्वं योजयेत् ॥ इति स्वयंवराकल्पः समाप्तः ॥

अथ स्वयंवरामन्त्रप्रसङ्गात् कल्पान्तरोक्तस्तन्न्यासोप्यत्र योग्यतावशाल्लिख्यते —

प्रथमं गुरुगणपतिबन्धनादीन्कृत्वा ह्स्रैं स्हौं एताभ्यां मूलमन्त्रेण च हृदयादारभ्य मूर्धपर्यन्तं न्यसेत् । एवं मन्त्रोदयं कृत्वा पुनः नववारं भुवनेश्वर्यावृत्त्या रेचकं कृत्वा, तद्द्विगुणावृत्त्या पूरकं कृत्वा, द्वात्रिंशद्वारं भुवनेशीपूर्वकेण मूलमन्त्रत्रिवारेण कुम्भकं प्राणायामं च कृत्वा, पुनः हस्ततले दक्षिणनासिकाश्वासमार्गेण तेजस्स्वीकारपूर्वकं मूलमन्त्रेण देहे व्याप्य, पुनः पीठन्यासं उपरि सप्तदशपटले वक्ष्यमाणप्रकारेण कुर्यात् । तत्र नवशक्तीः प्रागत्रैव स्वयंवराविधानोक्तप्रकारेण न्यसेत् । पुनः हृदये समावाह्य प्राणप्रतिष्ठां च कृत्वा पुनः मूलमन्त्रेण त्रिवारं कुम्भकं कृत्वा तेजस्स्वीकारपूर्वकं अङ्गैः करन्यासं कृत्वा, पुनः पञ्चबाणैश्च करन्यासं कुर्यात् ॥ द्रां द्रावणबाणाय नमः । द्रीं क्षोभणबाणाय नमः । क्लीं वशीकरणबाणाय नमः । ब्लूं आकर्षणबाणाय

---

* सदाभद्रा சிறுபீளை इति पाठः ।

नमः । सः संमोहनबाणाय नमः । इति पञ्चबाणमन्त्रः ॥ पुनः मूलेन व्याप्य ह्रां हृल्लेखायै नमः । ह्रीं गगनायै नमः । ह्रूं रक्तायै नमः । ह्रैं करालिकायै नमः । ह्रौं महोच्छुष्मायै नमः । एतानि पञ्च तत्वानि, शिरो-वदन-हृदय-गुह्य-पादेषु-न्यसेत् ॥

पुनः शुद्धमातृकान्यासः ॥ पुनः भुवनेशीपुटितमातृकान्यासः पुनः कामबीजपुटितमातृकान्यासः । पुनर्भुवनेशीपुटितमूलमन्त्रवर्णन्यासः ॥

तस्य स्थानं--

शीर्षाळिकश्रुतिविलोचनघोणगण्ड-
दन्तोष्ठपाणिपदसन्धिषु साग्रकेषु ।
आधारपार्श्वहृदयस्तनकक्षसांस-
शीर्षेषु विन्यसतु मन्त्रवरस्य वर्णान् ॥ इति ॥

अथ पदन्यासः —

शीर्षदक्षकपोलांसपार्श्वनाभ्यन्यपार्श्वके ।
अंसतालुशिरोवक्त्रपृष्ठहृत्सु पदानि च ॥

एवं द्वादशधा विभज्य पदन्यासः ॥ पुनः ज्रौं चापाय नमः । ज्यां ज्यायै नमः । इति नेत्रद्वये चापरूपेण, उपरि भागे चापमन्त्रेण अधस्ताद्गुणमन्त्रेण गुणरूपेण च न्यसेत् । पुनः पञ्चबाणान् प्रागुक्तान् नेत्रश्रवणास्येषु न्यसेत् । पुनर्मध्यशिरसि च तत्र दिक्षु च पञ्चबाणान्न्यसेत् । पुनः शिरोविदिक्षु च तत्र मध्ये च, पुनः हस्तद्वयपञ्चसन्धिषु, पुनः पादद्वये च तथैव पुनः मूर्धास्य हृदयगुह्यपादेषु च पञ्चबाणान् न्यसेत् । पुनर्मुखे षट्कोणं संचिन्त्य तन्मध्ये कर्णिकायां ह्रीं क्लीं इति न्यस्य, कोणेषु षट्सु वाग्भवं विन्यस्य ब्लूमिति सन्धिषु स्त्रीमिति कोणाग्रेषु च विन्यस्य, पुनः ह्रीं कामदेवाय

नमः। क्लीं मन्मथाय नमः। ऐं कन्दर्पाय नमः। ब्लूं मकरध्वजाय नमः। स्त्रीं मनोभवाय नमः। इति पञ्चमनोभवमन्त्रैः नेत्रघ्राणेत्यादि-वक्ष्यमाणस्थानेषु दशधा न्यस्त्वा, पुनः नेत्रघ्राणमुखेषु इत्यादिस्थानेष्वेव पञ्चबाणान्न्यसेत् ॥

नेत्रघ्राणमुखेषु पाणिपदयोः साग्रेषु सन्धिष्वधो
मूलाधारसलिङ्गनाभ्युदरहृत्पार्श्वापराङ्गस्तने।
कण्ठांसत्रिकवक्त्रगण्डरसनाघ्राणाक्षिकर्णालिके-
ष्वेतान्विन्यसतु क्रमेण दशधा बाणान् जगन्मोहनान् ॥ इति ॥

द्रां द्रावणेत्याद्युक्ताः पञ्चबाणमन्त्राः। एवं दशकृत्वः पञ्चबाणान्न्यसेत्। तत्र एकैकावृत्तौ बाणन्यासस्य एकैकेन मन्त्रेण च मध्येमध्ये व्यापकं कुर्यात् ॥

ते दशव्यापकमन्त्राः कथ्यन्ते। प्रथमं कामबीजं पुनः कामगायत्री, पुनः काममालामन्त्रः, पुनरश्वारूढा, पुनः नित्यक्लिन्ना, पुनः श्रीबीजं, पुनर्भुवनेशी, पुनर्वाग्भवः, पुनः ह्रीं कामदेवाय नमः इत्याद्युक्ताः पञ्च-मनोभवाः, पुनर्मूलमन्त्रः, एतैर्दशभिः मध्ये मध्ये व्यापयेत् ॥

कामदेवाय विद्महे पुष्पबाणाय धीमहि।
तन्नोऽनङ्गः प्रचोदयात् ॥ इति कामगायत्री ॥

क्लीं नमः कामदेवाय सर्वजनप्रियाय सर्वजनसंमोहनाय ज्वळज्वळ प्रज्वलप्रज्वल सर्वजनस्य हृदयं मम वशं कुरु कुरु स्वाहा ॥ इति काममाला-मन्त्रः ॥ आं ह्रीं क्रों एहि परमेश्वरि स्वाहा ॥ इति अश्वारूढा (मन्त्रः) ॥ ह्रीं नित्यक्लिन्ने मदद्रवे स्वाहा ॥ इति नित्यक्लिन्ना (मन्त्रः) ॥ पुनः ऐं कामचापाय इक्षुधनुषे नमः। ज्यां ज्यायै नमः। इति वामनेत्रे उपरिभागे चापमन्त्रेण चापरूपेण न्यस्त्वा, अधस्ताद्गुणमन्त्रेण गुणरूपेण च न्यसेत् ॥

पुनः द्रां द्राविण्यै मकरध्वजाय द्राविणीबाणाय पद्मोत्पलं हं क्लीं हुं फट् स्वाहा ।। द्रीं क्षोभिण्यै मकरध्वजाय क्षोभिणीबाणाय बिल्वोत्पलं हं क्लीं हुं फट् स्वाहा ।। क्लीं वशीकरिण्यै मकरध्वजाय वशीकरिणीबाणाय जम्बूत्पलं हं क्लीं हुं फट् स्वाहा ।। ब्लूं आकर्षिण्यै मकरध्वजाय आकर्षिणीबाणाय रक्तोत्पलं हं क्लीं हुं फट् स्वाहा ।। सः संमोहिन्यै मकरध्वजाय संमोहिनी-बाणाय नीलोत्पलं हं क्लीं हुं फट् स्वाहा ।। इति वामनेत्रे पूर्वन्यस्तगुणे ऊर्ध्वमुखेन स्थिताः क्रमेण पञ्चबाणा न्यस्तव्याः ।। पुनः शुद्धमातृकान्यासं कृत्वा, मूलमन्त्रस्याङ्गऋष्यादीन् कृत्वा जप्यात् ।।

एवं स्वयंवरान्यासविधिः ।।

अथ स्वयंवरान्यासप्रसङ्गात् वश्यकरं पञ्चबाणन्यासविधानमपि अत्र लिख्यते —

द्रां द्रावणबाणाय नमः । द्रीं क्षोभणबाणाय नमः । क्लीं वशीकरण-बाणाय नमः । ब्लूं आकर्षणबाणाय नमः । सः संमोहनबाणाय नमः । इति पञ्चबाणमन्त्राः । एतैः स्वशरीरे न्यसेत् ।।

अस्य स्थानमुच्यते —

नेत्रघ्राणमुखेषु पाणिपदयोः साग्रेषु सन्धिष्वधो
मूलाधारसलिङ्गनाभ्युदरहृत्पार्श्वापराङ्गस्तने ।
कण्ठांसत्रिकवक्त्रगण्डरसनाघ्राणाक्षिकर्णालिके-
ष्वेतान्विन्यसतु क्रमेण दशधा बाणान् जगन्मोहनान् ।।

एतेषु स्थानेषु पञ्चभिर्बाणमन्त्रैः दशावृत्त्या न्यसेदित्यभिप्रायः । पश्चात्काममन्त्रं जपेच्च ।।

अथ वशीकरणमन्त्रप्रसङ्गात् शत्रुमनोनयन तिरस्करिणी मन्त्रविधानमपि कल्पान्तरोक्तं योग्यतावशात् लिख्यते — प्रजापति ऋषिः । महाबृहतीछन्दः तिरस्करिणी देवता ॥ ध्यानम् —

नीलं तुरङ्गमधिरुह्य विराजमाना
नीलांशुकाभरणमाल्यविलेपनाढ्या ।
निद्रापटेन भुवनानि तिरोदधाना
खड्गायुधा भगवती परिपातु सा नः ॥

ओं ह्रीं नमो भगवति[1] महामाये मम सर्वपशुजनमनश्चक्षुस्तिरस्करणं कुरु कुरु हुं फट् स्वाहा ॥ अनेन मन्त्रजपेन चोरादीनां नेत्रतिरस्करणं भवति ॥

अथ वागीश्वरीमन्त्रविधानमुच्यते — कण्व ऋषिः । विराट् छन्दः वागीश्वरी देवता । ऐं बीजम् । स्वाहा शक्तिः । मातृकावदङ्गानि । मन्त्रपदैः पञ्चभिस्समस्तैश्च वा कुर्यादङ्गानि ॥ ध्यानम् —

अमलकमलसंस्था लेखनीपुस्तकोद्य-
त्करयुगळसरोजा कुन्दमन्दारहारा ।
धृतशशधरखण्डोल्लासिकोटीरचूडा
भवतु भवभयानां भञ्जनी भारती वः ॥

वद वद वाग्वादिनी स्वाहा ॥ इति मन्त्रः ॥ कश्रोत्रनयननासावदनान्धुगुदेषु विन्यसेद्वर्णान् । अन्धुरिति सीवनीप्रदेशः । विद्याप्रधानोयं मन्त्रः । अक्षरलक्षं जपेत्पुरश्चरणार्थम् । सितैः कमलैः पयस्सिक्तैर्वा तिलैः त्रिमधुरसिक्तैर्वा अयुतं पुरश्चरणहोमः ॥

---

१ भगवति इत्यतः परं तिरस्करिणि इति ङ मातृकायां अधिकतया योजितः पाठः ।

अथ पूजा — एकपञ्चाशदक्षरयुक्तैकपञ्चाशद्दळमयं पद्मं विचिन्त्य, तस्मिन्नवशक्तिभिर्यजेत् ॥ मेधायै० प्रज्ञायै० प्रभायै० विद्यायै० धियै० धृत्यै स्मृत्यै० बुद्ध्यै० विद्येश्वर्यै० इति पीठं संपूज्य, तस्मिन्वागीश्वरीं समावाह्य समर्चयेत् ॥ अङ्गैः प्रथमावृतिः । योगायै० सत्यायै० विमलायै० [1] ज्ञानायै० इति द्वितीयावृतिः । मातृभिस्तृतीयावृतिः । लोकेशैश्चतुर्थी ॥ अथ प्रयोगः—

न्यासान्वितं निशितधीः प्रजपेत्सहस्रं
अह्नोमुखेऽनुदिवसं प्रपिबेत्तथापः ।
तन्मन्त्रिताः पुनरयत्नत एव वाचः
सिद्धिर्भवेदभिमता परिवत्सरेण ॥

अयमर्थः – अक्षरन्यासोक्तक्रमेण न्यस्य प्रातस्सहस्रसंख्यं मन्त्रं नित्यशो जपेत् ॥ तथैव जलं चानेन मन्त्रेण सहस्रवारं नित्यशोऽभिमन्त्र्य पिबेत् । एवं कृते संवत्सरात् वाक्सिद्धिर्भवति ॥

प्रयोगान्तरम् —

हृदयद्वयसे स्थितोथ तोये रविबिम्बे प्रतिपद्य वागधीशाम् ।
जपतास्त्रिसहस्रसंख्यमर्वाक्कविता मण्डलतो भवेत्प्रभूता ॥

अस्यार्थः -- हृदयप्रमाणे जले स्थित्वा रविमण्डले सरस्वतीं ध्यात्वा त्रिसहस्रं नित्यशो जपेत् । एवं कृते मण्डलात्कवित्वं भवति ॥

प्रयोगान्तरम् —

पालाशबिल्वप्रसवैस्तयोश्च समिद्वरैः स्वादुयुतैश्च होमः ।
कवित्वसौभाग्यकरः समृद्धिलक्ष्मीप्रदो रञ्जनकृच्चिराय ॥

---

१ ज्ञानायै इत्यतः परं बुद्ध्यै० स्मृत्यै० मेधायै० प्रज्ञायै० इति ग, घ, ङ पाठः ।

अयमर्थः -- पालाशबिल्वयोः पुष्पैश्च तयोरेव समिद्भिश्च त्रिमधुर-सेचितैः, संख्यानुक्ते सहस्रमिति न्यायात् सहस्रं जुहुयात् । कवित्वादिफलं भवति ॥

प्रयोगान्तरम् —

चतुरंगुलजैस्समित्प्रसूनैः जुहुयाद्यो मधुरत्रयावसिक्तैः ।
मनुजस्समवाप्य धीविलासानचिरात्काव्यकृतां भवेत्पुरोगः ॥

चतुरंगुलं – கொன்றை. अयमर्थः — चतुरंगुलपुष्पैश्च तत्समिद्भिश्च मधुरत्रयसिक्तैस्सहस्रं जुहुयात् । कवित्वसामर्थ्यं भवति ॥

अथ वागीश्वरीमन्त्रान्तरमुच्यते —

कण्व ऋषिः । विराट्छन्दः । वागीश्वरी देवता ॥ ऐं बीजम् । ह्रीं शक्तिः । ऐं हृत् । [1]इत्याद्यङ्गानि ॥ ऐं आं हृत् । [2]ऌां ईं शिरः । इत्यादि वा अङ्गानि ॥

हंसारूढा भसितहरहारेन्दुकुन्दावदाता
वाणी मन्दस्मितयुतमुखी मौळिबद्धेन्दुरेखा ।
विद्यावीणामृतमयघटाक्षस्रगादीप्तहस्ता
शुभ्राब्जस्था भवदभिमतप्राप्तये भारती स्यात् ॥

ॐ ह्रीं ऐं सरस्वत्यै नमः ह्रीं ॐ ॥ इति मन्त्रः ॥

विद्याप्रधानोयं मन्त्रः —

ससुषुम्नाग्रे भ्रूयुगमध्ये नवके तथैव रन्ध्राणाम् ।
विन्यस्य मन्त्रवर्णान् द्वादशलक्षं जपेत्पुरश्चरणार्थम् (णम्) ॥

१ ऐं शिरः इति ग, घ, ङ मातृकासु अधिकः पाठः ॥

२ ऐं ईं शिरः इति घ, ङ मातृकापाठः । (अयमेव न्याय्यः)

अथ पूजा — पूर्वोक्ते पीठे समावाह्य पार्श्वयोः ऐं संस्कृतायै ऐं प्रकृतायै इति समर्चयेत्। पुनः अङ्गैः प्रथमावृतिः॥ प्रज्ञायै० मेधायै० श्रुत्यै० शक्त्यै० स्मृत्यै० वागीश्वर्यै० सुमत्यै० स्वस्त्यै० इति द्वितीयावृतिः॥ मातृभिस्तृतीया॥ इन्द्रादिभिश्चतुर्थी॥ एवं संपूज्य, सितसरसिजैश्च नागपुष्पैश्च चम्पकपुष्पैश्च प्रत्येकं चतुस्सहस्रसंख्यं जुहुयात् पुरश्चरणार्थम्॥ नागपुष्पं–நாகப்பூ.

इति मातृकाविभेदात् प्रजपेन्मन्त्रद्वयं च मन्त्रितमः।
प्रजपेदेनां स्तुतिमपि दिनशो वाग्देव्यनुग्रहाय बुधः॥

अमलकमलाधिवासिनि मनसो वैमल्यदायिनि मनोज्ञे।
सुन्दरगात्रि सुशीले तव चरणाम्भोरुहं नमामि सदा॥

अचलात्मजा च दुर्गा कमला त्रिपुरेति भेदिता जगति।
या सा त्वमेव वाचामीश्वरि सर्वात्मना प्रसीद मम॥

त्वच्चरणाम्भोरुहयोः प्रणामहीनः पुनर्द्विजातिरपि।
भूयादनेळ(ड)मूकः त्वद्भक्तो भवति देवि सर्वज्ञः॥

मूलाधारमुखोद्गतबिसतनुनिभप्रभाप्रभावतया।
विसृतलिपिव्रातहितमुखकरचरणादिके प्रसीद मम॥

वर्णतनोऽमृतवर्णे नियतमनिर्वर्णितेपि योगीन्द्रैः।
निर्णीतिकरणदूरे वर्णयितुं देहि देवि सामर्थ्यम्॥

ससुरासुरमौळिलसत् मणिप्रभादीपिताङ्घ्रिनळिनयुगे।
सकलागमस्वरूपे सर्वेश्वरि सन्निधिं विधेहि मयि॥

पुस्तकजपवटिहस्ते वरदाभयचिह्नचारुबाहुलते ।
कर्पूरामलदेहे वागीश्वरि शोधयाशु मम चेतः ॥

क्षौमाम्बरपरिधाने मुक्तामणिभूषणे मुदावासे ।
स्मितचन्द्रिकाविलासितमुखेन्दुबिम्बेऽम्बिके प्रसीद मम ॥

विद्यारूपेऽविद्यानाशिनि विद्योदितेन्तरात्मविदाम् ।
गेयैस्सपद्यजातैराद्यैर्मुनिभिस्स्तुते प्रसीद मम ॥

त्रिमुखि त्रयीस्वरूपे त्रिपुरे त्रिदशाभिवन्दितांघ्रियुगे ।
त्रीक्षणविलासिवक्त्रे त्रिमूर्तिमूलात्मिके प्रसीद मम ॥

वेदात्मके निरुक्तज्योतिर्व्याकरणकल्पशिक्षाभिः ।
सच्छन्दोभिस्संततक्लृप्तषडङ्गेन्द्रिये प्रसीद मम ॥

त्वच्चरणसरसिजन्मस्थितमहितधियां न लिप्यते दोषः ।
भगवति भक्तिमतस्त्वयि परमां परमेश्वरि प्रसीद मम ॥

बोधात्मिके बुधानां हृदयाम्बुजचारुरङ्गनटनपरे ।
भगवति भवभङ्गकरीं भक्तिं भद्रार्थदे प्रसीद मम ॥

वागीश्वरीस्तवमिति यो जपार्चनाबहनवृत्तिषु प्रजपेत् ।
स तु विमलचित्तवृत्तिः देहापदि नित्यशुद्धमेति पदम् ॥

इति प्रपञ्चसारसारसंग्रहे गीर्वाणेन्द्रविरचिते
अष्टमः पटलः ॥



## ॥ अथ नवमः पटलः ॥

अथ सरस्वतीमन्त्रप्रसङ्गात् सारस्वतप्रदं यद्वाग्वदन्त्यृचो यन्त्रं मन्त्रसारोक्तमपि लिख्यते —

आलिख्य कर्णिकामध्ये तारं कोणेषु षट्स्वपि ।
अनुलोमां विलोमां च बालां पत्रेषु चाष्टसु ॥

यद्वागिति ऋचः पादान्क्रमेणाष्टौ विलिख्य च ।
चत्वार्यृचा ससर्पर्या ऋचा मातृकयापि च ॥

आवेष्ट्य वाग्भवं बीजमालिखेद्भूपुराश्रिषु ।
ऋक्पञ्चकस्य वाग्देव्या यन्त्रं स्वर्णादिनिर्मिते ॥

पट्टे संलिख्य चावाह्य वाचं संपूज्य भक्तितः ।
रुचकादिषु संयोज्य धारयेद्यश्शुभे दिने ॥

कवीनां तार्किकाणां च चक्रवर्ती भवेदसौ ।
वचां पिष्ट्वा लिखित्वैतत् भक्षयेद्योस्य वै मुखात् ॥

द्युसरिल्लोलकल्लोलनिभा निर्याति भारती ॥ इति ॥

अस्यार्थः—प्रथमं षट्कोणं विलिख्य, तन्मध्ये प्रणवं विलिख्य तन्मध्ये साध्यनामादियन्त्रन्यायान्विलिखेत् । पुनष्षट्सु कोणेषु ऐं क्लीं सौः सौः क्लीं ऐं इत्येतान्बालामन्त्राक्षरान्क्रमेण विलिखेत् । पुनरष्टदळं पद्मं विलिख्य तेषु दळेषु "यद्वाग्वदन्त्यविचेतनानि" इति पूर्वदळे विलिखेत् । "राष्ट्री देवानां निषसाद मन्द्रा" इत्याग्नेये । "चतस्र ऊर्जं दुदुहे पयांसि" इति दक्षिणे । "क्व स्विदस्याः परमं जगाम" इति नैर्ऋते । "देवीं वाचमजनयन्त देवाः"

इति पश्चिमे । "तां विश्वरूपाः पशवो वदन्ति" इति वायौ । "सा नो मन्द्रेषु मूर्जं दुहाना" इति सौम्ये । "धेनुर्वागस्मानुपसुष्टुतैतु" इति ईशानदळे च विलिखेत् ॥ पुनस्तद्बहिर्वृत्तत्रयं विलिख्य प्रथमवृत्ते "चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति" इत्यनया ऋचा वेष्टयेत् ॥ पुनर्द्वितीये वृत्ते "ससर्परीरमतिं बाधमाना बृहन्मिमाय जमदग्निना दत्ता । आ सूर्यस्य दुहिता ततान श्रवो देवेष्वमृतमजुर्यम् ॥ ससर्परीरभर आयमेभ्यो धीश्रयः पाञ्चजन्यासु कृष्टिषु । सा पक्ष्याण्यनवमायुर्दधाना यां मे पलिस्ति जमदग्नयो ददुः" इत्याभ्यां ऋग्भ्यां वेष्टयेत् ॥ पुनस्तृतीये वृत्ते मातृकाभिर्वेष्टयेत् ॥ तद्बहिश्चतुरश्रं विलिख्य तत्कोणेषु ऐं इति वाग्भवं विलिखेत् ॥ एवं स्वर्णादिपट्टे वा वचामिश्रितनवनीते वा विलिख्य (धारयेत्) भक्षयेद्यः तस्य वाक्पटुत्वादिफलं भवति ॥

अथ सारस्वतयन्त्रप्रसङ्गात् मन्त्रसारोक्तं यश्छन्दसामृचो यन्त्रमपि सारस्वतप्रदत्वेन लिख्यते—

षट्कोणकर्णिकामध्ये तारं कोणेषु वाग्भवम् ।
यश्छन्दसामृचो वर्णान्पत्रेष्वष्टसु पञ्चशः ॥

अष्टमे षट्शरीरं मे यो देवानामृचापि च ।
आवेष्ट्य लिप्या कुगृहकोणेषु च यथाक्रमम् ॥

बालाबीजत्रयं मायाबीजं चापि समालिखेत् ।
यश्छन्दसामृचो यन्त्रं पट्टे स्वर्णादिनिर्मिते ॥

शुभे दिने समालिख्य धारयेद्यो यथाविधि ।
मेधावी दीर्घजीवी च नीरोगश्च प्रियंवदः ॥

बहुश्रुतः शास्त्रकर्ता श्रुतो वेदागमान्कचित् ।
न विस्मरति मर्त्योऽसौ सर्वज्ञो भवति ध्रुवम् ॥

अस्यार्थः — प्रथमं षट्कोणं विलिख्य, तन्मध्ये प्रणवं, तन्मध्ये साध्यनामादीन्विलिखेत् ॥ पुनः षट्सु कोणेषु ऐमिति वाग्भवं विलिखेत् । पुनरष्टपत्रेषु "यश्छन्दसामृषभो विश्वरूपः । छन्दोभ्योऽध्यमृतात्संबभूव । स मेन्द्रो मेधया स्पृणोतु । अमृतस्य देव धारणो भूयासम्" ॥ इत्यस्या ऋचो वर्णान् पञ्चशः पञ्चशो विलिखेत् ॥ अष्टमे पत्रे अवशिष्टाक्षरं विलिखेत् । तद्बहिः वृत्तत्रयं विलिख्य, पूर्वे वृत्ते "शरीरं मे विचर्षणम् । जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुवम् । ब्रह्मणः कोशोऽसि मेधयापिहितः । श्रुतं मे गोपाय" ॥ इत्यनया ऋचा वेष्टयेत् ॥ द्वितीये वृत्ते "यो देवानां प्रथमं" इत्यृचा वेष्टयेत् ॥ पुनस्तृतीये वृत्ते मातृकया च वेष्टयेत् ॥ पुनस्तद्बहिः चतुरश्रं विलिख्य, तत्कोणेषु ऐं क्लीं सौः ईं इत्येतान्वर्णान् क्रमेण विलिखेत् ॥ एवं विलिख्य धृते उक्तफलं भवति ॥

अथ वागीश्वरीमन्त्रप्रसङ्गात् मन्त्रदेवताप्रकाशिकोक्तप्रकारेण वागीश्वरीमन्त्रान्तरं लिख्यते —

त्रिविक्रम ऋषिः । गायत्री छन्दः । रुद्रा वागीश्वरी देवता । वां बीजम् । स्वाहा शक्तिः । सां सर्वज्ञ० हृत् । सीममृतं तेजोमालिनि नित्यतृप्ति० शिरः । सूं वेदवेदिनि अनादिबोध० शिखा । सैं वज्रिणे वज्रधराय स्वतन्त्र० कवचम् । सौं नित्यमलुप्तशक्तिसहजे त्रिरूपिणे नेत्रम् । सः अनन्तशक्ति (ओं) श्लीं पशु हुं फट् पाशुपतास्त्राय सहस्राक्षाय अस्त्रम् ॥ ध्यानम्—

शुभ्राभां त्रीक्षणां दोर्भिर्बिभ्रतीं फलपुस्तके ।
वराभये सर्वभूषां रुद्रवागीश्वरीं भजे ॥

ओं वां श्रीं ह्रीं स्फ्यों ह्यौं स्वाहा ॥ इति मन्त्रः । पूजादिकं दशाक्षर-वागीश्वरीवत् ॥

अथ वागीश्वरीमन्त्रान्तरम् —

काश्यप ऋषिः । गायत्री छन्दः । विष्णुवागीश्वरी देवता । [1] स्फ्यों बीजम् । श्रीं शक्तिः । बीजेनैव षडङ्गानि । ध्यानम् –

हेमाभां बिभ्रतीं दोर्भिः फलपुस्तककुम्भकान् ।
अभयं सर्वभूषाढ्यां विष्णुवागीश्वरीं भजे ॥

ॐ श्रीं [2] स्फ्यैं ह्रीं नमः ॥ इति मन्त्रः ॥

वागीश्वरी मन्त्रान्तरम् —

कण्वऋषिः । विराट् छन्दः । मुख्या सरस्वती देवता । वागिति बीजम् । [3] पर इति शक्तिः । ऐं वाचस्पते हृत् । अमृत शिरः । प्लुवः शिखा । प्लुकवचम् । ऐं वाचस्पते अमृतनेत्रम् । प्लुवः प्लुः अस्त्रम् । ध्यानम्-

आसीना कमले करे जपवटीं पद्मद्वयं पुस्तकं
बिभ्राणा तरुणेन्दुकाभ्रमकुटा मुक्तेन्दुकुन्दप्रभा ।
फालोन्मीलितलोचना कुचभरक्रान्ता भवद्भूतये
भूयाद्वागधिदेवता मुनिगणेनासेव्यमानाऽनिशम् ॥

ऐं वाचस्पते अमृतप्लुवः प्लुः ॥ इति मन्त्रः ॥

अथाक्षरन्यासः —

---

१ स्फ्रें इति ङ मातृकापाठः । स्फ्यें इति ख, ग, घ पाठः ।

२ स्फूरें इति ग, ङ मातृकापाठः ।

३ प्लु इति ग, ङ मातृकापाठः ।

ब्रह्मरन्ध्रे भ्रुवोर्मध्ये नवरन्ध्रे च विन्यसेत् ।

पूजादिकं दशाक्षरीवागीश्वरीवत् ॥ गोमूत्रपाचितान्नभुग्वा पञ्चदशलक्षं जपेत् । अङ्कोलसर्पिषा अष्टसहस्रं पुरश्चरणाहोमः ॥

अथ चिन्तामणिसरस्वतीमन्त्रः —

कण्वऋषिः । त्रिष्टुप् छन्दः । सरस्वती देवता । ॐ बीजं । ह्रीं शक्तिः । ॐ ह्रीं ह्रां ह्रीं ॐ हृत् । ॐ ह्रीं ह्रीं ह्रीं ॐ शिरः ॥ इत्याद्यङ्गानि ॥ ध्यानम् —

हंसारूढा हरभसितहारेन्दुकुन्दावदाता
वाणी मन्दस्मितयुतमुखी मौलिबद्धेन्दुरेखा ।
विद्या वीणामृतमयघटाक्षस्रगादीप्तहस्ता
शुभ्राब्जस्था भवदभिमतप्राप्तये भारती स्यात् ॥

ॐ ह्रीं ह्सौं ह्रीं ॐ सरस्वत्यै नमः ॥ इति मन्त्रः ॥

अथाक्षरन्यासः — मूर्धभ्रूमध्यश्रोत्रनयननासापुटद्वयवदनगुह्यपादेषु एकादशवर्णान् न्यसेत् ॥ प्रागुक्तदशाक्षरीपीठे समावाह्य समर्चयेत् ॥ तत्र देव्याः पार्श्वयोः ऐं संस्कृतायै नमः । ऐं प्राकृतायै नमः ॥ इति ॥ अङ्गैः प्रथमावृतिः । ॐ ऐं प्रज्ञायै० ॐ ऐं मेधायै० ॐ ऐं श्रुत्यै० ॐ ऐं स्मृत्यै० ॐ ऐं शक्त्यै० ॐ ऐं वागीश्वर्यै० ॐ ऐं सुमत्यै० ॐ ऐं सरस्वत्यै० ८ इति द्वितीयावृतिः । मातृभिस्तृतीया । इन्द्रादिभिश्चतुर्थी । वज्रादिभिः पञ्चमी ॥ एवं संपूज्य द्वादशलक्षं जपेत् । सितसरसिजनागचम्पकैः द्वादशसहस्रं पुरश्चरणाहोमः ॥

अथ सरस्वतीमन्त्रान्तरम् —

कण्व ऋषिः । अनुष्टुप् छन्दः । वाणीसरस्वती देवता । ऐं बीजम् । ह्रीं शक्तिः । विद्यार्थे विनियोगः । ऐं ह्रां हृत् । ऐं ह्रीं शिरः । इत्याद्यङ्गानि । प्रागुक्तचिन्तामणिसरस्वतीवत् पूजाध्याने ॥ ॐ ह्रीं ग्लौं सरस्वत्यै नमः ह्रीं ॐ ॥ इति मन्त्रः ॥

अथाक्षरन्यासः — ब्रह्मरन्ध्रे भ्रुवोर्मध्ये नेत्रयोर्नासिकयोरास्ये लिङ्गे गुदे च न्यस्य समस्तेन व्यापकत्रयं कुर्यात् ॥ एवं न्यस्त्वा द्वादशलक्षं जपेत् ॥ त्रिमधुरसिक्तैस्सितसरसिजैः द्विशतोत्तरसहस्रं पुरश्चरणाहोमः ॥

अथ सरस्वतीमन्त्रप्रसङ्गात् सरस्वतीमन्त्रान्तरम् —

ब्रह्मा ऋषिः । जगती छन्दः । वाग्देवी देवता । ऐं बीजम् । स्वाहा शक्तिः । विद्यार्थे विनियोगः । ऐं हृत् । नमः शिरः । भगवति शिखा । वदवद कवचम् । वाग्देवि नेत्रम् । स्वाहा अस्त्रम् । ध्यानम्—

शुद्धां स्वच्छविलेपमाल्यवसनां शीतांशुखण्डोज्वलां
व्याख्यामक्षगुणं सुधाढ्यकलशं विद्यां च हस्ताम्बुजैः ।
बिभ्राणां कमलासनां कुचनतां वाग्देवतां सुस्मितां
वन्दे वाग्विभवप्रदां त्रिणयनां सौभाग्यसंपत्करीम् ॥

ऐं नमो भगवति वद वद वाग्देवी (त्रि) स्वाहा ॥ इति मन्त्रः ॥ लक्षजपः । आज्यसिक्तैः तिलैः दशांशं पुरश्चरणाहोमः । दशाक्षरवत्पूजा ॥

अथ प्रयोगः —

पिबेत्तन्मन्त्रितं तोयं प्रातःकाले दिने दिने ।
विद्वान्वत्सरतो मन्त्री भवेन्नात्र विचारणा ॥

प्रयोगान्तरम् —

अभिषिञ्चेज्जलैर्जप्तैरात्मानं स्नानकर्मणि ।
तर्पयेत्तां जलैश्शुद्धैरतिमेधामवाप्नुयात् ॥

प्रयोगान्तरम् —

पुष्पगन्धादिकं सर्वं तज्जप्तं धारयेत्सुधीः ।
सभायां पूज्यते सद्भिः वादे च विजयी भवेत् ॥

अथ सरस्वतीमन्त्रप्रसङ्गात् मन्त्रदेवताप्रकाशिकोक्तनकुलीसरस्वतीमन्त्रोऽपि लिख्यते--

विश्वामित्र ऋषिः । त्रिष्टुप्छन्दः । नकुलीसरस्वती देवता । सारस्वते मम वादजये वा विनियोगः । बालाक्षरत्रितयेन अनुलोमप्रतिलोमितेन षडङ्गानि । ध्यानम् —

ओष्ठाभ्यां पिहितैश्च पङ्क्तिनिशितैः दन्तैर्घनैस्संवृता
तीक्ष्णा वज्रवदत्र सर्वजगतां या स्वामिनी सन्ततम् ।
सा मां चारु करोतु वादनिपुणं सर्वत्र सा वाग्रसा
येन स्यामहमेव सर्वजगतामत्यर्थमग्रेसरः ॥

तार्क्ष्यारूढा महितललितं तालुजन्मा विशङ्की
चञ्चद्वीणाकलरवशुकी चक्रशङ्खासिपाणिः ।
राजोत्तुंसा(गा) मनसि नकुली राजतु श्यामळा या
प्रत्यङ्गत्वं परिगतवती प्रत्यहं मामकीने ॥

ऐं ओष्ठापिधाना नकुली क्लीं दन्तैः परिवृता पविः । सौः सर्वस्यै वाच ईशाना चारु मामिह वादयेत् ॥ वद वद वाग्वादिनी स्वाहा ॥ इति मन्त्रः ॥

अथ न्यासः —"ससर्परीरमतिं बाधमाना" इत्यनेन मूलाधारमारभ्य

नाभिपर्यन्तं न्यसेत् । "बृहन्निमभाय जमदग्निना दत्ता" इति हृदयपर्यन्तं न्यसेत् । "आ सूर्यस्य दुहिता ततान" इति कर्णपर्यन्तं न्यसेत् । "श्रवो देवेष्वमृतमजुर्यं" इति तत आरभ्य मूर्धपर्यन्तं न्यसेत् । पुनरस्या ऋचः प्रथमपादेनाधरोष्ठस्य दक्षिणभागे, द्वितीयेन उत्तरोष्ठस्य दक्षिणभागे, तृतीयेन उत्तरोष्ठस्य वामभागे, चतुर्थेनाधरोष्ठस्य वामभागे च न्यसेत् ॥

अथाक्षरन्यासः—नकुलीमन्त्राक्षरैः प्रादक्षिण्येन वदने न्यसेत् । समस्तेन जिह्वाग्रे ॥

अथ सरस्वतीमन्त्रप्रसङ्गात् मेधाधारणासरस्वतीमन्त्रोऽपि लिख्यते—

व्यासभगवान् ऋषिः । त्रिष्टुप् छन्दः । मेधाधारणासरस्वती देवता । मेधाधारणार्थे विनियोगः ॥ ' यश्छन्दसामृषभो विश्वरूपः" इत्यादि "श्रुतं मे गोपाय" इत्यन्तं, "ऐं नमो ब्रह्मणे धारणं मे अस्त्वनिराकरणं धारयिता भूयासं(क्लीं) कर्णयोः श्रुतं माच्योढ्वं ममामुष्य ॐ सौः" इति मन्त्रः ॥

अथ भुवनेश्या विधानमुच्यते—

शक्ति ऋषिः । गायत्रीछन्दः । बोधस्वरूपा संविद्देवता । हं बीजम् । ई शक्तिः । ह्रां हृत् । ह्रीं शिरः । इत्याद्यङ्गानि । ध्यानम्—

उद्यद्भास्वत्समाभां विजितनवजपामिन्दुखण्डावनद्ध-
　द्योतन्मौळिं त्रिणेत्रां विविधमणिलसत्कुण्डलां पद्मगां च (संस्थाम्) ।
हारग्रैवेयकाञ्चीगुणमणिवलयाद्यैर्विचित्राम्बराढ्या-
　मम्बां पाशांकुशेष्टाभयकरकमलामम्बिकां तां नमामि ॥

ह्रींम् ॥ इति मन्त्रः ॥ ऐश्वर्यवश्यप्रधानोयं मन्त्रः ॥

अथ न्यासो मन्त्रदेवताप्रकाशिकोक्तप्रकारेण लिख्यते—

पूर्वं करन्यासं कुर्यात् ॥ तद्यथा—

ॐ ह्रौं हृल्लेखा अंगुष्ठाभ्यां नमः ॥ ॐ ह्रैं गगना तर्जनीभ्यां नमः। ॐ ह्रूं रक्ता मध्यमाभ्यां नमः ॥ ॐ ह्रीं करालिका अनामिकाभ्यां नमः ॥ ॐ ह्रां महोच्छुष्मा कनिष्ठिकाभ्यां नमः ॥ इत्यंगुष्ठाद्यंगुळीषु विन्यस्य अस्त्रं तलयोर्विन्यसेत् ॥ शक्ति ऋषिः। गायत्री छन्दः। बोधस्वरूपा सुखसंवि- देवता ॥ इति मूर्धास्यहृदयेषु विन्यस्य, हं बीजम्। ईं शक्तिः। चतुर्विध- पुरुषार्थे विनियोगः। ॐ ह्रौं हृल्लेखायै ऊर्ध्ववक्त्रायै नमः ॐ ह्रैं गगनायै पूर्ववक्त्रायै नमः। ओं ह्रूं रक्तायै दक्षिणवक्त्रायै नमः। ओं ह्रीं करालिकायै उत्तरवक्त्रायै नमः। ओं ह्रां महोच्छुष्मायै पश्चिमवक्त्रायै नमः। इत्यूर्ध्वादि- वक्त्रेषु अंगुष्ठाद्यंगुळीभिः विन्यस्य, मूलेन व्यापकं कृत्वा, ह्रां गायत्र्यै नमः। ह्रीं सावित्र्यै नमः। ह्रूं सरस्वत्यै नमः। इति गळसव्यदक्षिणस्तनेषु विन्यस्य, ह्रां ब्रह्मणे नमः। ह्रीं विष्णवे नमः। ह्रूं रुद्राय नमः ॥ इति वामांसहृदयदक्षिणांसेषु विन्यस्य, ओं आं ब्रह्माण्यै नमः। ओं ईं माहेश्वर्यै नमः। ओं ऊं कौमार्यै नमः। ओं ॠं वैष्णव्यै नमः। ओं ॡं वाराह्यै नमः। ओं ऐं इन्द्राण्यै नमः। ओं औं चामुण्डायै नमः। ओं अः महालक्ष्म्यै नमः ॥ इति शिरोललाटवामांसपार्श्वदक्षपार्श्वांसपृष्ठहृदयेषु विन्यस्य, अं ब्रह्मगायत्रीभ्यां नमः। उं विष्णुसावित्रीभ्यां नमः। मं ईश्वरसरस्वतीभ्यां नमः। श्रीं धनपति श्रीभ्यां नमः। क्लीं स्मररतिभ्यां नमः। गं गणपति पुष्टिभ्यां नमः। एतानि मिथुनानि, दक्षिणकपोल वामकपोल वामकण्ठ मुखास्य दक्षिणकर्णेषु विन्यस्य ओं शङ्खनिधये नमः। ओं पद्मनिधये नमः। इति सव्यदक्षिणकर्णगण्डान्तरालयोः विन्यस्य, ओं ह्रीं इति व्यापकत्रयं कृत्वा, एवं न्यस्तशरीरः देवीमात्मत्वेन प्रविभावयेत् ॥

तत्र पाशांकुशाभयवरदशब्दार्थमाह —

धातू द्वौ स्तो रक्षणव्यापकार्थौ
पाद्यो श्चाद्यस्तत्प्रभावात्तयोश्च ।
सर्वं संरक्ष्याथ सर्वात्मना यो
व्याप्नोत्यंशस्स्यादसौ पाशवाची ॥

अं स्यादात्मा कुर्धरा कुस्तनुर्वा
भागार्थस्स्यात् शोथवा वृत्तिवाची ।
भूश्चेद्भूतान्यन्यथा चेच्छरीरा-
ण्याकृष्यात्मन्याहरेदङ्कुशाख्यः ॥

स्मृते यथा संसृतिचक्रचङ्क्रमो-
द्भवाद्धनापायसमुत्थितादपि ।
वियोजयत्यात्मतनुं नरं भयात्
तथा भयस्याभयसंज्ञिता विभोः ॥

मुख्यार्थवाची वरशब्द उक्तः
स्याद्वाञ्छितार्थश्च वराभिधानः ।
मुख्यन्त्वभीष्टं स्मृतिमात्रकेण
ददाति योसौ वरदोऽवगम्यः ॥ इति ॥

द्वात्रिंशल्लक्षं जपेत् पुरश्चरणार्थम् । हविष्याशी नक्ताशी वा । जपा-
द्दशांशमष्टद्रव्यैर्हुनेत् पुरश्चरणार्थं गुळक्षौद्रघृतावसिक्तैः ॥

अश्वत्थोदुम्बरजाः प्लक्षन्यग्रोधसंभवाः समिधः ।
तिलसर्षपदौग्धघृतान्यष्टद्रव्याणि संप्रदिष्टानि ॥

प्लक्षः—இச்சில். न्यग्रोधः—वटः (ஆல்.) दौग्धम्—पायसम् ।

अथास्याः त्रिगुणितयन्त्रविधिः लिख्यते —

शक्त्या विस्साध्यमिन्द्रानिलनिरृतिगबीजाभिवद्धं पुरेभ-
स्तत्कोणोल्लासिमायं हरिहरविलसद्दण्डमेभिस्समायैः ।
वर्णैश्चावेष्टितं तत् त्रिगुणितमिति विख्यातमेतत् सुयन्त्रं
स्यादायुष्यं च वश्यं धनकरममितश्रीपदं कीर्तिदं च ॥

अस्यार्थः — प्रथमं त्रिकोणं विलिख्य, तन्मध्ये भुवनेशीं विलिख्य, तन्मध्ये साध्यनामादीन्विलिखेत् । पुनस्त्रिषु कोणाग्रस्थानेषु बहिर्भुवनेशीं विलिख्य, तद्भुवनेशीत्रयमपि स्वस्याः स्वस्या रेफांशाग्रेण स्वं स्वमात्मानं प्रदक्षिणीकृत्य अनन्तरामनन्तरां भुवनेशीं बहिष्कृत्य तृतीयाया भुवनेश्या ईकारांशेन योजयेत् । पुनस्त्रिकोणकोणोदरेषु त्रिष्वपि चतुर्थस्वरं ईकारं सबिन्दुकं विलिख्य पुनः कोणत्रयाणामपि पार्श्वयोर्हरिहर इत्यक्षरचतुष्टयमेकैकस्मिन् पार्श्वे द्वौ द्वौ विलिखेत् । पुनर्बहिर्वृत्तत्रयं विलिख्य प्रथमे वृत्ते हरिहर इत्यक्षरचतुष्टयपूर्वकं चतुर्थस्वराख्यमीकारं सबिन्दुकं पूर्वलिखितभुवनेशीत्रितयान्तराळप्रदेशस्य ऋजूदेशे हरिं ईं हरं ईं इत्येवंप्रकारेण विलिखेत् । पुनर्द्वितीये वृत्ते अनुलोममातृकावर्णैश्च वेष्टयेत् । तृतीये तु चकारात् प्रतिलोममातृकावर्णैर्वेष्टयेत् ॥

तत्रायुष्यं च वश्यं धनकरममितश्रीपदं कीर्तिदं च ॥ इति,

आयुष्ये मध्यस्थं बीजं मृत्युञ्जयेनावेष्टयेत् । वश्ये शाक्तेन बीजेन धनश्रियो श्रीबीजेन कीर्तौ अजपयावेष्टयेत् ॥ एवं त्रिगुणितयन्त्रम् ॥

अथास्मिन् यन्त्रे पूजाविधिः कथ्यते — जयायै० विजयायै० अजितायै अपराजितायै० नित्यायै० विलासिन्यै० दोग्ध्रयै० अघोरायै० मङ्गळायै० ९ एतास्तु नव शक्तयः ॥ ह्रीं श्रीं भुवनेश्वर्यासनाय नमः । ह्रीं भुवनेश्वरीमूर्तये

नमः । इति कर्णिकायाम् । इति पीठपूजामन्त्रः ॥ अस्मिन् पीठे समावाह्य देवीं संपूजयेत् । तत्र पाशांकुशधरा रक्तवस्त्राभरणभूषिता नव शक्तयः । पुनः प्रथमं हृल्लेखायै नमः इति पुरतः संपूजयेत् । गगनायै० रक्तायै० करालिकायै० महोच्छुष्मायै० इति प्रागादिदिक्षु । एतास्तु प्रधानदेवता-सदृश्यः । एवं प्रथमावृतिः । अङ्गैः द्वितीयावृतिः । पुनः गायत्र्यै नमः इत्यैन्द्रे, सावित्र्यै नम इति नैर्ऋत्यां, सरस्वत्यै नम इति वायौ, ब्रह्मणे नमः इत्याग्नेये, विष्णवे नम इति वारुणे, रुद्राय नम इति ऐशान्ये ॥ पुनरेतासां मूर्तीनां वर्णान्युच्यन्ते —

रक्ता रक्ताकल्पा चतुर्मुखी कुण्डिकाक्षमालेऽब्जे ।
दधती गायत्री साप्येतादृश एव कीर्तितो ब्रह्मा ॥

अरिदरगदाब्जहस्ता किरीटकेयूरहारसंभिन्ना ।
सावित्री सा कथिता तादृग्रूपो भवेच्च विष्णुश्च ॥

टङ्काक्षाभयवरदान् दधती च त्रीक्षणेन्दुकलितजटा ।
विकृताकल्पा च भवेत् सरस्वती तादृशश्च रुद्रोऽपि ॥

एवं तृतीयावृतिः मातृभिश्चतुर्थी । इन्द्रादिभिः पञ्चमी । एवं त्रिगुणित-यन्त्रे भुवनेश्वरीं पूजयेत् ॥

अथ षड्गुणितयन्त्रक्रमः कथ्यते —

शक्तिप्रग्रस्तसाध्यं हरशरकलमायावृतं वह्निगेह-
द्वन्द्वाश्रिप्राप्तमायं प्रतिविवरलसच्छक्तिबद्धं बहिश्च ।
कोणोद्यद्दण्ड्यदण्डीलिपिहरिहराबद्धगण्डं विलोमा-
र्णावीतं कोर्युगाष्टोदरनृहरिचिन्ताश्मकं षड्गुणाख्यम् ॥

षडंगुलप्रमाणेन वर्तुळं कर्तुरालिखेत् ।
षडंगुलावकाशेन तद्बहिंश्च प्रवर्तयेत् ॥

वर्तुळं तावता भूयः तद्बहिश्च तृतीयकम् ।
मध्यवर्तुळमध्ये तु हृल्लेखाबीजमालिखेत् ॥

एकैकान्तरितास्तास्तु संबध्युरितरेतरम् ।
शिखाभिरान्तराभिस्तु बाह्याबाह्याभिरान्तरा ॥

मध्यवर्तुळसंस्थाया हृल्लेखायाः कपोलयोः ।
अधरे साध्यनामार्णं साधकस्योत्तरे लिखेत् ॥

अन्तराग्निश्रियोः कर्म साधकांशे समालिखेत् ।
हरमायां पञ्चकृत्वः स्युर्बहिर्गर्भवर्तुळम् ॥

तद्बहिश्शरमायां च कलमायां च तद्बहिः ।
लिखेन्मायां बिन्दुमतीं वह्नेः कोणेषु षट्स्वपि ॥

वह्नेः कोणतये श्रीमत्पक्षि(क्षी)ये त्रितयं लिखेत् ।
शक्तिश्रीकामबीजानां सदण्डं साधकार्णवत् ॥

वह्नेस्तु वह्निपक्षीये तान्येवादण्डवन्ति च ।
ससाध्यनामवर्णानि स्पष्टनिष्ठानभाञ्जि च ॥

बाह्यरेखामन्तरा स्युः वर्णाः क्रमगताः शुभाः ।
तद्बहिः प्रतिलोमाश्च तास्स्युर्लेखकपाटवात् ॥

ततो विदर्भितं भूमेर्मण्डलद्वयमालिखेत् ।
महादिक्स्थनृसिंहार्णं चिन्तारत्नाश्रिताश्रकम् ॥

बहिः षोडशशूलाङ्कं शोभनं व्यक्तवर्णवत् ।
एतद्यन्त्रं समालिख्य पद्ममारचयेत्ततः ॥

रुचिरद्वादशदलं षट्त्रिंशत्केसरोज्ज्वलम् ।
[1] पूर्वोक्तलक्षणोपेतं शुभं दृष्टिमनोहरम् ॥ इति ॥

अस्यार्थः — तत्र, शक्तिग्रग्रस्तसाध्यं हृल्लेखान्तर्विलिखितसाध्यसाधककर्माक्षरं हरशरकलमायावृतं हर-शर-कल-इत्यक्षरद्वयतिकं मायाख्येन तुरीयस्वरेण संयोज्य, तैस्त्रिभिर्बीजैः हृल्लेखया, तद्बहिः श्रीबीजेन तद्बहिः कामबीजेनावृतं वह्निगेहद्वन्द्वाश्रिप्राप्तमायं षट्कोणेषु लिखितचतुर्थस्वरं, प्रतिविवरलसत्शक्तिबद्धं, बहिश्च षट्कोणात् बहिः षट्सु कोणान्तरालेषु लिखितैर्हृल्लेखाबीजैरभिबद्धं कोणोद्यद्दण्डयदण्डित्रिलिपि, दण्डोऽनुस्वारः । त्रिषु कोणेषु सानुस्वारः । त्रिषु कोणेषु अनुस्वाररहितश्च । प्रोक्तान्यक्षराणि त्रीणि लिखेदित्यर्थः ॥ हरिहरावद्धगण्डं हरिहरेत्यक्षरचतुष्टयेन संयुक्तकोणपार्श्वद्वयम् । विलोमार्णावृतं प्रतिलोमैर्मातृकाक्षरैः आवृतम् । कोर्युगाष्टोदरनृहरिचिन्ताश्मकं कोर्भूमेः युगद्वयं चतुरश्रद्वयमित्यर्थः । अष्टोदरे अष्टसु कोणेष्वित्यर्थः । नृहरिचिन्ताश्मकं नरसिंहैकाक्षरं चिन्तामण्येकाक्षरं च भवेत् । इति ॥

एतदुक्तं भवति — प्रथमं षडंगुलप्रमाणेन कर्णिकावृत्तं विलिख्य, तद्बहिरपि परितष्षडंगुलमानेन वृत्तं विलिख्य, तद्बहिरपि तथैव षडङ्गुलमानेन तृतीयं वृत्तं विलिख्य, कर्णिकाख्यप्रथमवृत्तमध्ये भुवनेशीं विलिख्य, तस्या अधस्तात् रेफांशरेखाप्रदेशे साध्यस्य नामांशं विलिख्य, पुनस्तस्या भुवनेश्या उपरिभागे ईकारांशे साधकस्य नामांशं च विलिख्य, अग्न्याख्यरेफांशरेखायाश्च श्रियाख्य ईकारांशरेखायाश्च मध्ये तत्रापि साधकनामप्रदेशे कर्मपदं च विलिख्य, पुनस्तस्य कर्णिकावृत्तस्य बहिः कर्णिकावृत्तं यथा

[1] त्रिवृत्तराशिवीर्याद्यैः पार्थिवान्तं च मण्डलम् । इति ङ मातृकायामधिकः पाठः ।

उदरे भवेत् तथा भुवनेशीं बहिर्बहिः पञ्चकृत्वो विलिख्य, तद्बहिः श्रीबीजं च तथैव बहिर्बहिः पञ्चकृत्वो विलिख्य, तद्बहिरपि तथैव कामबीजं च पञ्चकृत्वो विलिखेत्। एवं विलिखिते कामबीजोदरे श्रीबीजं, तदुदरे भुवनेशीं तदुदरे कर्णिकावृत्तं च भवति। तद्बहिर्द्वितीयवृत्तस्यान्तः षट्कोणं द्वितीयवृत्तेन ईषत् श्लिष्टं प्रथमवृत्तेन सर्वथा अश्लिष्टं च इन्द्राग्निरक्षोवरुणेशानवायुदिग्गतकोणं च यथा भवेत्तथा विलिख्य, तद्बहिस्तत्कोणान्तरालेषु भुवनेशीं विलिख्य तस्या भुवनेश्या रेफांशरेखया स्वं स्वमात्मानं प्रदक्षिणीकृत्य द्वितीयां द्वितीयां भुवनेशीं बहिष्कृत्य तृतीयाया भुवनेश्या ईकारांशेन संबध्नीयात् ॥

पुनस्तथैव तस्या भुवनेश्या ईकारांशेनापि द्वितीयां द्वितीयां भुवनेशीं अन्तः कृत्वा तृतीयाया भुवनेश्या रेफांशेन योजयेत्॥ पुनः षट्सु कोणेषु मायाबीजं चतुर्थस्वरं सबिन्दुकं विलिख्य, पुनष्षट्कोणस्य श्रीमत्पक्षीयं मायापक्षीयं पूर्वार्धगतकोणत्रयमित्यर्थः। तेषु कोणत्रितयाग्रप्रदेशेषु सबिन्दुकानि साधकनामयुक्तानि भुवनेशीश्रीबीजकामबीजानि क्रमेण विलिख्य, पुनर्वह्नि-पक्षीयं रेफपक्षीयं षट्कोणस्य पश्चिमार्धगत कोणत्रितयमित्यर्थः॥ तेषु कोणत्रितयाग्रप्रदेशेषु भुवनेशी श्रीबीज कामबीजानि बिन्दुरहितानि विसर्गयुक्तानि साध्यनामयुक्तानि च क्रमेण विलिखेत्॥ पुनः षट्कोणकपोलेषु हरिहर इति वर्णचतुष्टयं एकैकस्मिन् कपोले द्वन्द्वशो विलिखेत्॥ पुनस्तद्बहिः तृतीयवृत्तस्यान्तरनुलोमगतमातृकावर्णैर्वेष्टयेत्॥ तत्रैवानुलोमगतवर्णवेष्टनाद्बहिः प्रतिलोमगतवर्णैश्च वेष्टयेत्॥ पुनस्तस्माद्वृत्ताद्बहिः अष्टकोणं विलिख्य, प्रागादिमहादिक्स्थ कोणचतुष्टयेपि, नृसिंहैकाक्षरं विलिखेत्॥ आग्नेयादि-विदिग्गतकोणचतुष्टयेऽपि चिन्तामणिबीजं सप्तविंशतिपटले वक्ष्यमाणं विलिखेत्॥ कोणाग्रेषु शूलानि विलिखेत्॥ एतावत्पर्यन्तं षड्गुणितयन्त्रस्वरूपम्॥ पुनः पद्ममारचयेदित्यादि पूजामण्डलविशेषः॥

अस्मिन्यन्त्रे पूजाविधिर्लिख्यते—प्रागुक्तत्रिगुणितयन्त्रपूजोक्तवदेव पीठनव-

शक्त्याद्यः ॥ अस्मिन् भुवनेश्वरीं समावाह्य अङ्गैः प्रथमावृतिः । तद्बहिः षट्सु कोणेषु गायत्र्यै नमः ब्रह्मणे नमः इति ईशानकोणे, सावित्र्यै नमः विष्णवे नमः इति आग्नेयकोणे, सरस्वत्यै नमः महेश्वराय नमः इति मध्यमकोणे, श्रियै नमः धनदाय नमः इति नैर्ऋतकोणे, रत्यै नमः मदनाय नमः इति पश्चिमकोणे, पुष्ट्यै नमः गणनाथाय नमः इति वायुकोणे चेति द्वितीयावृतिः ॥

पुनस्तद्बहिः द्वादशदलेषु, रक्तायै० अनङ्गकुसुमायै० कुसुमातुरायै० नित्यायै० अनङ्गमदनायै० मदनातुरायै० गौर्यै० गगनायै० गगनरेखायै० पद्मायै० भयप्रमथिन्यै० शशिरेखायै० १२ एवं तृतीयावृतिः ॥ मातृभिश्चतुर्थ्यावृतिः ॥ इन्द्रादिभिः पञ्चमी ॥ वज्रादिभिष्षष्ठी ॥ इत्थं षड्गुणितयन्त्रे पूजाप्रकारः ॥

इति प्रपञ्चसारसारसंग्रहे गीर्वाणेन्द्रविरचिते

नवमः पटलः ॥



## ॥ अथ दशमः पटलः ॥

अथ द्वादशगुणितयन्त्रविधानं वक्ष्ये —

व्याहृत्यावीतशक्तिज्वलनपुरयुगद्वन्द्वसन्ध्युत्थशक्त्या-
वीतं कोणोत्थदुर्बीजकमनुचकपोलात्तगायत्रिमन्त्रम् ।
आग्नेयावीतमर्णैः वृतमनुविगतैः भूपुराभ्याश्च रन्ध्रे
क्ष्रौं चिन्तारत्नकद्वादशगुणितमिदं यन्त्रमिष्टार्थदायि ॥

पूर्वोक्तमानक्लृप्त्या मन्त्री त्रितयं विलिख्य वृत्तानाम् ।
विलिखेदन्तर्वर्तुळमनुशक्तिं स्पष्टबिन्दुनिष्ठानाम् ॥

द्वादशमध्यवर्तुळरेखाया बहिरालिखेत्तु शक्तीनाम् ।
हरियमवरुणधनाधिपदिक्षु द्वे द्वे च ताः क्रमेण स्युः ॥

ईशानाग्निनिर्ऋतिमरुतां दिक्ष्वेकैकं विलिख्य भूयश्च ।
बीजान्तराळनिर्गतशूलाङ्कितकोणषट्कयुगमग्नेः ॥

मण्डलयुगयुगळं स्यादस्पृशदान्तरितवर्तुळं विशदम् ।
शक्तिं प्रवेष्टयेच्च प्रतिलोमव्याहृतिभिरन्तस्थाम् ॥

रविकोणेषु दुरन्तां मायां विलिखेदथात्र बिन्दुमतीम् ।
एकैकान्तरितास्ताः परस्परं शक्तयश्च संबध्युः ॥

गायत्रीं प्रतिलोमतः प्रविलिखेदग्नेः कपोलं बहिः
द्वे द्वे चैव लिपी बहिश्च रचयेत् भूयस्तथा त्रिष्टुभम् ।
वर्णान् प्रानुगतांश्च भूपुरयुगे सिद्धाख्यचिन्तामणिं
लिख्याद्यन्तमशेषदुःखशमनायोक्तं पुरा देशिकैः ॥

बहिरथ षोडशपत्रं वृत्तं विचित्रं च राशिवीथियुतम् ।
रचयन्मण्डलमेवं पुनरत्र निधापयेत्कलशम् ॥ इति ॥

अस्यार्थः — तत्र व्याहृत्यावीतशक्तिः व्याहृतित्रयाक्षरैः प्रतिलोमैर्वेष्टितं हृल्लेखाबीजं, ज्वलनपुरयुगद्वन्द्वसन्ध्युत्थशक्त्या वीतं वह्निपुरद्वन्द्वद्वयकोणसन्धिषु लिखितहृल्लेखाभिरावीतं, प्राग्वत् द्वादशभिर्हृल्लेखाभिः एकान्तरितमावीतं आबद्धमित्यर्थः ॥ कोणोत्थदुर्बीजकं कोणेषु द्वादशसु लिखित दुह्री इत्यक्षरद्वयजनितकं विन्दु । एतदुक्तं भवति — दुकारह्रींकाराक्षरे विलिख्य तयोरूर्ध्वमनुस्वारं विलिखेदिति ॥ अनु अनन्तरं चकारस्समुच्चये । कपोलात्तगायत्रिमन्त्रं, कपोलेषु प्राग्वदालिखितगायत्रीमन्त्राक्षरम् । आग्नेयावीतं जातवेदसा ऋचा अनुलोमेन च प्रतिलोमेन च वीतम् । अर्णैर्वीतमनुविगतैः अकारादिक्षकारान्तैर्मातृकावर्णैः अनुलोमेन प्रतिलोमेन च वृतं, भूपुराभ्यां चतुरश्राभ्याम् ॥ चकारस्समुच्चये ॥ अश्रेषु क्ष्रौं चिन्तारत्नकं, भूपुरद्वयकोणचतुष्टये क्ष्रौं इति स्वरूपोपादानं नृसिंहबीजस्य, कोणकोणेषु चिन्तारत्नाख्यं, उपरि अनलकषमेत्यादिना वक्ष्यमाणबीजं आलिखेदित्यर्थः ॥ द्वादशगुणितमिति संज्ञा ॥

एतदुक्तं भवति — प्रथमं कर्णिकाख्यं वृत्तं षडंगुलमानेन विलिख्य, तद्बहिरपि तथैव षडंगुलविशालेन वृत्तद्वयं विलिख्य, कर्णिकावृत्तमध्ये भुवनेशीमन्तस्साध्यनामयुक्तां, बहिः प्रतिलोमव्याहृतित्रितयवेष्टितां च विलिख्य, पुनः कर्णिकावृत्ताद्बहिः द्वादशभुवनेशीर्विलिखेत् । तत्र प्रागादिमहादिक्षु भुवनेशीद्वन्द्वं विलिख्य, आग्नेयादिविदिक्षु एकैकां भुवनेशीं च विलिखेत् । पुनस्तद्बहिः द्वितीयवृत्तस्यान्तः पूर्वपश्चिमतः षट्कोणं विलिख्य, तदुपरि दक्षिणोत्तरतश्च षट्कोणं अस्पृष्टकर्णिकावृत्तं विलिख्य, द्वादशसु कोणेषु दुमिति दुर्गाबीजं भुवनेशीं च सर्वत्रान्तर्बहिः क्रमेण विलिखेत् । पुनः कोणान्तरस्थदुर्गाबीजान्निर्गतानि बहिर्मुखानि द्वादशशूलानि विलिखेत् । एवं विलिखिते त्रिशूलान्तरालद्वन्द्वं कोणस्य कपोलदेशे भवति । तस्मात् कपोल-

भूतेषु त्रिशूलान्तरालेषु चतुर्विंशतिषु प्रसिद्धगायत्रीवर्णान् प्रतिलोमक्रमेण एकैकं विलिख्य, पुनर्द्वादशकोणकपोलेषु द्वादशभुवनेशीः विलिखेत्। तासां रेफांशेन च ईकारांशेन च एकैकान्तरितक्रमेण पूर्वप्रोक्तषड्गुणितयन्त्रप्रोक्तवत् ताश्शक्तयः संबध्युः ॥ पुनस्तद्बहिः तृतीयवृत्तस्यान्तः प्रथमं जातवेदस इति मन्त्रवर्णैः अनुलोमितैर्वेष्टयेत् ॥ पुनस्तत्रैव तद्बहिः तन्मन्त्रप्रतिलोमवर्णैश्च संवेष्टय, पुनः तत्रैव तद्बहिः मातृकावर्णैश्च तथैवानुलोमितैः प्रतिलोमितैश्च वेष्टयेत् ॥ पुनस्तृतीयवृत्ताद्बहिः अष्टकोणं विलिख्य, तस्य कोणेषु प्रागादिक्रमेण नृसिंहबीजं आग्नेयादिकोणेषु सप्तत्रिंशतिपटले वक्ष्यमाणं चिन्तामणिं च विलिखेत् ॥ एतावत्पर्यन्तमुक्तं द्वादशगुणितयन्त्रस्वरूपम् ॥

अतः परं "बहिरथ षोडशपत्रं" इत्यादिग्रन्थैः पूजामण्डलविशेष उक्तः इति द्वादशगुणितयन्त्रम् ॥

अथास्मिन्यन्त्रे भुवनेश्याः पूजाविधिः —

पीठार्चनावाहनादीन् पूर्वोक्तवदेव कृत्वा, पुनरङ्गैः प्रथमावृतिः। पुनः हृल्लेखायै० गगनायै० रक्तायै० करालिकायै० ४ इति प्रागादिदिक्षु चतसृभिः द्वितीयावृतिः। मातृभिस्तृतीयावरणम् ॥ पुनः कराल्यै० विकराल्यै० उमायै० सरस्वतीदेव्यै० दुर्गायै० शच्यै० उषायै० लक्ष्म्यै० श्रुत्यै० स्मृत्यै० धृत्यै० श्रद्धायै० मेधायै० मत्यै० कान्त्यै० आर्यै० (आर्यायै) १६ इति षोडशभिश्चतुर्थावरणम् ॥ पुनः विद्यायै० ह्रियै० पुष्ट्यै० प्रज्ञायै० सिनीवाल्यै० कुह्व्यै० रुद्रवीर्यायै० प्रभानन्दायै० पोषिण्यै० ऋद्धिदायै० शुभायै० कालरात्र्यै० महारात्र्यै० भद्रकाल्यै० कपालिन्यै० विकृत्यै० दण्डिन्यै० मुण्डिन्यै० इन्दुखण्डायै० शिखण्डिन्यै० निशुम्भमथिन्यै० शुम्भमथिन्यै० महिषासुरमर्दिन्यै० इन्द्राण्यै० रुद्राण्यै० शङ्करार्धशरीरिण्यै० नार्यै० नारायण्यै० त्रिशूलिन्यै० पालिन्यै० अम्बिकायै० आह्लादिन्यै० ३२ इति द्वात्रिंशद्भिः पञ्चमावरणम् ॥

पुनः पिङ्गलाक्ष्यै० विशालाक्ष्यै० समृध्द्यै० वृध्द्यै० श्रद्धायै० स्वाहायै० स्वधायै० मायायै० वसुन्धरायै० त्रिलोकधात्र्यै० गायत्र्यै० सावित्र्यै० त्रिदशेश्वर्यै० स्वरूपायै० बहुरूपायै० स्कन्दमात्रे० अच्युतप्रियायै० विमलायै० अमलायै० अर्धायै० श्यामायै० अरुणायै० तरुण्यै० प्रकृत्यै० विकृत्यै० सृष्ट्यै० स्थित्यै० संहृत्यै० सन्ध्यायै० मात्रे० सत्यै० हंसायै० मदिरायै० वज्रिकायै० देवमात्रे० भगवत्यै० देवक्यै० कमलासनायै० त्रिमुख्यै० सप्तमुख्यै० सुरविमर्दिन्यै० असुरविमर्दिन्यै० लम्बोष्ठ्यै० ऊर्ध्वकेश्यै० बहुशिरायै० वृकोदर्यै० रथरेखायै० शितिरेखायै० गगनवेगायै० पवनवेगायै० भुवनपालायै० मदनातुरायै० अनङ्गायै० अनङ्गमदनायै० अनङ्गमेखलायै० अनङ्गकुसुमायै० विश्वरूपायै० असुरभयङ्कर्यै० अक्षोभ्यायै० सत्यवादिन्यै० वज्ररूपायै० शुचिव्रतायै० वरदायै० वागीश्वर्यै० ६४ एताभिश्चतुष्षष्टिसंख्याकाभिः षष्ठावरणम् । इन्द्रादिभिस्सप्तमी । वज्रादिभिरष्टमी । एवं द्वादशगुणितयन्त्रे भुवनेशीं पूजयेत् ॥

अथ पाशांकुशवर्णमध्यगतरूपाया भुवनेश्या घटार्गलायन्त्रमुच्यते —

आं ह्रीं क्रों इति पाशांकुशत्र्यक्षरीमन्त्रः ॥ ऋष्यादिकं पूर्वोक्तशुद्धभुवनेश्वर्युक्तवदेव ॥

अष्टाशाक्तार्गळाविहलयवरयुतं पूर्वपाश्चात्यषट्कं
कोणोद्यत्स्वाङ्गसाष्टाक्षरयुगयुगळाष्टाक्षराख्यं बहिश्च ।
मायोपेतात्मयुग्मस्वरमिलितलसत्केसरं साष्टपत्रं
पद्मं तन्मध्यवर्ति त्रितय परिलसत्पाशशक्त्यंकुशार्णम् ॥

पाशांकुशावृतमनुप्रतिलोमगैश्च
वर्णैस्सरोजपुटितेन घटेन चापि ।

आवीतमिष्टफलभद्रघटं तदेतत्
यन्त्रोत्तमं त्विह घटार्गळनामधेयम् ॥

प्राक्प्रत्यगर्गलेहलमथ पुनराग्नेयमारुते चहयम् ।
दक्षोत्तरेहवर्णं नैर्ऋतशैवे हरं द्विपंक्ति लिखेत् ॥

विलिखेच्च कर्णिकायां पाशांकुशसाध्यसंयुतां शक्तिम् ।
आभ्यन्तराष्टकोष्ठेष्वङ्गान्यवशेपितेषु चाष्टार्णौ ॥

कोष्ठेषु षोडशस्वथ षोडशवर्णं तथा मनुं मन्त्री ।
पद्मस्य केसरेष्वथ युगस्वरात्मान्वितां तथा मायाम् ॥

एकैकेषु दळेषु त्रिशस्त्रिशः कर्णिकागतान्वर्णान् ।
पाशांकुशबीजाभ्यां प्रवेष्टयेत् बाह्यतश्च नळिनस्य ॥

अनुलोमविलोमगतैः प्रवेष्टयेदक्षरैश्च तद्बाह्ये ।
तदनु घटेन सरोजस्थितेन तद्वक्त्रकेम्बुजं च लिखेत् ॥

बिन्द्वन्तिका प्रतिष्ठा सन्दिष्टा पाशबीजमिति मुनिभिः ।
निजभूर्दहनाप्यायिनी(नि) शशधरखण्डान्वितोऽङ्कुशो भवति ॥

पाशश्रीशक्तिस्मरमन्मथशक्तीन्दिरांकुशाश्चेति ।
एकं कामिनि रञ्जिनि ठद्वयं परमिहाष्टवर्णं स्यात् ॥

अथ गौरि रुद्रदयिते योगेश्वरि सकवचास्त्र ठद्वितयैः ।
बीजादिकमिदमुक्तं शाक्तेयं षोडशाक्षरं मन्त्रम् ॥

अस्यार्थः — पाशांकुशाभ्यां शक्तिबीजं संपुटीकृत्य जपादिकं कुर्यात् ॥ अस्य मन्त्रस्य घटार्गळं नाम यन्त्रम् । तदपि वक्ष्यते ॥ प्रथमं सूर्यकिरणवत्

अष्टदिक्षु प्रसृता दीर्घायमाना अर्गळासंज्ञका अष्टौ द्वन्द्वरेखा विलेखनीयाः । पुनस्तासां सर्वासामादिसन्धौ वृत्तं विलिख्य, पुनश्चतुरंगुलं विहाय तदुपरि परितो वृत्तं विलिख्य, पुनस्सर्वार्गळामध्यदेशेऽपि वृत्तं विलिख्य, पुनस्तद्बहिरपि रेखाग्रात् प्राक् चतुरंगुलमानान्तेपि वृत्तं कृत्वा, पुनस्तदुपरि पूर्वलिखिता-र्गळाष्टकान्तराळेष्वपि वृत्तादारभ्य अर्गळाष्टकं पूर्वलिखितार्गळाष्टकाग्रसमानं विलिख्य, तासां षोडशार्गळानामग्रेष्वपि वृत्तरेखां विलिखेत् ॥

पुनः प्रथमवृत्तमध्ये आं ह्रीं क्रों इति पाशांकुशत्र्यक्षरीं विलिखेत् ॥ तत्र तु भुवनेशीपार्श्वद्वन्द्वे पाशांकुशबीजद्वयं भुवनेशीमध्ये साध्यनामादीन् विलिखेत् । पुनः प्रथमवृत्ताद्बहिरष्टसु कोष्ठेषु भुवनेश्वर्याष्षडङ्गानि आग्नेयादि-विदिक्षु अर्चनाक्रमेण विलिख्य, पुनस्तद्वृत्ताद्बहिः तृतीयवृत्तेऽष्टसु कोष्ठेषु शाक्तेयमष्टाक्षरं विलिखेत् ॥ तन्मन्त्रप्रकारः —

पाशश्रीशक्तिस्मरमन्मथशक्तीन्दिरांकुशात्मकम् ।
"आं श्रीं ह्रीं क्लीं क्लीं ह्रीं श्रीं क्रों" इति मन्त्रार्णान्विलिखेत् ॥

पुनस्तद्बहिरपि चतुर्थे वृत्ते अष्टसु कोष्ठेषु अपरं शाक्तेयाष्टाक्षरं विलिखेत् । तत्प्रकारः — "कामिनी रञ्जिनी स्वाहा" इति । पुनस्तद्बाह्यषोडशकोष्ठेषु ॐ गौरि रुद्रदयिते योगेश्वरि हुंफट् स्वाहा" इति शाक्तेयं षोडशाक्षरं क्रमेण विलिखेत् ॥ पुनरष्टास्वर्गळासु वक्ष्यमाणान्मन्त्रान् वक्ष्यमाणक्रमेण विलिखेत् ॥

तत्र प्रथमं पूर्वार्गळायां यमेन्द्रबीजरूपं हकारलकारस्वरूपं ह्लं ह्लां ह्लिं ह्लीं इति चतुष्टयं कर्णिकापर्यन्तादुत्तरत आरभ्यार्गळाग्रान्तमालिख्य, पुन-स्तत्रैवार्गळाग्रमारभ्य दक्षिणतः कर्णिकापर्यन्तं तदेव बीजं ह्लुं ह्लूं इत्यव-शिष्टाक्षरद्वयं विलिखेत् ॥

पुनः पश्चिमार्गळायां दक्षिणतः कर्णिकापर्यन्तादारभ्य तस्यैव बीजस्य

ह्लें ह्लैं ह्लों ह्लौं ह्लं ह्लः इत्यवशिष्टबीजषट्कस्य चतुष्कं अर्गलाग्रपर्यन्तं विलिख्य पुनरग्रादारभ्य उत्तरतः कर्णिकापर्यन्तं अवशिष्टबीजद्वयं विलिखेत् ॥

पुनरेवमेव आग्नेयमारुतार्गलयोः वियद्वायुरूपं हकारयकारसंयुक्तं ह्यं ह्यां इत्यादिद्विषट्कं आग्नेयमारुतार्गलविभागेन पूर्वार्गललिखितरीत्या पार्श्वद्वयविभागेन वर्णचतुष्टयद्वितयक्रमेण विलिखेत् ॥

पुनरेवमेव दक्षिणोत्तरयोः वियद्वरुणरूपं हकारवकारस्वरूपं ह्वं ह्वां इत्यादिद्वादशकं विलिखेत् ॥

पुनरेवमेव निर्ऋतीशानार्गळयोः वियदनलबीजरूपं हकाररेफस्वरूपं ह्रं ह्रां इत्यादिद्वादशकं विलिखेत् । एवमर्गळासु लेखनप्रकारः ॥

पुनस्सर्वतो बहिरष्टार्गळासन्धिदेशादूर्ध्वतः अष्टदळं पद्मं विलिख्य, तस्य केसरेषु सबिन्दुकं चतुर्थस्वरं अजपाक्षरद्वयं च स्वरवर्णद्वन्द्वं च ईं हंसः अं आं इत्यादिप्रकारेण एकैकस्मिन् विलिख्य, पुनस्तद्दळमध्येषु पंक्त्याकारेण पाशशक्त्यंकुशबीजानि आं ह्रीं क्रों इति त्रीण्यपि सर्वत्र विलिखेत् ॥ तद्बहिः वृत्तद्वयं विलिख्य प्रथमे वृत्ते पाशेन द्वितीये अंकुशेन च संवेष्ट्य, तद्बहिर्वृत्तद्वयं विलिख्य प्रथमे अनुलोममातृकया, द्वितीये प्रतिलोममातृकया च संवेष्टयेत् ॥ प्रतिलोमगैश्चेति चकारात् प्रथममनुलोमवर्णैर्वेष्टनमूह्यते ॥ तद्बहिः कुम्भाख्येन वकारेण वेष्टयेत् ॥ तद्बहिर्घटाकाररेखया सरोजसंपुटितया वेष्टयेत् ॥ घटेन चापीति चकारात् घटवेष्टनात् पूर्वं वकारैर्वेष्टयेदिति निगम्यते ॥ एवं घटार्गळायन्त्रलेखनविधिः ॥

अस्मिन्यन्त्रे पूर्ववत् पीठं संपूज्य, भुवनेशीं तस्मिन्नावाह्य समर्चयेत् ॥ हृल्लेखायै० गगनायै० रक्तायै० करालिकायै० (४) एताभिश्चतसृभिः पूर्वादिदिक्षु प्रथमावृतिः ॥ अंगैर्द्वितीयावृतिः ॥ मातृभिस्तृतीयावृतिः ॥ इन्द्रादिभिश्चतुर्थी ॥

वज्रादिभिः पञ्चमी ।। एवं घटार्गलायन्त्रे पाशांकुशमध्यगताया भुवनेश्याः पूजाप्रकारः ।।

एवं पूजां कृत्वा इमं त्र्यक्षरीमन्त्रं चतुर्विंशतिलक्षं जपेत् ।। क्षीरद्रुमचतुष्टयस्य समिद्भिः दध्याज्यक्षौद्रसिक्ताभिः संभूय सहस्रषट्कं तिलैश्च पयस्सिक्तैः तावत्संख्यं च जुहुयात् पुरश्चरणार्थम् ।। अश्वत्थवटौदुम्बरप्लक्षाः क्षीरद्रुमाः ।। पुनः,

गजमृगमदकाश्मीरैः मन्त्रितमस्सुरभिरोचनोपेतैः ।
विलिखेदलक्तकरसालुलितैर्यन्त्राणि सकलकार्यार्थी ।।

मृगमदं-புனுகு, कस्तूरी-கஸ்தூரி, काश्मीरं-குங்குமப்பூ, सुरभिः-சந்தணம், रोचनं-கோரோசனை, अलक्तकं-செம்பஞ்சு.

एतैर्मिलितैः उक्तयन्त्रचतुष्टयं विलिखेत् ।। धारणार्थं चेत्, "प्रसीद प्रपञ्चस्वरूपे प्रधाने प्रकृत्याधिके" इत्यादिकया स्तुत्या स्तुतिं कुर्यात् ।। तत्प्रकारस्तु ग्रन्थबाहुल्यभयान्नात्र लिख्यते ।।

इति प्रपञ्चसारसारसंग्रहे गीर्वाणेन्द्रविरचिते
दशमः पटलः ।।



## ॥ अथ एकादशः पटलः ॥

---

अथ मन्त्रदेवताप्रकाशिकोक्तप्रकारेण भुवनेश्वर्याः पुरश्चर्याप्रयोगादिविधिः लिख्यते —

एकलिङ्गे शिवागारे दक्षिणामूर्तिमाश्रितः ।
बद्धपद्मासनो भस्मशायी च कुशविष्टरः ॥

कृष्णाष्टमीं समारभ्य यावत्कृष्णचतुर्दशी ।
नित्यमिष्ट्वा शिवं शक्तिं जपेन्मन्त्रं सहस्रकम् ॥

दधिक्षौद्रघृताभ्यक्ता व्याघातसमिधो हुनेत् ।
ततश्चाष्टसहस्राणि ध्यायन् सर्वेश्वरीं जपेत् ॥

अथ विनियोगः —

नित्यं सौभाग्यदं पञ्चविंशज्जप्त्वाऽभिषेचनम् ।
मेधावी च भवेद्वाग्मी तावज्जप्त्वाम्बुपानतः ॥

जिह्वाग्रे न्यस्य तज्जप्तं वाक्सिद्धिकविताकरम् ।
तज्जप्तमञ्जनं वश्यं कर्पूरागरुसंयुतम् ॥

सासृक् भस्मारुणालेपैः वश्यकृत् तिलकक्रिया ।
जानुमात्रे जले स्थित्वा निश्चलोन्मीलितेक्षणः ॥

जपेत्सहस्रकं रात्रौ इष्टामाकर्षयेत् प्रियाम् ।
लाजैः कन्यामवाप्नोति तिलैरारोग्यमश्नुते ॥

पुष्टिमान्दधिहोमेन ताम्बूलैश्च तथा भवेत् ।

अथ श्रीमन्त्रविधानमुच्यते —

भृगु ऋषिः । निचृत् छन्दः । श्रीर्देवता ॥ शं बीजम् । ईं शक्तिः ॥ श्रां हृत् । श्रीं शिरः । इत्याद्यङ्गानि ॥ ध्यानम् —

भूयाद्भूयो द्विपद्माभयवरदकरा तप्तकार्तस्वराभा
शुभ्राभ्राभेभयुग्मद्वयकरधृतकुम्भाद्भिरासिच्यमाना ।
रत्नौघाबद्धमौलिर्विमलतरदुकूलार्तवालेपनाढ्या
पद्माक्षी पद्मनाभोरसि कृतवसतिः पद्मगा श्रीः श्रियै नः ॥

श्रीं ॥ इति मन्त्रः ॥ ऐश्वर्यप्रधानोयं मन्त्रः ॥ द्वादशलक्षजपः ॥ द्वादशसहस्रं त्रिमधुरसिक्तैः सरोजैर्वा तिलैर्वा बिल्वसमिद्भिर्वा त्रिभिरपि वा जुहुयात् पुरश्चरणार्थम् ॥ अथ पुरश्चरणाकलशं शुद्धजलैर्वा अन्यैः कषायजलैर्वा संपूर्य संपूज्य संजप्य समभिषिञ्चेत् शिष्यं गुरुः ॥

अथ पीठपूजार्थं पीठविधानमुच्यते —

रुचिराष्टपत्रमथ वारिरुहं गुणवृत्तराशिचतुरश्रयुतम् ।
प्रविधाय पीठमपि तत्र यजेत् नवशक्तिभिस्सह रमां च ततः ॥

अयमर्थः — अष्टपत्रं विलिख्य, तद्बहिर्वृत्तत्रयं विलिख्य, तद्बहिर्द्वादशराशिखण्डं विलिख्य, तद्बहिश्चतुरश्रं विलिख्य, कर्णिकायां श्रीबीजं विलिख्य, तस्मिन्पीठे नवशक्तिभिरिष्ट्वा, रमामावाहयेत् ॥ विभूत्यै० उन्नत्यै० कान्त्यै० हृष्टयै० कीर्त्यै० सन्नत्यै० व्युष्टयै० उत्कृष्टयै० ऋद्धयै० (९) इति नवशक्तयः ॥ श्रीं श्रीदेव्यासनाय नमः । श्रीं श्रीदेवीमूर्तये नमः । इति कर्णिकायां नवशक्त्यादौ श्रीबीजं योजयेच्च ॥ पुनरावाह्य अङ्गैः प्रथमावृतिः ॥ वासुदेवाय० संकर्षणाय० प्रद्युम्नाय० अनिरुद्धाय० (४) इति पूर्वादिदिक्षु, दमकाय० शलभाय० गुग्गुलवे० कुरण्डकाय० (४) इति, गजानाग्नेयादिविदिक्षु, शङ्खनिधये० पद्मनिधये० इति

वामदक्षिणपार्श्वयोः। इति द्वितीयावृतिः॥ बलाक्यै० विमलायै० कमलायै० वनमालिकायै० विभीषिकायै० द्राविकायै० शाङ्क्यै० वसुमालिकायै० (८) इति तृतीयावृतिः॥ इन्द्रादिभिश्चतुर्थी॥

अथ प्रयोगः—

अम्भस्युरोजद्वयसेऽभितिष्ठन् त्रिलक्षमेनं प्रजपेन्मनुं च।
श्रियं विचिन्त्यार्कगतां यथावत् दरिद्रताया भवति प्रमुक्तः॥

अयमर्थः— स्तनप्रमाणे जले स्थितः एनं मन्त्रं श्रीबीजं लक्षत्रयं जपेत् सूर्यमण्डले लक्ष्मीं ध्यायन्। दरिद्रतायाः प्रमुक्तो भवति॥

प्रयोगान्तरम्—

वसतावुपविश्य कैटभारेः कमलावृक्षतलेऽथवा त्रिलक्षम्।
जपतोपि भवेच्च कांक्षितार्थात् अधिकं वत्सरतो वसुप्रपञ्चः॥

अयमर्थः— विष्णवालये बिल्ववृक्षनिकटे (मूले)वा स्थित्वा लक्षत्रयं जपेत्॥ संवत्सरात्प्रागेव वसुप्रपञ्चो भवति॥

प्रयोगान्तरम्—

जुहुयादशोकदहने सघृतैरपि तण्डुलैस्सकलवश्यतमम्।

अयमर्थः—अशोकेन्धनकृतदहने घृतसिक्तैस्तण्डुलैः संख्यानुक्ते सहस्रमिति न्यायात् सहस्रं जुहुयात्। वश्यकरं भवति॥

प्रयोगान्तरम्—

खदिरानले त्रिमधुरैरपि धनदं च राजकुलवश्यमपि॥

खदिरं - கருங்காலி अयमर्थः— खदिरेन्धनकृतदहने त्रिमधुरसिक्तैस्तण्डुलैः होमो धनप्रदश्च राजकुलवश्यदश्च स्यात्॥

प्रयोगान्तरम् —

समधुरनळिनानां लक्षहोमादलक्ष्मी-
परिगतमपि जन्तुं प्राप्नुयात् श्रीस्समग्रा ।
धनविभवसमृद्ध्या नित्यमाह्लादयन्ती
त्यजति न करुणार्द्रा तस्य सा सन्ततिं च ॥

अयमर्थः– त्रिमधुरसिक्तैः कमलैः लक्षं यो जुहोति तमलक्ष्मीनिकटस्थमपि लक्ष्मीः प्राप्नुयात् ॥ तस्य सन्ततिं च न त्यजति ॥

प्रयोगान्तरम् —

बिल्वं श्रीसूक्तजापी निजभुवि मुखजो वर्धयित्वाऽस्य पूर्वं
पत्रैस्त्रिस्वादुयुक्तैः कुसुमफलसमित्स्कन्धभेदैस्ततश्च ।
तन्मूलैर्मण्डलात्प्राक् सुनियतचरितोऽसौ हुतान्निर्मलात्मा
रूपं पश्येद्रमायाः कथमपि च (न) पुनः तत्कुले स्यादलक्ष्मीः ॥

अयमर्थः–– पूर्वं ब्राह्मणो निजभूमौ बिल्वं संस्थाप्य तत्स्पृष्ट्वा श्रीसूक्तं जपेत् । श्रीसूक्तजापी सन् जलसेचनं च कुर्यात् ॥ पुनरस्य बिल्ववृक्षस्य यानि पत्राणि तानि सर्वाणि संगृह्य क्रमेणैकैकं त्रिमधुरसिक्तं श्रीबीजमन्त्रेण जुहुयात् ॥ पुनस्तदवसाने यानि कुसुमानि तान्यपि त्रिमधुरसिक्तानि क्रमेण पूर्ववदेव जुहुयात् ॥ पुनस्तत्फलैरप्येवमेव जुहुयात् । पुनस्तस्य समिद्भिः पुनस्तस्य भृङ्गभेदैः पुनस्तस्य मूलैश्च त्रिमधुरसिक्तैः सर्वैरेव जुहुयात् । तस्मात् निर्मलात्मा भूत्वा मण्डलात्प्रागेव रमायाः स्वरूपं पश्यति । अलक्ष्मीपरिहारोपि भवतीति किमु वक्तव्यम् !

अथ रमामन्त्रप्रसंगात् कल्पान्तरोक्तोपि रमामन्त्रो लिख्यते—

ब्रह्मा ऋषिः । गायत्री छन्दः । रमाविद्या देवता । श्रीं बीजम् । स्वाहा

शक्तिः। श्रीं हृत्। स्वाहा शिरः। श्रीं शिखा। स्वाहा कवचम्। एवंप्रकारेण षडङ्गानि ॥ ध्यानम्—

तटिच्छोभापूर्णां तपनशशिताटङ्कयुगळां
लसद्ग्रीवां क्षौमांशुकविशदनाभीसरसिजाम्।
दरस्मेरां धीरां करकलितपद्मां द्वि(त्रि)नयनां
रमाविद्यां वन्दे वरपुरुषवामोरुनिलयाम् ॥

श्रीं ॐ नमो भगवति सर्वसौभाग्यदायिनि श्रींविद्ये महाविभूतये स्वाहा ॥ इति मन्त्रः ॥ वर्णलक्षं जपः ॥ पायसलाजाज्यदूर्वाभिः वर्णसहस्रं हुनेत् पुरश्चरणार्थम् ॥

अथ यन्त्रम्--

मध्ये स्वाहाऽष्टपत्रे प्रतिदळयुगळं वर्णमालिख्य बाह्ये
शिष्टान्वर्णान्दशारे(वसु)पुटभवनेष्वष्टबीजं तु लक्ष्म्याः।
बाह्ये पञ्चाशदर्णं प्रणवपरिवृतं स्वेष्टसाध्यं च मायां
लक्ष्मीयन्त्रं तदेतत् त्रिभुवनविभवश्रीप्रदं दिव्यदिव्यम् ॥

अस्यार्थः — प्रथममष्टपत्रं विलिख्य तन्मध्ये स्वाहा इति वर्णद्वयं तन्मध्ये रमाबीजं ससाध्यं दळेषु मन्त्रवर्णद्वन्द्वं तद्बहिर्दशदळपद्मे मन्त्रवर्णैकैकं तद्बहिरष्टकोणं तेषु लक्ष्मीबीजं दीर्घस्वराक्षराष्टकयुक्तं तद्बहिर्वृत्ते मातृकां तद्बहिः प्रणवेन वेष्टयेत् ॥

अथ लक्ष्मीयन्त्रान्तरमुच्यते—

दक्ष ऋषिः। विराट् छन्दः। श्रीर्देवता। ॐ बीजम्। स्वाहा शक्तिः। ॐ देव्यै नमः हृत्। ॐ पद्मिन्यै नमः शिरः। ॐ विष्णुपत्न्यै नमः शिखा। ॐ वरदायै नमः कवचम्। ॐ कमलरूपायै नमः अस्त्रम् ॥

ध्यानम् —

पद्मस्था पद्मनेत्रा कमलयुगवराभीतियुग्दोस्सरोजा
देहोत्थाभिः प्रभाभिः त्रिभुवनमखिलं भासुरा भासयन्ती ।
मुक्ताहाराभिरामोन्नतकुचकलशा रत्नमञ्जीरकाञ्ची-
ग्रैवेयोर्म्यङ्गदाढ्या धृतमणिमकुटा श्रेयसे श्रीर्भवेद्वः ॥

नमः कमलवासिन्यै स्वाहा ॥ इति मन्त्रः ॥ ऐश्वर्यप्रधानोयं मन्त्रः ॥ दशलक्षं जपेत् । त्रिमधुरसिक्तैः कमलैरयुतं जुहुयात् पुरश्चरणार्थम् ॥

अथ पूजाविधिः — पूर्ववत् पीठं संपूज्य तस्मिन्देवीं समावाह्य समर्चयेत् ॥ प्रथममष्टपत्रमूलेषु अङ्गैः प्रथमावृतिः ॥ बलाक्यै० विमलायै० कमलायै० नवमालिकायै० विभीषिकायै० द्राविकायै० शाङ्क्यै० वसुमालिकायै० ८ इति दलेषु द्वितीयावृतिः ॥ लोकेशैः दळान्ते तृतीयावृतिः ॥

अथ प्रयोगः —

समुद्रगायामवतीर्य नद्यां स्वकर्णमात्रे पयसि स्थितस्सन् ।
त्रिलक्षजाप्याढ्यतमोऽब्दमात्रात् मन्त्री भवेन्नात्र विचारणीयम् ॥

प्रयोगान्तरम् —

नन्द्यावर्तैर्जुहुत भगभेऽभ्यर्च्य लक्ष्मीं सहस्रं
तावद्बैल्वैस्त्रिमधुरयुतैर्वा फलैः पौर्णमास्याम् ।
पञ्चम्यां वा सितसरसिजैश्शुक्रवारेऽच्छपुष्पैः
अन्यैर्मासं प्रतिहुतविधिर्वत्सरात्स्याद्धनाढ्यः ॥

अयमर्थः–भगभं उत्तरफल्गुनी ॥ नन्द्यावर्तपुष्पैः बैल्वफलैर्वा त्रिमधुरसिक्तैः सहस्रं जुहुयात् ॥ अथवा पौर्णमास्यां वा पञ्चम्यां वा श्वेतसरसिजैः प्रतिमासं

जुहुयात् ॥ अथवा प्रतिशुक्रवारं अन्यैर्धवळपुष्पैर्जुहुयात् ॥ एवं कृते वत्सराद्धनाढ्यो भवति ॥

लक्ष्मीमन्त्रान्तरमुच्यते — दक्ष ऋषिः । विराट् छन्दः । श्रीर्देवता ॥ श्रीं बीजम् । ह्रीं शक्तिः । ओं श्रीं ह्रीं श्रीं कमले श्रीं ह्रीं श्रीं ओं हृत् । ओं श्रीं ह्रीं श्रीं कमलालये श्रीं ह्रीं श्रीं ओं शिरः । ओं श्रीं ह्रीं श्रीं प्रसीद श्रीं ह्रीं श्रीं ओं शिखा । ओं श्रीं ह्रीं श्रीं प्रसीद श्रीं ह्रीं श्रीं ओं कवचम् । ओं श्रीं ह्रीं श्रीं महालक्ष्मि नमः श्रीं ह्रीं श्रीं ओं अस्त्रम् ॥ ध्यानम् —

हस्तोद्यद्द्वसुपत्रपङ्कजयुगादर्शस्फुरन्नूपुरा
ग्रैवेयाङ्गदहारकङ्कणमहामौळिज्वलत्कुण्डला ।
पद्मस्था परिचारिकापरिवृता शुक्लाङ्गरागांशुका
देवी दिव्यगणानता भवदघप्रध्वंसिनी स्याद्रमा ॥

ओं श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद श्रीं ह्रीं श्रीं महालक्ष्मि नमः ॥ इति महालक्ष्मीमन्त्रः । सप्तविंशत्यर्णः ॥ ऐश्वर्यफलप्रधानोयं मन्त्रः ॥ लक्षं जपेत् । पूर्वोक्तलक्ष्मीपीठे समावाह्य समर्चयेत् । अङ्गैः प्रथमावृतिः । श्रीधराय० हृषीकेशाय० वैकुण्ठाय० विश्वरूपाय० वासुदेवाय० संकर्षणाय० प्रद्युम्नाय० अनिरुद्धाय० ८ इति द्वितीयावृतिः ॥

भारत्यै० पार्वत्यै० *चन्द्रायै० शच्यै० ४ इति पूर्वादिदिक्षु । दमकाय० शलभाय० गुग्गुलवे० कुरण्डकाय० ४ इत्याग्नेयादिकोणेषु इति तृतीयावृतिः ॥

अनुरागाय० विसंवादाय० विजयाय० वल्लभाय० मदाय० हर्षाय० बलाय० तेजसे० ४ इति चतुर्थ्यावृतिः । इन्द्रादिभिः पञ्चमी ॥ वज्रादिभिः षष्ठी ॥ एवं संपूज्य त्रिमधुरसिक्तैः विल्वफलैरयुतं जुहुयात् पुरश्चरणार्थम् ॥

---

* चन्द्र्यै इति ग, घ, मातृकापाठः ।

अथ श्रीसूक्तविधानमुच्यते—

तत्र श्रीः प्रथमाया ऋचः (ऋषिः)॥ इतरे चत्वार ऋषयः चतुर्दशानां ऋचामपि प्रत्येकं चत्वारोपि योजनीयाः॥ एवं प्रत्येकविधौ। समुदायविधौ तु सर्वे ऋषयस्संभूयैव॥ आद्ये ऋक्त्रये छन्दोनुष्टुप्। कांसोस्मीत्यस्याः बृहती छन्दः। तदन्त्ययोर्द्वयोः त्रिष्टुप्। पुनरष्टकस्याप्यनुष्टुप्। अन्त्यस्य प्रस्तारपंक्तिः॥ छन्दसामपि ऋष्याद्युक्तन्यायः प्रत्येकपक्षे। समुदायपक्षे तु संभूयैव। श्रियग्नी देवते॥ तत्राग्निरिति नारायणो भगवानुच्यते॥ हिरण्यवर्णामिति ऋग्बीजम्। कांसोस्मीति ऋक्शक्तिः॥ (तां म आवहेत्यन्त्या ऋक् कीलकम्।)

हिरण्मय्यै नमः हृत्। [1]चन्द्रिकायै नमः शिरः। रजतस्रजायै नमः शिखा। हिरण्यस्रजायै नमः कवचम्। हिरण्यायै नमः नेत्रम्। हिरण्यवर्णायै नमः अस्त्रम्॥

सूक्तन्यास उच्यते –

मूर्धाक्षिकर्णनासामुखगळदोर्हृदयनाभिगुह्येषु।
पायूरुजानुजङ्घाचरणेषु न्यसतु सूक्तकैः क्रमशः॥

ध्यानम् –

अमलकमलसंस्था तद्रजःपुञ्जवर्णा
करकमलधृतेष्टाभीतियुग्मांबुजा च।
मणिमकुटविचित्रालंकृताऽऽकल्पजातैः
भवतु भुवनमाता सन्ततं श्रीः श्रियै वः॥

हिरण्यवर्णामिति सूक्तं मन्त्रः। ऐश्वर्यफलप्रधानोयं मन्त्रः। शुक्लप्रति-

---

१ चन्द्रायै इति ग. मातृकापाठः।

पदारभ्य स्त्रीभोगादिरहितः एकादश्यां परिसमापयेत् । द्वादशसहस्रसंख्यं जपः । तेषु दिवसेषु नित्यशः अन्नेन च घृतेन चाष्टोत्तरशतं जुहुयात् ॥ पुनर्द्वादश्यां पद्मैश्च बिल्वसमिद्भिश्च क्षीरान्नेन च सर्पिषा च क्रमेणैकैकं त्रिशतसंख्यया जुहुयात् । पुरश्चरणाहोमः ॥

अथ पूजाविधिः—

रमैकाक्षर्याः पीठे समावाह्य रमां समर्चयेत् ॥ अङ्गैः प्रथमावृतिः ॥ पद्मायै० पद्मवर्णायै० पद्मस्थायै० आर्द्रायै० तर्पयन्त्यै० तृप्तयै० ज्वलन्त्यै० स्वर्णप्राकारायै० ८ इति द्वितीयावृतिः ॥ लोकेशैः तृतीयावृतिः ॥ तदायुधै-श्चतुर्थ्यावृतिः ॥

अथ पूजाविधानान्तरमुच्यते —

पञ्चदशसु ऋक्षु एकैकया ऋचा एकैकमुपचारं समर्पयेत् ॥ एवं पञ्चदशोपचारान् समर्पयेत् ॥

उपचारा उच्यन्ते—

आवाहनासनार्घ्यकपाद्याचमनमधुपर्कसेकानि ।
वासोभूषणगन्धान् सुमनोयुतधूपदीपभोज्यानि ॥

सोद्वासनानि कुर्यात् भक्तियुतः पञ्चदशभिरथ मनुभिः ।
व्यस्तैरपिच समस्तैः पूजायां संयतात्मकः सिध्यै ॥

पूजार्थं पुष्पविशेष उच्यते—

मन्दारकुन्दकुमुदनन्द्यावर्ताह्वमालतीजात्यः ।
कल्हाररक्तपद्मोत्पलकेतकचम्पकादयो ग्राह्याः ॥

अथ प्रयोगः—

अभिषिञ्चेत् त्रिशो नित्यं सूक्तैस्तैः स्नानकर्मणि ।
आदित्याभिमुखो जप्यात्तावत्तावच्च तर्पयेत् ॥

अर्चयेद्विधिनानेन दिनशो जुहुयात् त्रिशः ।
एवं करोति षण्मासं योसौ स्यादिन्दिरापतिः ॥

अयमर्थः — अनेन श्रीसूक्तमन्त्रेण स्नानकाले जलमुद्धृत्य जप्त्वा त्रिवारमात्मानमभिषेचयेत् । पुनरादित्याभिमुखस्त्रिवारं जप्यात् । पुनस्त्रिवारं जले तर्पयेच्च । पुनस्त्रिवारं देवतायां समर्चयेच्च । पुनस्त्रिवारं हविषा हुनेच्च । एवं दिनशः षण्मासं यः कुर्यात् इन्दिरायाः पतिरेव स भवति ॥

प्रयोगान्तरम् —

उद्बुद्धमाले नलिने नवनीतं विनिक्षिपेत् ।
सकर्णिके सकिञ्जल्के दले पत्रान्तरालिके ॥

पुनः पद्मं समुद्धृत्य समिद्धे तु विभावसौ ।
जुहुयादन्त्ययाथर्चा शतमष्टोत्तरं जपन् ॥

चत्वारिंशत् शुक्रवारे महाश्रीस्तस्य जायते ।

अयमर्थः — उदयकाले ईषद्विकसिते नलिने कर्णिकायां च दलमूलेषु च दलेष्वपि च दळानामन्तरालेषु च नवनीतेन विलिप्यात् । पश्चात्तत्पद्ममेकं सरस उद्धृत्य अष्टोत्तरशतसंख्यं 'तां म आवह जातवेद' इत्यृचं जप्त्वा अग्नौ जुहुयात् । एवं प्रतिशुक्रवारं, चत्वारिंशच्छुक्रवारैः जुहुयात् ॥ तस्मात् महाश्रीर्भवति ॥

प्रयोगान्तरम् —

कांसोस्मीत्यनया सम्यक् एकादश घृताहुतीः ।

षण्मासं जुह्वतो नित्यं भूयात्प्रायो महेन्दिरा ॥

अयमर्थः — कांसोस्मि तां हिरण्यप्राकारामित्यृचा नित्यशो घृतेनैकादशाहुतीर्जुहुयात् । एवं षण्मासे कृते तस्य महालक्ष्मीर्भवति ॥

प्रयोगान्तरम् --

सूक्तैरेतैर्जपतु जुहुयादर्चयीतावगाहेत
सिञ्चेद्वक्त्रे दिनमनु तथा संयतस्तर्पयीत ।
संशुद्धात्मा विविधधनधान्यांशुकाभ्यन्तरोसौ
मन्त्री सर्वैर्भुवि बहुमतो देहिनां स्यात्पुरोगः ॥

अयं तु स्पष्टार्थः ॥

प्रयोगान्तरम् -

श्रियै० लक्ष्म्यै० वरदायै० विष्णुपत्न्यै० वसुप्रदायै० हिरण्यरूपायै० स्वर्णमालिन्यै० रजतस्रजायै० स्वर्णप्रभायै स्वर्णप्राकारायै० पद्मवासिन्यै० पद्महस्तायै० पद्मप्रियायै० मुक्तालङ्करणायै० सूर्यायै० चन्द्रायै० बिल्वप्रियायै० ईश्वर्यै० भुक्त्यै० मुक्त्यै० विभूत्यै० ऋद्ध्यै० समृद्ध्यै० कृष्ट्यै० पुष्ट्यै० धनदायै० धनेश्वर्यै० श्रद्धायै० भोगिन्यै० भोगदायै० धात्र्यै० विधात्र्यै० ३२ इति,

द्वात्रिंशदेते श्रीदेव्या ये मन्त्रास्समुदीरिताः ।
तारादिका नमोन्ताश्च तैरर्चासु बलिं हरेत् ॥

तर्पयेच्च महादेवीं दिनादौ मन्त्रवित्तमः ।

अयमर्थः -- महालक्ष्मीं पूजाविधानोक्तेन विधिना समभ्यर्च्य, तत्र देव्याः पुरतः अक्षतादिना एतैर्मन्त्रैः द्वात्रिंशत्संख्याकैः ॐ श्रियै नमः इति बलिं हरेत् । पुनरेतैरेव मन्त्रैः ॐ श्रीं तर्पयामि इत्यादिभिः उदयकाले

महालक्ष्मीं तर्पयेत् जलैः । पुनः नाभ्यक्तोद्यान्न नग्नः सलिलमवतरेदित्यादिना लक्ष्मीकरनियम उक्तः ॥

अथ श्रीसूक्तमन्त्रप्रसंगात् श्रीसूक्तयन्त्रमपि मन्त्रसारोक्तं निरवधि-कैश्वर्यप्रदमुच्यते—

श्रीबीजं साध्यसंयुक्तं कर्णिकायां विलिख्य च ।
वस्वादित्यब्ध्यष्टसंख्यपत्रेष्वपि यथाक्रमम् ॥

श्रीसूक्तस्याप्यर्धमर्धं ऋचामालिख्य तद्बहिः ।
यः शुचिः प्रयतो भूत्वेत्यृचा मातृकयापि च ॥

संवेष्ट्य च धराबिम्बकोणेषु श्रियमालिखेत् ।
श्रीसूक्तयन्त्रमेतत्तु धारयेद्यो यथाविधि ॥

पुत्रारोग्यधराधान्यधनगोसस्यशालिनीम् ।
लब्ध्वातिबहलां लक्ष्मीं जीवेत्स शरदां शतम् ॥

इदमेव ताम्रपट्टे विलिख्य जप्त्वा च सिक्तसंपातम् ।
संस्थाप्याङ्गणभूमौ लक्ष्मीमावाह्य साधु संपूज्य ॥

भूयः परिवारयुतं बलिं हरेत् भूतलं समीकृत्य ।
यस्मिन्नेव क्रियते वर्धन्तेऽत्र संपदो नित्यम् ॥

पुत्रैर्दारैरिष्टैः विभवैर्भृत्यैर्धनैश्च धान्यैश्च ।
नागैरथैस्तुरङ्गैः वृषभैर्गोभिश्च संख्यया हीनैः ॥

रमयति गेहे तस्मिन् विहरत्याभूतसंप्लवं लक्ष्मीः ।

अस्यार्थः — प्रथमं अष्टपत्रं पद्मं विलिख्य, तत्कर्णिकायां श्रीबीजं

ससाध्यं विलिख्य, अष्टसु पत्रेषु ऋक्चतुष्टयस्य अर्धमर्धं विलिख्य, तद्बहि- र्द्वादशदलं विलिख्य तेषु अवशिष्टानां ऋचां मध्ये ऋक्षट्कस्यार्धमर्धं विलिख्य, तद्बहिः षोडशदळं विलिख्य तेषु अवशिष्टानां ऋचां अष्टकस्य अर्धमर्धं विलिख्य, तद्बहिः वृत्तद्वयं विलिख्य प्रथमे वृत्ते यः शुचिः प्रयत इत्यादिना संवेष्ट्य, द्वितीये वृत्ते मातृकया संवेष्ट्य चतुरश्रकोणेषु श्रीबीजं विलिखेत् ॥ इति ॥

अथ महालक्ष्मीरत्नकोशे प्रोक्तलक्ष्मीमन्त्रविधानमपि योग्यतावशात् लिख्यते — भृगु ऋषिः । अनुष्टुप् छन्दः । महालक्ष्मीर्देवता । ऐं बीजम् । ह्रीं शक्तिः । क्लीं कीलकम् । मूलमन्त्रवर्णद्वन्द्वैः षडङ्गानि । ध्यानम् —

कान्त्या काञ्चनसन्निभां हिमगिरिप्रख्यैश्चतुर्भिर्गजैः
हस्तोत्क्षिप्तहिरण्मयामृतघटैरासिच्यमानां श्रियम् ।
नानारत्नसमुज्ज्वलां करलसत्पद्मां किरीटोज्ज्वलां
क्षौमाबद्धनितम्बबिम्बलसितां वन्देऽरविन्दस्थिताम् ॥

मन्त्रः ॥ ऐंह्रींश्रीं क्लींसौः पङ्कजहस्ते नमः ॥ द्वादशार्णोयं मन्त्रः ॥ पूजादिकमेकाक्षरीमन्त्रविधानवत् ॥

अथ लक्ष्मीमन्त्रविधानान्तरम् — महालक्ष्मीमन्त्रस्य मङ्कण ऋषिः । गायत्री छन्दः । वसुधारा महालक्ष्मीर्देवता ॥ श्रीं बीजम् । स्वाहा शक्तिः । श्रामित्यादिना कराङ्गन्यासं कुर्यात् ॥ ध्यानम् —

हस्तोद्यद्वसुपात्रपङ्कजधरा चञ्चत्स्फुरन्नूपुरा
ग्रैवेयाङ्गदहारकङ्कणमहामालाज्वलत्कुण्डला ।
पद्मस्था परिचारिकापरिवृता शुक्लाङ्गरागांशुका
देवी दिव्यवसुप्रदा भवभयप्रध्वंसिनी स्याद्रमा ॥

मन्त्रः ॥ ॐ श्रीं वसुदे वसुधारे वसुकरि धनकरि धान्यकरि रत्नकरि स्वाहा ॥ सप्तविंशत्यर्णोऽयं मन्त्रः ॥ पुरश्चरणार्थं लक्षं जपेत् । तच्छेषमेकाक्षरीमन्त्रविधानवत् ॥

महालक्ष्मीमन्त्रान्तरम् — देवेश ऋषिः । गायत्री छन्दः । महालक्ष्मीर्देवता । श्रीं बीजम् । ह्रीं शक्तिः । सर्वसौभाग्यसिद्ध्यर्थे विनियोगः । श्रामित्यादिकरन्यासमङ्गन्यासं च कुर्यात् ॥ ध्यानम् —

या सा पद्मासनस्था विपुलकटितटी पद्मपत्रायताक्षी
गम्भीरावर्तनाभिस्स्तनभरनमिता शुभ्रवस्त्रोत्तरीया ।
लक्ष्मीर्दिव्यैर्गजेन्द्रैर्मणिगणखचितैः स्नापिता हेमकुम्भैः
नित्यं सा पद्महस्ता मम वसतु गृहे सर्वमाङ्गल्ययुक्ता ॥

मन्त्रः । ओं श्रीं ह्रीं क्लीं महालक्ष्मि महालक्ष्मि एह्येहि सर्वसौभाग्यं मे देहि स्वाहा ॥ चतुर्विंशत्यर्णोऽयं मन्त्रः[1] । लक्षं जपेत् । दशांशं तर्पणम् । दशांशं होमः । शेषमेकाक्षरविधानवत् ॥

अथ उक्तानां महालक्ष्मीमन्त्राणां प्रयोगविधिः —

अशोकवह्नौ जुहुयात्तन्मूलैराज्यलोलितैः ।
वशयेदचिरादेव त्रैलोक्यमपि मन्त्रवित् ॥

जुहुयात्तण्डुलैश्शुद्धैरर्काग्नौ नियतं वशी ।
राज्यश्रियमवाप्नोति राजपुत्रो महीयसीम् ॥

जुहुयात्खादिरे वन्हौ तण्डुलैर्मधुरोक्षितैः ।
राजानं वशयेत् क्षिप्रं महालक्ष्मीश्च वर्धते ॥

---

१ महालक्ष्म्येह्येहि इति वा, प्रणवं बिना वा चतुर्विंशत्यर्ण इति ध्येयम् ।

बिल्वच्छायामपि वसन् बिल्वमिश्रहविष्यभुक् ।
संवत्सरद्वयं हुत्वा तत्फलैरपि वाम्बुजैः ॥

साधकेन्द्रो महालक्ष्मीं चक्षुषा पश्यति ध्रुवम् ।
हविषा घृतसिक्तेन पयसा सर्पिषापि वा ॥

हुत्वा श्रियमवाप्नोति नियतो मन्त्रवित्तमः ।
चतुर्विंशतिवर्णानामेकैकं विलिखेद्बुधः ॥

त्रिकोणेष्वष्टपत्रेषु त्रयोदशदळेष्वपि ।
भूपुरे विलिखेन्मन्त्रैः श्रियो बीजं समग्रकम् ॥

भूकोणेष्वपि तद्बीजैः लिखेद्दिक्षु विदिक्षु च ।
एवं विलिख्य विधिवत् प्राणान्संस्थाप्य मन्त्रवित् ॥

पूजयित्वा जपेद्यन्त्रं धारयेत् सर्वसिद्धिदम् ।

अथ लक्ष्मीस्तोत्रमपि कल्पान्तरोक्तमत्र लिख्यते —

अङ्गं हरेः पुलकभूषणमाश्रयन्ती
भृङ्गाङ्गनेव मुकुलाभरणं तमालम् ।
अङ्गीकृताखिलविभूतिरपाङ्गलीला
माङ्गल्यदास्तु मम मङ्गलदेवतायाः ॥ १ ॥

मुग्धा मुहुर्विदधती वदने मुरारेः
प्रेमत्रपाप्रणिहितानि गतागतानि ।
माला दृशोर्मधुकरीव महोत्पले या
सा मे श्रियं दिशतु सागरसंभवायाः ॥ २ ॥

आमीलिताक्षमधिगम्य मुदा मुकुन्दं
आनन्दकन्दमनिमेषमनङ्गतन्त्रम् ।
आकेकरस्थितकनीनिकपक्ष्मनेत्रं
भूत्यै भवेन्मम भुजङ्गशयाङ्गनायाः ॥ ३ ॥

बाह्वन्तरे मधुजितः श्रितकौस्तुभे या
हारावळीव हरिनीलमयी विभाति ।
कामप्रदा भगवतोपि कटाक्षमाला
कल्याणमावहतु मे कमलालयायाः ॥ ४ ॥

कालाम्बुदाळि* लडहोरसि कैटभारेः
धाराधरे स्फुरति या तटिदङ्गनेव ।
मातुस्समस्तजगतां महनीयमक्षि
भद्राणि मे दिशतु भार्गवनन्दनायाः ॥ ५ ॥

प्राप्तं पदं प्रथमतः खलु यत्प्रभावात्
माङ्गल्यभाजि मधुमाथिनि मन्मथेन ।
मय्यापतेत्तदिह मन्थरवीक्षणार्धं
मन्दालसाक्षि मकरालयकन्यकायाः ॥ ६ ॥

विश्वामरेन्द्रपदविभ्रमदानदक्ष-
मानन्दहेतुरधिकं मधुविद्विषोपि ।
ईषन्निषीदतु मयि क्षणमीक्षणार्धं
इन्दीवरोदरसहोदरमिन्दिरायाः ॥ ७ ॥

इष्टा विशिष्टमतयोपि नरा यया द्राक्
दृष्टास्त्रिविष्टपसदश्च पदं भजन्ते ।

---

* लडहः मनोज्ञः इत्यर्थः ।

दृष्टिः प्रहृष्टकमलोदरदीप्तिरिष्टां
पुष्टिं कृषिष्ट मम पुष्करविष्टपायाः ॥ ८ ॥

दद्याद्दयानुपवनो द्रविणाम्बुधारां
अस्मिन्नकिञ्चनविहङ्गशिशौ विषण्णे ।
दुष्कर्मघर्ममपनीय चिराददूरात्
नारायणप्रणयिनीनयनाम्बुवाहः ॥ ९ ॥

गीर्देवतेति गरुडध्वज[1] वल्लभेति
शाकम्भरीति शशिशेखर[2] सोदरीति ।
सृष्टिस्थितिप्रलयसिद्धिषु सुस्थितायै
तस्यै नमः त्रिभुवनैकगुरोस्तरुण्यै ॥ १० ॥

श्रुत्यै नमोऽस्तु शुभकर्मफलप्रसूत्यै
रत्यै नमोस्तु रमणीयगुणाश्रयायै ।
शक्त्यै नमोस्तु शतपत्रनिकेतनायै
पुष्ट्यै नमोस्तु पुरुषोत्तमवल्लभायै ॥ ११ ॥

नमोऽस्तु नाळीकनिभाननायै
नमोऽस्तु दुग्धोदधिजन्मभूम्यै ।
नमोऽस्तु सोमामृतसोदरायै
नमोऽस्तु दामोदरवल्लभायै ॥ १२ ॥

नमोऽस्तु देव्यै भृगुनन्दनायै
नमोऽस्तु विष्णोरुरसि स्थितायै ।

---

१, २, गरुडध्वजसोदरेति, शशिशेखरवल्लभेति च ख, ग, घ, ङ, मातृकापाठः ।

नमोऽस्तु लक्ष्म्यै कमलालयायै
नमोऽस्तु नारायणवल्लभायै ॥ १३ ॥

नमोऽस्तु हेमाम्बुजपीठिकायै
नमोऽस्तु भूमण्डलनायिकायै ।
नमोऽस्तु देवादिदयापरायै
नमोऽस्तु शार्ङ्गायुधवल्लभायै ॥ १४ ॥

स्तुवन्ति ये स्तुतिभिरमूभिरन्वहं
त्रयीमयीं त्रिभुवनमातरं रमाम् ।
गुणाधिका गुरुधनधान्यभागिनो
भवन्ति ते भवमनुभाविताशयाः ॥ १५ ॥

पद्मप्रिये पद्मिनि पद्महस्ते
पद्मालये पद्मदलायताक्षि ।
विश्वप्रिये विष्णुमनोनुकूले
त्वत्पादपद्मं मयि सन्निधत्स्व ॥ १६ ॥

अनेन स्तोत्रेण लक्ष्मीं स्तुत्वा समापयेत् ॥

इति प्रपञ्चसारसारसंग्रहे गीर्वाणेन्द्रविरचिते
एकादशः पटलः ॥

## ॥ अथ द्वादशः पटलः ॥

---

अथ [1] त्रिपुराविधानमुच्यते --

सम्मोहन ऋषिः ॥ गायत्री छन्दः ॥ त्रिपुरादेवी देवता ॥ ओं बीजम् । क्लीं वा ह्रीं वा शक्तिः । श्रां हृत् । श्रीं शिरः । इत्याद्यङ्गानि । ह्रां हृत् । ह्रीं शिरः इत्यादि वा ॥ श्रीं हृत् । ह्रीं शिरः । क्लीं शिखा । श्रीं कवचम् । ह्रीं नेत्रम् । क्लीं अस्त्रम् ॥ इति वाङ्गानि कुर्यात् ॥ ध्यानम् —

नवकनकभासुरोर्वीविरचितमणिकुट्टिमे सकल्पतरौ ।
रत्नवरबद्धसिंहासनविहितसरोरुहे समासीनाम् ॥

आबद्धरत्नमकुटां मणिकुण्डलोद्य-
त्केयूरकोर्मिरशनाह्वयनूपुराढ्याम् ।
ध्यायेद्धृताब्जयुगपाशकसांकुशेक्षु-
चापां सुपुष्पविशिखां नवहेमवर्णाम् ॥

चामर-मुकुर-समुद्गक-ताम्बूलकरङ्कवाहिनीभिश्च ।
दूतीभिस्समभिवृतां पश्यन्तीं साधकं प्रसन्नदृशा ॥

श्रीं ह्रीं क्लीं ॥ इति मन्त्रः ॥ द्वादशलक्षं जपेत् ॥ श्रीवृक्षसमिद्भिश्च राजवृक्षसमिद्भिश्च जपार्तवैश्च त्रिमधुरसिक्तैर्द्वादशसहस्रं पुरश्चरणाहोमः ॥
श्रीवृक्षः - பில்வம். राजवृक्षः - கொன்னை, जपार्तवं - சம்பரத்தம்பூ ॥

अथ पूजाविधिः --

---

१ त्रिपुटा विधानं, त्रिपुटा देवी, इति ख पाठः । अयं तु लेखकप्रमाद एवेति भाति ।

केवलाष्टपत्रे समावाह्य समर्चयेत् ॥ अंगैः प्रथमावृतिः ॥ लक्ष्म्यै० हरये० गिरिजायै० शर्वाय० रत्यै० अङ्गजाय० इति षट्कोणेषु समर्चयेत् ॥ पुनस्तदभितो बहिः वसुधारायै० शङ्खनिधये० वसुमत्यै० पद्मनिधये० इति समर्चयेत् ॥ एवं द्वितीयावृतिः ॥ मातृभिस्तृतीया ॥ पुनस्त्रीरूपैर्लोकपालैश्चतुर्थ्यावृतिः ॥ अस्य मन्त्रस्य फलमुच्यते ॥

सकलवर्गफलाप्तियशस्करं जगति रञ्जनदं कविताकरम् ॥ इति ॥

अथ धरणीमन्त्रविधानमुच्यते -- वराह ऋषिः । निचृदृतिः छन्दः । श्रीधरणी देवता ॥ ग्लौं बीजम् । स्वाहा शक्तिः । ॐ नमो हृत् । भगवत्यै शिरः । धरण्यै शिखा । धरणिधरे कवचम् । धरे नेत्रम् । स्वाहा अस्त्रम् ॥ ध्यानम् --

मुख्याम्भोजे निविष्टारुणचरणतला श्यामलाङ्गी मनोज्ञा
चञ्चच्छाल्यग्रचुम्बच्छुकलसितकरा प्राप्तनीलोत्पला च ।
रत्नाकल्पाभिरामा मणिमयमकुटा चित्रवस्त्रा प्रसन्ना
दिश्याद्विश्वंभरा नः सततमभिमतं वल्लभा कैटभारेः ॥

ॐ नमो भगवत्यै धरण्यै धरणिधरे धरे स्वाहा ॥ इति मन्त्रः ॥ धराहृदयमित्यस्याख्या ॥ लक्षजपः ॥ दशांशं सर्पिस्सिक्तेन पयोन्नेन पुरश्चरणाहोमः ॥

अथ पूजा -- वैष्णवपीठे समावाह्य अङ्गैः प्रथमावृतिः ॥ भूम्यात्मने नमः । वह्न्यात्मने नमः । अबात्मने नमः । प्राणात्मने नमः । इति दिग्दलेषु निवृत्त्यै० प्रतिष्ठायै० विद्यायै० शान्त्यै० इति कोणदलेषु चेति द्वितीयावृतिः ॥ इन्द्रादिभिस्तृतीयावृतिः ॥

अथ प्रयोगः --

पुष्पैः प्रियङ्गोर्मधुरत्रयाक्तैः नीलोत्पलैर्वापि तथाऽरुणैस्तैः ।
सहस्रमानं प्रतिजुह्वतः स्यात् गौर्गोमती सस्यकुलाकुला च ॥

प्रियंगुपुष्पं – ஞாழல்பூ. नीलोत्पलं – கருநைதல்பூ. अरुणोत्पलं – செந்நைதல்பூ. अयमर्थः — प्रियंगुपुष्पैः नीलोत्पलैररुणोत्पलैर्वा त्रिमधुरसिक्तैः सहस्रसंख्यं यो जुहोति तस्य भूमिः पशुमती सस्यादिसमृद्धिमती च जायते ॥

प्रयोगान्तरम् —

पिञ्जरां पृथुलशालिमञ्जरीं यो जुहोति मधुरत्रयोक्षिताम् ।
नित्यशः शतमथास्य मण्डलात् हस्तगा भवति विस्तृता मही ॥

शालिमञ्जरी – கொளச்செந்நெல் கதிர். पिञ्जरं – பொற்கின்றது अयमर्थः — स्वर्णवर्णां स्थूलां च शालिमञ्जरीं त्रिमधुरसिक्तां नित्यशः शतसंख्यं यो जुहोति एवं मण्डले कृते तेन भूमिर्लप्स्यते ॥

प्रयोगान्तरम् —

भृगोस्तु वारे निजसाध्यभूमृद्विलोलिताम्भःपरिपक्वमन्धः ।
पयोघृताक्तं जुहुयात्सहस्रं दुग्धेन वा तेन दिनावतारे ॥

षण्मासादनुभृगुवारमेष होमः
संपन्नान्समुपनयेद्धराप्रदेशान् ।
पुत्रान्वा पशुमहिषेष्टजुष्टपुष्टा-
मिष्टामप्यनुदिनमिन्दिरां समग्राम् ॥

अयमर्थः — शुक्रवारे स्वस्य साध्यक्षेत्रस्थमृदं गृहीत्वा, तां जले विलोड्य, तेन जलेन हविः परिपच्य, पुनः क्षीरघृताभ्यां सिक्तेन तेन

हविषा सहस्रसंख्यं शुक्रवारे उदयकाले जुहुयात् । अथवा तामेव साध्य-भूमिस्थां मृदं क्षीरे विलोड्य, तेन शुक्रवारे उदयकाले सहस्रसंख्यं जुहुयात् ॥ एवं षण्मासं प्रतिशुक्रवारं यो जुहुयात्, तस्य साध्यभूमिः सकलर्धिसम्पन्ना जायते ॥ पुत्रमहिषीन्दिरादयश्च तस्य जायन्ते ॥

अथ धरणीमन्त्रप्रसंगात् धरणीयन्त्रमपि मन्त्रसारोक्तमत्र योग्यतावशात् लिख्यते --

मध्ये तारं वसुपुरयुगाश्रेष्वथो कोलबीजं
पत्रेष्वष्टस्वपि गुणमितान्मन्त्रवर्णान् क्रमेण ।
आवेष्ट्यार्णैः क्रिटिमनुभवैः मातृकार्णैश्च यन्त्रं
भूगेहस्थं वितरति धरा स्वर्णधान्यादिवृद्धिम् ॥

अस्यार्थः — प्रथममष्टकोणद्वयं विलिख्य, तन्मध्ये प्रणवं ससाध्यं विलिख्य, अष्टकोणद्वयेपि वराहबीजं भूं इति विलिख्य, तद्बहिरष्टपत्रपद्मं विलिख्य, तेषु धरणीमन्त्रवर्णान् त्रिशस्त्रिशो विलिखेत् ॥ ओं ह्रीं ग्लौं नमो भगवत्यै धरण्यै धरणिधरे धरे स्वाहा ग्लौं ह्रीं ओं ॥ इति धरणीमन्त्रः ॥ चतुर्विंशत्यक्षरः ॥ पुनस्तद्बहिर्वृत्तद्वयं विलिख्य, प्रथमे वृत्ते उपरि द्वाविंश-पटले वक्ष्यमाणवराहमन्त्रेण वेष्टयेत् ॥ द्वितीयवृत्ते मातृकावर्णैः संवेष्ट्य, तद्बहिः चतुरश्रं विलिखेत् ॥ इति ॥

अथ त्वरिताविधानमुच्यते —

अर्जुन ऋषिः । विराट्छन्दः । त्वरिता पार्वती देवता ॥ हुं बीजम् । ह्रीं शक्तिः । खे च हृत् । चच्छे शिरः । च्छेक्षः शिखा । क्षःस्त्री कवचम् । स्त्रीहुं नेत्रम् । हुंक्षे अस्त्रम् ॥ ध्यानम् --

श्यामतनुमरुणपङ्कजचरणतलां वृषलनागमञ्जीराम् ।

स्वर्णांशुकपरिधानां वैश्याहिद्वन्द्वमेखलाकलिताम् ॥

तनुमध्यलतां पृथुलस्तनयुगलां करविराजदभयवराम् ।
शिखिपिञ्च्छनालवलयां गुञ्जाफलगुणितभूषणारुणिताम् ॥

नृपफणिकेयूरान्तां गळविलसद्विविधमणियुताभरणाम् ।
द्विजनागयुगलकुण्डलमण्डितगण्डद्वयीमुकुरशोभाम् ॥

शोणतराधरपल्लवविद्रुममणिभासुरां प्रसन्नां च ।
पूर्णशशिबिम्बवदनां अरुणायतलोचनत्रयीनलिनाम् ॥

कुञ्चितकुन्तलविलसन्मकुटाघटिताहिवैरिपिञ्च्छयुताम् ।
कैरातीं वनकुसुमोज्ज्वलां मयूरातपत्रकेतनिकाम् ।
सुरुचिरसिंहासनगां विभ्रमसमुदायमन्दिरां तरुणीम् ॥

ॐ ह्रीं हुं खेचच्छेक्षः स्त्री हुं क्षेह्रीं फट् ॥ इति मन्त्रः । क्ष्वेलग्रहादिहरणप्रधानोयं मन्त्रः ॥

कालिकगळहृन्नाभिगुह्येषु च जानुजङ्घयोः पदयोः ।
देहन्यासं कुर्यात् मन्त्रेण व्यापकं समस्तेन ॥

लक्षजपः ॥ त्रिमधुरसिक्ताभिर्बिल्वसमिद्भिर्दशांशं जुहुयात् पुरश्चरणाहोमः ॥

अथ पूजा— अष्टहरिविधृतसिंहासने समावाह्य सरसिजे देवीं पूजयेत् ॥ जयायै० विजयायै० अजितायै० अपराजितायै० नित्यायै० विलासिन्यै० दोग्ध्र्यै० अघोरायै० मङ्गलायै० एतास्तु पीठनवशक्तयः ॥ ॐ वज्रनखदंष्ट्रायुधाय महासिंहाय हुंफट् नमः ॥ इत्यासनमन्त्रः । अत्रावाह्य अङ्गैः पूर्वादिदलेषु षट्सु समर्चयेत् ॥ अवशिष्टद्वये प्रणीतायै० गायत्र्यै० इति पूजयेत् ॥

श्रीं हुंकारायै नमः । श्रीं खेचर्यै नमः । श्रीं[1] चण्डिकायै नमः । श्रीं छेदिन्यै नमः । श्रीं क्षपण्यै नमः । श्रीं स्त्रियै० श्रीं हुंकार्यै० श्रीं क्षेमकारिकायै० इति दलमध्ये, इन्द्रादिभिर्वज्रादिभिर्दळाग्रेषु फट्कार्यै नम इत्यग्रे ॥ तद्बाह्ये शरायै० शरधारिण्यै० इति ॥ जयायै० स्वर्णवेत्रधरायै० विजयायै० स्वर्णयष्टिधरायै० इति द्वारस्योभयपार्श्वे । तत्पुरतः कृष्णाय बर्बरकेशाय लगुडधराय किङ्कराय । विशेषणत्रयमपि किंकरस्यैव विशेषणम् ॥ इति अरुणैश्चन्दनकुसुमैस्समर्चयेद्देवीम् ॥

अथ प्रयोगः —

योनिं कुण्डस्यान्तः प्रकल्प्य तत्रानलं समाधाय ।
संपूज्य पूर्वविधिना जुहुयात् सर्वार्थसिद्धयै मन्त्री ॥
योनिरिति भुवनेशी ॥

इक्षुशकलैस्समृध्द्यै दूर्वाभिस्त्वायुषे श्रियै धान्यैः ।
धान्यावयवैः पुष्ट्यै गोधूमैर्ऋद्धये तिलैर्जुहुयात् ॥

जम्बूभिस्स्वर्णाप्त्यै राजीभिश्शत्रुशान्तयेऽक्षतकैः ।
अक्षयसिद्ध्यै वकुळैः कीर्त्यै कुन्दै[2]र्महोदराय तथा ।
अरुणोत्पलैश्च पुष्ट्यै मधूकजैरिष्टसिद्धयेऽशोकैः ॥

पुत्राप्त्यै पाटलजैः स्त्रीसिद्ध्यै निम्बजैश्च विद्विष्ट्यै ।
पुष्ट्यै नीलोत्पलकैः चम्पकजैः कनकसिद्धये पद्मैः ॥

सह किंशुकैश्च सर्वोपद्रवशान्त्यै च साधको जुहुयात् ।
हुतसंख्या साहस्री त्रिस्त्रियुता वा युवती (हुतिः) भवति ॥

---

१ चण्डायै इति ग, घ, ङ, पाठः ।

२ महोदयाय इति ङ पाठः ।

यावत्संख्यो होमः तावत् जप्यश्च मन्त्रिणा मन्त्रः ।

इक्षुशकलं-கண்டசர்க்கரை, गोधूमं-கோதுமை, जम्बू-நாவல், राजि-கடுகு, अक्षतं-அக்ஷதை, वकुळं-மெகிழ், कुन्दं-குருக்கத்தி, अरुणोत्पलं-செந்தாமரைப்பூ मधूकं-இலுப்பைப்பூ, अशोकं-அசோகப்பூ, पाटलं-பாதிரிப்பூ, तत्समिच्चेत्यर्थः ॥ निम्बं-வேம்பு, नीलोत्पलं-கருநெய்தல்ப்பூ, चम्पकं-சம்பகப்பூ, तत्समिच्चेत्यर्थः । किंशुकपुष्पैः पद्मैश्च द्वाभ्यामपि सर्वोपद्रवशान्त्यै जुहुयात् । किंशुकं-முருக்கம்பூ.

उक्तैरेतैर्द्रव्यैः तत्तत्फलावाप्त्यै [२] द्विसहस्रं वाऽयुतमेव वा जुहुयात् । तदनन्तरं तावत्प्रजपेच्च ॥

प्रयोगान्तरम् —

मनुमन्त्रितैश्च वारिभिरासेकः क्ष्वेळशान्तिकृद्भवति ।
तज्जप्तयष्टिघातो मन्त्रितचुळुकोदकाहतिश्च तथा ।
तत्कर्णरन्ध्रजापात् सद्यो नश्युर्विषग्रहादिरुजः ॥

(अस्यार्थः—) चुळुकोदकं हस्तपरिमाणं जलम् । अनेन त्वरितामन्त्रेण जप्तैर्जलैः सेचनं वा एतन्मन्त्रजप्तया यष्ट्या ताडनं वा एतन्मन्त्रजप्तचुळुकोदकसंसेचनं वा एतन्मन्त्रेण कर्णरन्ध्रे जपं वा कुर्यात् ॥ विषग्रहादयो नश्यन्ति ॥ ग्रहादयो दुर्देवताविशेषाः ॥ तद्यन्त्रस्थापनमपि विषग्रहादिशान्तिकृत् भवति ॥

अथास्य यन्त्रविधानमुच्यते —

आख्यां मध्ये सतारे मनुमथ शतसंयुक्तविंशत्पुटेषु
प्रादक्षिण्येन शर्वादिकमनु विलिखेत् द्वादशावृत्ति मन्त्री ।
विंशद्द्वन्द्वाष्टशूलाकलितविरचितं यन्त्रमेतत्सुजप्तं
बन्धं क्ष्वेलग्रहार्तिं हरति विजयलक्ष्मीप्रदं कीर्तिदं च ॥

---

२ त्रिसहस्रं इति ङ पाठः ।

अस्यार्थः — प्रथमं पूर्वपश्चिमतः षड्रेखाः विलेख्याः । पुनस्तदुत्तरतश्च पूर्वपश्चिमतः षड्रेखाः विलेख्याः ।। पुनस्तयोर्दक्षिणोत्तरवर्तिनोः प्रागग्रेषु दक्षिणोत्तरतः षड्रेखा विलेख्याः ।। पुनरपि तयोरेव पश्चिमाग्रेष्वपि दक्षिणोत्तरतः षड्रेखा विलेख्याः । एवं विलिखिते एकैकस्मिन् कोणे पञ्चविंशतिकोष्ठानि जायन्ते ।। एकैकस्यां दिशि पञ्च कोष्ठानि जायन्ते ।। सर्वैस्संभूय मध्यकोष्ठमृते त्रिंशत्युत्तरशतकोष्ठानि जायन्ते ।। तेषु कोष्ठेषु ईशानेन्त्यकोष्ठमारभ्य दक्षिणत आगत्य आग्नेयान्त्यकोष्ठपर्यन्तं हुं खेत्यादित्वरितामन्त्रस्य एकैकमक्षरं विलिखेत् । पुनस्तत एव तच्छेषकोष्ठमारभ्य पश्चिमत आगत्य निर्ऋत्यन्त-कोष्ठपर्यन्तं विलिखेन्मन्त्रवर्णान् ।। एवं प्रादक्षिण्येन मन्त्रावृत्त्या सर्वकोष्ठेषु विलिखेत् । एवमावृत्ते सति, मन्त्रस्य द्वादशवारमावृत्तिर्भवति । पुनर्मध्यकोष्ठे प्रणवं विलिख्य, तन्मध्ये साध्यनामादियन्त्रन्यायान्विलिखेत् ।। पुनः रेखाग्रेषु संभूयाष्टाचत्वारिंशत् शूलानि विलिखेत् ।। एवं विलिख्य जप्त्वा धृते उक्तफलं भवति ।।

अथास्यैव मन्त्रस्य निग्रहचक्रविधानमुच्यते —

आख्यां मध्यगतानले लिखतु दिक्पंक्तिष्वथ स्युः सहॄ
क्ष्ॣ च्रूं झ्रूं[1] करणादिषष्टिपदके शैवादिकालीमनुम् ।
नैर्ऋत्यादि तथा क्रमाद्यमवृतं बाह्येनलैरावृतं
प्रोक्तं निग्रहचक्रमन्तकपुरप्राप्तिप्रदं वैरिणाम् ।।

अस्यार्थः — प्रथमं दक्षिणोत्तरतः पञ्चरेखा विलिख्य, पुनस्तत्पश्चिमे च दक्षिणोत्तरतः पञ्च रेखा आलिखेत् । पुनस्तयोर्दक्षिणाग्रेषु पूर्वपश्चिमतः पञ्च रेखा विलिख्य पुनस्तयोरुत्तराग्रेषु च पूर्वपश्चिमतः पञ्च रेखा विलिखेत् ।। एवं विलिखिते मध्यखण्डमृते अशीतिकोष्ठानि जायन्ते ।। तत्र

१ झ्रूंस्थाने च्छ्रूं इति ख, ग, घ, ङ मातृकापाठः ।

मध्यखण्डेऽग्निबीजं विलिख्य, तन्मध्ये साध्यनामादियन्त्रन्यायान्विलिखेत् । पुनश्चतुर्षु दिक्खण्डचतुष्टयेषु हूं क्षूं चूं छूं इति एतान् एकैकस्यां दिशि चतुर्षु खण्डेषु सर्वेभ्यो बाह्यत आरभ्यान्तरतः क्रमेण विलिखेत् । एवमेव चतुर्दिक्-खण्डचतुष्टयेष्वपि विलिख्य, पुनरन्येषु कोणाश्रितेषु चतुष्षष्टिखण्डेषु ईशान्त्य-कोष्ठमारभ्य आग्नेयान्त्यकोष्ठपर्यन्तं कालीमन्त्रस्याक्षरान्विलिख्या(खे)त् । अवशिष्टाक्षरान् पुनरपि तदधस्तात्कोष्ठेषु तथैव विलिख्यात् । पुनर्नैर्ऋत्यान्त्य-कोष्ठमारभ्य वायव्यान्त्यकोष्ठपर्यन्तं तानेव कालीमन्त्रस्याक्षरान् विलिखेत् । तत्राप्यवशिष्टाक्षरान् तदधस्तात् कोष्ठेषु तथैव विलिख्यात् । पुनश्चतुष्षष्टि-खण्डेषु कालीमन्त्रस्य ये वर्णा विलिखिताः ते सर्वेपि क्रमेण यममन्त्रस्य एकैकवर्णवीता भवेयुः ॥ पुनरपि तद्बाह्ये अग्निबीजवीताश्च भवेयुः । तद्बाह्ये वायुबीजवीताश्च भवेयुः ॥ पुरुषमुद्दिश्य चेदेवम् । स्त्रियमुद्दिश्य चेत् काली-मन्त्रस्थाने यममन्त्रं विलिख्य कालीमन्त्रेण वेष्टयेत् ॥ अयन्तु व्याख्यानोक्त-मार्गः ॥ पुनश्चतुष्षष्टिखण्डाद्बहिः वृत्तत्रयं विलिख्य, पूर्ववृत्ते यममन्त्रैर्वेष्टयेत् ॥ द्वितीये वृत्ते अग्निबीजावृत्त्या वेष्टयेत् । तृतीये वृत्ते वायुबीजावृत्त्या वेष्टयेत् । रं इति अग्निबीजम् । यं इति वायुबीजम् ॥

कालीमन्त्र उच्यते--

कालीमाररमाळीकाळीनमोक्षक्षमोनळी ।
मामोदेत तदेमोमा रक्षतत्व त्वतक्षर ॥

इति कालीमन्त्रः ॥

यमापाट टपामाय माटमोट टमोटमा ।
वामोभूरि रिभूमोवा टटरीस्त्वस्त्वरीटट ॥

इति यममन्त्रः ॥

पुनरस्य निग्रहचक्रस्य लेखनद्रव्यं च लेख्यपट्टविशेषश्च लेखनसाधनं चोच्यते ॥

वह्नेर्विट्निम्बनिर्यासकविषमषीभिः सीसपट्टेंशुके वा
शावे पाषाणके वा विलिखतु मतिमान् काकपक्षेण यन्त्रम् ।

इति ॥ वह्नेर्विट् इति—वह्नि கொடிவேலி. विट् பஸ்ம. वह्नेर्भस्मना विलिप्याद्यन्त्रे इत्यभिप्रायः ॥ निम्बं வேம்பு. निर्यासं பிசின். विषमिति—

गृहधूमवह्निसूरणलवणौषणहेमवारिभिर्मिळितम् ।
विषमिति भीषणमुक्तं प्रेताहितनिग्रहेषु नृणाम् ॥ इति ॥

हेमवारि—பொன்னூமத்தஞ்சாறு. गृहधूमं—ஒட்டடை. वह्नि—கொடிவேலி. सूरणं—கருணைக்கிழங்கு. ऊषणं—சுக்கு-மிளகு-திப்பிலி. शावपाषाणकमिति—शावपाषाणसंज्ञमेव ॥ काकपक्षः काकस्य पक्ष एव ॥ एवं विलिख्य त्वरिताकालीमन्त्रौ जप्त्वा स्थापयेत् ॥ स्थापनप्रदेश उच्यते—

वल्मीके चत्वरे वा क्षततरुविवरे वा निदध्यादरातिः
मृत्युं प्राप्नोति भूयादवयवविकलो व्याधितः पातितो वा ।

क्षततरुरिति स्तनयित्नुहतो वृक्षः ॥ वल्मीकं—புற்று. चत्वरं चतुष्पथम् ॥

अस्यैव मन्त्रस्य निग्रहचक्रान्तरमुच्यते—

चक्रे वाष्टाष्टपदे काळीं शिवयातुधानखण्डाद्यम् ।
यमदहनानिलवीतं विलिख्य विषदण्डिकर्कटीलिप्तम् ॥

जप्तमधोमुखमेतत् यत्र तु देशे विनिक्षिपेन्मन्त्री ।
तत्रोपद्रवमखिलं दिनशस्सर्वात्मना भवति ॥

अस्यार्थः— प्रथमं पूर्वपश्चिमतः नवरेखा विलिख्य पुनस्तदुपरि दक्षिणोत्तरतश्च नव रेखा विलिखेत् । एवं विलिखिते चतुष्षष्टिकोष्ठानि जायन्ते । तेषु कोष्ठेषु ईशादिकोष्ठमारभ्य दक्षिणतः क्रमेण पूर्वोक्तयन्त्रवदेव

काळीमन्त्रस्याक्षरान् विलिख्यात्। पुनर्नैर्ऋत्यान्त्यकोष्ठमारभ्य वायव्यान्त्यकोष्ठपर्यन्तं क्रमेण पूर्वोक्तयन्त्रवदेव काळीमन्त्रस्याक्षरान् विलिख्यात्॥ पुनः पूर्वोक्तयन्त्रवदेव चतुष्षष्टिकोष्ठगतानक्षरान् यममन्त्राक्षरैश्च अग्निबीजेन च वायुबीजेन च क्रमेण वेष्टयेत्। पुनर्बहिर्वृत्तत्रयं विलिख्य पूर्ववृत्ते यममन्त्राक्षरैर्वेष्टयेत्। द्वितीये अग्निबीजैरावृत्त्या वेष्टयेत्॥ तृतीये वायुबीजैरावृत्त्या वेष्टयेत्॥ पुनर्विषेण दण्डिना मर्कटिना च मषीलेपनं कुर्यात्॥ विषमिति--पूर्वोक्तम्। दण्डीति—ब्रह्मदण्डी—சிறுதேக்கு. मर्कटी—பூனைக்காலிரஸம்.
पुनस्त्वरितामन्त्रं च यमकाळीमन्त्रौ च जप्त्वा अधोमुखेन यन्त्रं यत्र स्थापयेत् तत्र उक्तफलं भवति॥

अथास्यैव त्वरितामन्त्रस्यानुग्रहचक्रमुच्यते —

खण्डेष्वेकाशीतिषु मध्येन्दुगसाध्यं
जुंसः पूर्वं दिक्स्थचतुष्पंक्तिषु शैवम्।
लिख्याल्लक्ष्मीं शिष्टचतुष्षष्टिषु विद्या-
नीशाद्यं कन्यादि च बाह्ये त्वरिताख्याम्॥

दिक्दिक्संस्थामस्त्रपदाविर्वषडन्तां,
मेदोमालावेष्टितबिम्बं घटयीतम्।
पद्मस्थं तत् पंकजराजद्वदनान्तं,
प्रोक्तं चक्रं सम्यगथानुग्रहसंज्ञम्॥

अस्यार्थः — प्रथमं पूर्वपश्चिमतः पञ्चरेखाः विलिख्य, पुनस्तदुत्तरतश्च पूर्वपश्चिमतः पञ्चरेखा विलिखेत्। पुनस्तयोः दक्षिणोत्तरवर्तिनोः पूर्वाग्रेषु दक्षिणोत्तरतः पञ्चरेखा विलिख्य, पुनरपि तयोरेव पश्चिमाग्रेषु पञ्च रेखा विलिखेत्॥ एवं विलिखिते एकाशीतिकोष्ठानि जायन्ते। तेषु मध्यकोष्ठे चन्द्रबिम्बं ठकारं विलिख्य, तस्मिन् साध्यनामयन्त्रन्यायादीन्

विलिखेत् । चतुर्दिक्संस्थेषु चतुष्कोष्ठेषु वाह्यकोष्ठादारभ्यान्तरतः क्रमेण जुंसः वषट् इत्येतद्वर्णचतुष्टयमपि एकैकस्मिन् कोष्ठे विलिखेत् । एवं चतुर्दिक्स्थ-चतुःकोष्ठेष्वपि विलिखेत् । पुनरीशानेन्त्यकोष्ठमारभ्य दक्षिणत आगत्य मध्यकोष्ठं वर्जयित्वा आग्नेयान्त्यकोष्ठपर्यन्तं लक्ष्मीमन्त्रस्य वर्णान् विलिखेत् । अवशिष्टान्वर्णान् तदधस्तात् कोष्ठेषु पूर्ववदेव क्रमेण विलिखेत् । पुनः नैर्ऋत्यान्त्यकोष्ठमारभ्य, उत्तरत आगत्य तत्रापि मध्यकोष्ठं वर्जयित्वा वायव्यान्त्यकोष्ठपर्यन्तं क्रमेण तस्यैव लक्ष्मीमन्त्रस्य एकैकवर्णान् विलिखेत् । तत्रापि तदधस्तात् कोष्ठेषु पूर्ववदेव क्रमेणावशिष्टान् वर्णान् विलिखेत् ॥ पुनरेकाशीतिखण्डयुक्तमण्डलस्य बहिः एकैकस्यामपि दिशि त्वरितामन्त्रं सर्वं विलिख्यात् । तत्र त्वरितामन्त्रस्यान्त्याक्षरफट्पदस्थाने वषड्वषट् इत्येवं संयोज्य विलिखेत् ॥ पुनस्तद्बहिः वृत्तं विलिख्य, तस्मिन् मेदोमालां वं वं इत्येवं मालाकारेणान्योन्यसंबद्धं विलिखेत् । पुनरेतन्मण्डलं घटस्थं यथा भवेत् तथा घटाकृत्या वेष्टयेत् ॥ स घटः पद्मस्थो यथा भवेत् तथा तदधः पङ्कजं विलिखेत् ॥ पुनर्घटवदनं यथा पङ्कजराजद्भवेत् तथा घटवदनेपि ऊर्ध्व-मुखं पङ्कजं विलिखेत् ॥

लक्ष्मीमन्त्र उच्यते —

श्रीसामायायामासाश्री सानोयाज्ञ्ज्ञेयानोसा ।
मायालीळाळालीयामा याज्ञेळालीळीळाज्ञेया ॥

इति लक्ष्मीमनुः । पुनर्लेखनद्रव्यं च लेख्यपट्टविशेषश्च लेखनीविशेषश्च फलं चोच्यते —

लाक्षाभिः कुङ्कुमैर्वा विलिखतु धवले वांशुके स्वर्णपट्टे
लेखिन्या स्वर्णमय्या दृढमपि गुळिकीकृत्य सन्धारयेद्यः ।
कृत्याभ्यो मृत्युतो वा ग्रहविषदुरितेभ्यो वियुक्तस्स धन्यो
जीवेत्स्वैः पुत्रपौत्रैरपरिमितमहासंपदा दीर्घकालम् ॥

धवलांशुकं–வெள்ளைப்படம். लाक्षा–செம்பஞ்சுரஸம். अंशुके चेत् लाक्षादिभिर्वा कुंकुमैर्वा विलिखतु। स्वर्णपट्टे चेत् स्वर्णलेखिन्या विलिखेदित्यभिप्रायः। एवं विलिख्य त्वरितालक्ष्मीमन्त्रौ जप्त्वा धृतं चेदुक्तफलं भवति॥

अथास्यैव त्वरितामन्त्रस्य अनुग्रहचक्रान्तरमुच्यते—

चतुष्षष्ट्यंशे वा क्रमविदथ लक्ष्मीमनुममुं
शिवाद्यं नैर्ऋत्यादिक्रमपि चतुर्णामृतवृतम्।
बहिः स्वच्छे पट्टे जनकविहिते पूर्वविधिना
लिखित्वा जप्त्वा निक्षिपतु हितधीर्यत्र तदिदम्॥

चक्रमनुग्रहसंज्ञं मन्त्री देशेत्र संपदोऽविरतम्।
शुभतरफलदायिन्यो भवन्ति सस्यर्धिकालवृष्ट्याद्याः॥

अस्यार्थः—प्रथमं पूर्वपश्चिमतः नव रेखा विलिखेत्। पुनस्तदुपरि दक्षिणोत्तरतश्च नव रेखा विलिखेत्। एवं विलिखिते चतुष्षष्टिकोष्ठानि जायन्ते। ईशानेन्त्यकोष्ठमारभ्य दक्षिणत आगत्य आग्नेयान्त्यकोष्ठपर्यन्तं क्रमेण रमामनोः एकैकाक्षराणि विलिखेत्॥ अवशिष्टाक्षरान् तदधस्तात्कोष्ठेषु पूर्ववदेव क्रमेण विलिखेत्। पुनरपि नैर्ऋत्यान्त्यकोष्ठमारभ्य उत्तरत आगत्य वायव्यांत्यकोष्ठपर्यन्तं लक्ष्मीमन्त्रस्यैकैकाक्षराणि विलिखेत्। तत्रापि अवशिष्टानि तदधस्तात्कोष्ठेषु पूर्ववदेव क्रमेण विलिखेत्॥ पुनर्बहिर्वृत्तद्वयं विलिख्य पूर्ववृत्ते त्वरितामन्त्रेण वेष्टयेत्। द्वितीये वृत्ते अमृतबीजेन वंवं इत्यनेन वेष्टयेत्॥ लक्ष्मीमन्त्रस्तु पूर्वोक्तयन्त्रविधाने उक्तः। एवं कनकपट्टे स्वर्णादिलेखिन्या लिखित्वा त्वरितालक्ष्मीमन्त्रौ जपित्वा स्थापिते उक्तफलं भवति॥

अथ त्वरितायन्त्रान्तरमुच्यते—

हुंकारे साध्यसंज्ञां विलिखतु तदधः कर्णिकायां च शिष्टा-
नष्टौ वर्णान्दलेष्वारचयतु हरमायां त्रिशो वेष्टयीत।
कुम्भस्थं यन्त्रमेतत्सरसिजपुटितं सर्वरक्षाप्रसिद्ध्यै
क्लृप्तं सर्वोपसर्गप्रशमनफलदं श्रीकरं वश्यकारि ॥

अस्यार्थः — अष्टपत्रं पद्मं विलिख्य, तत्कर्णिकायां हुं इत्येतत् विलिख्य, तन्मध्ये साध्यनामादि यन्त्रन्यायान् विलिखेत्। पुनरष्टदळेषु खेचच्छेत्यादिमन्त्राक्षरान् भुवनेशीं विनाऽष्टौ वर्णानेकैकं विलिखेत् ॥ पुनः तद्बहिः हरमायां भुवनेशीं यन्त्रावेष्टनेन विलिख्य, तस्या एव भुवनेश्या ईकारेण तामेव भुवनेशीं त्रिशो वेष्टयेत् ॥ पुनरेतद्यन्त्रं कुम्भस्यान्तःस्थं यथा भवेत् तथा कुम्भाकृतिं विलिखेत् ॥ पुनस्स कुम्भः यथा सरसिज-पुटितो भवेत् तथा सरसिजद्वयं विलिखेत् ॥ एवं विलिख्य, त्वरितामन्त्रं जप्त्वा धृते उक्तफलं भवति ॥ इति त्वरिताविधानं समाप्तम् ॥[1]

अथ वज्रप्रस्तारिणीविधानमुच्यते — अङ्गिरा ऋषिः। त्रिष्टुप् छन्दः। वज्रप्रस्तारिणी देवता॥ क्लिन्ने हृत्। ऐं शिरः। क्रों शिखा। नित्य कवचम्। मद नेत्रम्। द्रवे अस्त्रम्। ध्यानम् —

इन्दुकलाकलितोज्वलमौलिः मारमदाकुलिता युगनेत्रा।
शोणितसिन्धुतरङ्गितपोतद्योतितभानुदळाम्बुजसंस्था ॥

दोर्धृतदाडिमसायकपाशा सांकुशचापकपालसमेता।
शोणदुकूलविलेपनमाल्या शोणतरा भवतोऽवतु देवी ॥

ह्रीं क्लिन्ने ऐं क्रों नित्यमदद्रवे ह्रीं॥ इति मन्त्रः॥ वश्यैश्वर्यप्रधानोयं मन्त्रः ॥

---

१ श्रीगीर्वाणेन्द्रपादाभ्यां नमः। इति ख, मातृकायामधिकः पाठः।

स्मृत्वा नित्यां देवीमेवं प्रजपेन्मनुं शतसहस्रम् ।
अयुतं जुहुयादन्ते नृपतरुसमिधा घृतेन वा सिध्द्यै ।

नृपतरुः—கொன்னை. लक्षं जप्त्वा नृपतरुसमिद्भिः आज्येन वा दशांशं पुरश्चरणाहोम इत्यर्थः ॥

अथ पूजाविधिः — अष्टदळपद्मे पीठे जयायै० विजयायै० अजितायै० अपराजितायै० नित्यायै० विलासिन्यै० दोग्ध्र्यै० अघोरायै० मङ्गलायै० ९ इति शाक्तं पीठं संपूज्य तस्मिन्वज्रप्रस्तारिणीमन्त्रदेवतां नित्यादेवीं समावाह्य समर्चयेत् ॥ अङ्गैः प्रथमावृतिः । हृल्लेखायै० क्लेदिन्यै० नन्दायै० क्षोभिण्यै० मदनातुरायै० निरञ्जनायै० रागवत्यै० क्लिन्नायै० मदनावत्यै० मेखलायै० द्राविण्यै० स्मरवेगवत्यै० १२ इति द्वादशपत्रेषु द्वितीयावृतिः । मातृभिस्तृतीयावृतिः । लोकेशैश्चतुर्थी ॥

इतीरिता लोकहिताय वज्रप्रस्तारिणीमन्दिरमिन्दिरायाः ।
या सर्वनारीनरराजवर्गसंमोहिनी मोहनबाणभूता ॥

इति वज्रप्रस्तारिणीविधानं समाप्तम् ॥

अथ नित्यक्लिन्नाविधानमुच्यते — संमोहन ऋषिः । निऋत्ऋतिः (निचृत्) छन्दः । नित्यक्लिन्ना देवता । ह्रीं हृत् । नित्य शिरः । क्लिन्ने शिखा । मद कवचम् । द्रवे नेत्रम् । स्वाहा अस्त्रम् ॥ ध्यानम् —

रक्ता रक्तांशुककुसुमविलेपादिका सेन्दुमौळि-
स्विद्यद्वक्त्रा मदविवशसमाघूर्णितत्रीक्षणा च ।
दो(र्भ्यो)र्घृतपाशाङ्कुशयुतकपालाभया पद्मसंस्था
देवी पायादमितफलदा नित्यशः पार्वती वः ॥

ह्रीं नित्यक्लिन्ने मदद्रवे स्वाहा ॥ इति मन्त्रः ॥ लक्षं जपेत् ॥ मधूक-

पुष्पैस्त्रिमधुरसिक्तैर्वा हविषा वा अयुतं जुहुयात् पुरश्चरणार्थम् ॥ मधूकं-
இலுப்பை.

अथ पूजा – अष्टदळपद्मपीठे बज्रप्रस्तारिणीविधानोक्ताभिः नवशक्तिभिः पीठं संपूज्य तस्मिन्नावाह्य नित्यक्लिन्नादेवीं समर्चयेत् । अङ्गैः प्रथमावृतिः । नित्यायै० निरञ्जनायै० क्लिन्नायै० क्लेदिन्यै० मदनातुरायै० मदद्रवायै० द्राविण्यै० द्रविणायै० ८ इति द्वितीयावृतिः । लोकेशैः तृतीयावृतिः ॥ अथ प्रयोगः-

प्रजपेत्प्रमदां विचिन्त्य यां वा शम(य)नस्थो मनुवित् सहस्रमानम् ।
निशि मारशिलीमुखाहता सा नचिरात्सा मदविह्वला समेति ॥

नित्याभिस्सदृशतरा न सन्ति लोके
लक्ष्मीदा जगदनुरञ्जनाश्च मन्त्राः ।

इति मन्त्रप्रशंसा कृता ॥

इति प्रपञ्चसारसारसंग्रहे गीर्वाणेन्द्रविरचिते
द्वादशः पटलः ॥

## ॥ अथ त्रयोदशः पटलः ॥

---

अथ मूलदुर्गाविधानमुच्यते --

नारद ऋषिः। गायत्री छन्दः। मूलदुर्गा देवता ॥ दुं बीजम्। ह्रीं शक्तिः। ॐ ह्रीं दुर्गायै ह्रां हृत्। ॐ ह्रीं दुर्गायै ह्रीं शिरः इत्याद्यङ्गानि ॥ ध्यानम् --

शङ्खारिचापशरभिन्नकरां त्रिणेत्रां
तिग्मेतरांशुकलया विलसत्किरीटाम्।
सिंहस्थितां ससुरसिद्धनतां च दुर्गां
दूर्वानिभां दुरितवर्गहरां नमामि ॥

ॐ ह्रीं दुं दुर्गायै नमः ॥ इति मन्त्रः ॥ अष्टलक्षं जपेत्। सर्पिस्सिक्तेन क्षीरपायसेन वा मधुराप्लुतैस्तिलैर्वा अष्टसहस्रं जुहुयात्। पुरश्चरणाहोमः। रक्षाप्रधानोयं मन्त्रः ॥

अथ पूजा — अष्टपत्रकर्णिकायां भुवनेशीं दळेषु दुर्गाअष्टाक्षरं च विलिख्य, बहिर्मातृकया संवेष्टय, चतुरश्रकोणेषु नृसिंहबीजं विलिखेत्। अस्मिन्मण्डले नवशक्तिभिर्यजेत् ॥ इति विवरणे प्रोक्तः ॥ आं प्रभायै० ईं मायायै० ऊं जयायै० एं सूक्ष्मायै० ऐं विशुद्धायै० ओं नन्दिन्यै० औं सुप्रभायै० अं विजयायै० अः सर्वसिद्धिदायै० ९ इति नवशक्तिभिः अष्टदलेषु कर्णिकायां च समभ्यर्च्य, पुनः तत्कर्णिकामध्ये ओं वज्रनखदंष्ट्रायुधाय महासिंहाय हुं फण्णमः इति एकोनविंशद्वर्णमन्त्रेण समर्चयेत्। एवं पीठ-कल्पना ॥ तस्मिन्नावाह्य समर्चयेत् ॥ अङ्गैः प्रथमावृतिः ॥ जं जयायै० विं विजयायै० किं(कीं)कीर्त्यै० प्रीं प्रीत्यै० प्रं प्रभायै० श्रं श्रद्धायै० में मेधायै० श्रुं श्रुत्यै० ८ इति द्वितीयावृतिः। चक्राय० शङ्खाय० गदायै० खड्गाय०

पाशाय० अंकुशाय० शराय० धनुषे० ८ इति तृतीयावृतिः । लोकेशैश्चतुर्थी । तदायुधैः पञ्चमी ॥

अथ प्रयोगः —

विधाय विधिनानेन कलशं चाभिषिं(षे)चयेत् ।
यमसौ भूतवेतालपिशाचाद्यैर्वियुज्यते ॥

अयमर्थः — अनेन पूजाविधिना क्वाथोदकादिभिः कलशं संपूर्य संपूज्य समभिषेचयेत् । भूतवेतालादिशान्तिर्भवति ॥

प्रयोगान्तरम् —

अमुना विधिना कृताभिषेका ललना पुत्रमवाप्नुयाद्विनीतम् ।

प्रयोगान्तरम् —

हवनं तिलसर्षपैः सहस्रद्वितयैराशु भवेच्च गर्भरक्षा ।

तिलसर्षपौ पृथगेकैकं सहस्रं सहस्रं जुहुयादित्यभिप्रायः ॥

अथ दुर्गामन्त्रप्रसङ्गात् शारदातिलकोक्तमहिषमर्दिनीमन्त्रोऽपि लिख्यते-

नारद ऋषिः । गायत्री छन्दः । महिषमर्दिनी दुर्गा देवता ॥ महिषहिंसे हुंफट् हृत् । महिषशासिनि हुंफट् शिरः । महिषं भीषय भीषय हुंफट् शिखा । महिषं हन हन देवि हुंफट् कवचम् । महिष-निषूदिनि हुंफट् अस्त्रम् । ध्यानम् —

गारुडोपलसन्निभां मणिमौलिकुण्डलमण्डितां
नौमि फालविलोचनां घनकुन्तळां महिषोषुषीम् ।

चक्रशङ्खकृपाणखेटकबाणकार्मुकशूलकां
तर्जनीमपि बिभ्रतीं निजबाहुभिः शशिशेखराम् ॥

[1] महिषमर्दिनि स्वाहा ॥ इत्यष्टाक्षरो मन्त्रः ॥ अष्टलक्षजपः । तिलैरष्टसहस्रं जुहुयात् ॥

अथ पूजा — पूर्वोक्तमूलदुर्गापीठे समावाह्य समर्चयेत् ॥ अङ्गैः प्रथमावृतिः । आं दुर्गायै० ईं वरमूर्तिन्यै० ऊं आर्यायै० एं कनकप्रभायै० ऐं कृत्तिकायै० ओं अभयप्रदायै० औं कन्यायै० अः स्वरूपिण्यै० ८ एवं द्वितीयावृतिः ॥ यं चक्राय० रं शंखाय० ळं खड्गाय० वं खेटाय० शं बाणाय० षं धनुषे० सं शूलाय० हं कपालाय० ८ इति तृतीयावृतिः ॥ इन्द्रादिभिश्चतुर्थी ॥ वज्रादिभिः पञ्चमी ॥

अथ प्रयोगः —

वशयेत्तिलहोमेन नरान्नरपतीनपि ।
सिद्धार्थैर्जुहुयान्मन्त्री रोगान्मुच्येत तत्क्षणात् ॥

पद्मैर्हुत्वा जयेच्छत्रून् दूर्वाभिश्शान्तिमाप्नुयात् ।
पालाशकुसुमैः पुष्टिं धान्यैः धान्यश्रियं व्रजेत् ॥

काकपक्षैः कृते होमे विद्वेषं तनुते नृणाम् ।
मरीचिहोमान्मरणं रिपुराप्नोति सर्वथा ॥

क्षुद्रारिचोरभूताद्यान् ध्यात्वा देवीं विनाशयेत् ।

अथ वनदुर्गाविधानमुच्यते— आरण्यक ऋषिः । अनुष्टुप् छन्दः । वनदुर्गा देवता । दुं बीजम् । स्वाहा शक्तिः । उत्तिष्ठ पुरुषि हृत् । किं

१ महिषमर्दिनी इति ख, ग, ङ मातृकापाठः ।

स्वपिषि शिरः । भयं मे समुपस्थितं शिखा । यदि शक्यमशक्यं वा कवचम् । तन्मे भगवति नेत्रम् । शमय स्वाहा अस्त्रम् ॥ ध्यानम्—

हेमप्रख्यामिन्दुखण्डात्तमौळिं शङ्खारीष्टाभीतिहस्तां त्रिणेत्राम् ।
हेमाब्जस्थां पीतवस्त्रां प्रसन्नां देवीं दुर्गां दिव्यरूपां नमामि ॥

इति सात्विकध्यानम् ॥

अरिशङ्खकृपाणखेटबाणान् सधनुश्शूलकतर्जनीर्दधाना ।
भवतां महिषोत्तमाङ्गसंस्था नवदूर्वासदृशी श्रियेऽस्तु दुर्गा ॥

इति राजसध्यानम् ॥

चक्रदरखड्गखेटकशरकार्मुकशूलसंज्ञककपालैः ।
मुष्टिमुसलकुन्तनन्दकवलयगदाभिण्डिपालशक्त्याद्यैः ॥

उद्यद्विकृतिभुजाढ्या माहिषके सजलजलदसंकाशा ।
सिंहस्था वाग्निनिभा पद्मस्था वाथ मरतकश्यामा ॥

व्याघ्रत्वक्परिधाना सर्वाभरणान्विता त्रिणेत्रा च ।
अहिकलितनीलकुञ्चितकुन्तलविलसत्किरीटशशिकला ॥

सर्पाळिवलयनूपुरकाञ्चीकेयूरहारसंभिन्ना ।
सुरदितिजाभयभयदा ध्येया कात्यायनी प्रयोगविधौ ॥

प्रयोगविधौ रक्षानिग्रहादावित्यर्थः ॥ इति तामसध्यानम् ॥

उत्तिष्ठ पुरुषि किं स्वपिषि भयं मे समुपस्थितम् । यदि शक्यमशक्यं वा तन्मे भगवति शमय स्वाहा ॥ इति मन्त्रः ॥ उपद्रवशान्तिरक्षाप्रधानोऽयं मन्त्रः ॥ पदद्वयसन्धिगुदान्ध्वाधारोदरपार्श्वहृत्स्तनेषु । गळदोस्सन्धिवदननासाकपोलदृक्कर्णयुक्भ्रूके(षु) ॥ न्यसेत ॥ इत्यक्षरन्यासः ॥ चतुर्लक्षजपः ॥ व्रीहितिलाज्यहविर्भिः दशांशं पुरश्चरणाहोमः ॥

अथ वनदुर्गायन्त्रं कल्पान्तरोक्तमत्र लिख्यते—

षट्कोणकर्णिकं पद्ममष्टपत्रं सकेसरम् ।
तद्बहिर्द्वादशदळं चतुर्विंशद्दळं पुनः ॥

तद्बहिर्वृत्तयुगलं मध्ये दुं साध्यसंयुतम् ।
दावदुर्गाषडङ्गानि कर्णिकास्थषडश्रिषु ॥

अष्टपत्रेषु विलिखेत् मतिमान्महिषार्दिनीम् ।
दळद्वादशके दावदौर्गवर्णं त्रिशस्त्रिशः ॥

शिष्टं प्रथमपत्रे तु चतुर्विंशद्दळे पुनः ।
मालामनोर्वर्णयुग्मं प्रतिपत्रं समालिखेत् ॥

त्रैष्टुभं प्रतिलोमेन तद्बहिः पत्रसन्धिषु ।
वर्तुळे प्रथमे वृत्ते अष्टमूर्तीः प्रविन्यसेत् ॥

द्वितीयेऽष्टायुधान्येतद्यन्त्रं दौर्गमनुत्तमम् ॥

अस्यार्थः—प्रथमं षट्कोणं तदन्तः दुमिति विलिखेत् । तत्कोणेषु वनदुर्गाषडङ्गानि विलिखेत् । तद्बहिरष्टदळं विलिख्य, तेषु महिष [1] मर्दिनि स्वाहेति अष्टाक्षराणि विलिखेत् । तद्बहिः द्वादशदळं विलिख्य तेषु उत्तिष्ठे-त्यादिवनदुर्गामन्त्राक्षराणि त्रिशस्त्रिशो विलिखेत् ॥ अवशिष्टं पूर्वदले विलिखेत् । तद्बहिश्चतुर्विंशतिदळं विलिख्य, तेषु ओं भूर्भुवस्सुवः ज्वल ज्वालामालिनि सर्वभूतसंहारकारके वरदे वरदे जातवेदसे ज्वल ज्वल प्रज्वल प्रज्वल हुंफट् स्वाहा इत्यस्य (मालामन्त्रस्य) अक्षरद्वन्द्वं विलिखेत् ॥ तद्बहिः पत्रसन्धिषु

---

१ मर्दिनी इति ख, ग, घ, ङ मातृकापाठः ।

जातवेदोमन्त्रं प्रतिलोमेन वेष्टयेत् ॥ तद्बहिर्वृत्तद्वयं विलिख्य प्रथमे वृत्ते दुर्गायै नमः, वरवर्णिन्यै० आर्यायै० कनकप्रभायै० कृत्तिकायै० भयदायै० कन्यायै० स्वरूपायै० ८ इत्यष्टभिर्वेष्टयेत् ॥ द्वितीये चक्राय० शंखाय० गदायै० खड्गाय० पाशाय० अंकुशाय० शराय० धनुषे ८ इत्येतैर्वेष्टयेत् ॥ इति ॥

अथ पूजा — कर्णिकायां बीजं, द्वादशपत्रेषु षडङ्गोक्तपदावृत्तिद्वयं विलिख्य, प्रथमे वृत्ते त्रिष्टुभावेष्ट्य द्वितीये वृत्ते मातृकया संवेष्ट्य चतुरश्र-कोणेषु दुमिति विलिखेत् । अस्मिन्मण्डले नवशक्तिभिर्यजेदिति विवरणे प्रोक्तः ॥ मूलदुर्गायाः पीठे समावाह्य समर्चयेत् ॥ अङ्गैः प्रथमावृतिः । आर्यायै० दुर्गायै० भद्रायै० भद्रकाळ्यै० अम्बिकायै० क्षेम्यायै० वेदगर्भायै० क्षेमकार्यै० ८ इति द्वितीयावृतिः ॥ अरये० दराय० कृपाणाय० खेटाय० बाणाय० धनुषे० शूलाय० कपालाय० ८ इति तृतीयावृतिः ॥ मातृभिः चतुर्थी ॥ लोकेशैः पञ्चमी ॥

अथ प्रयोगविधिः ॥

उद्दिश्य यद्यदेनं मनुं जपेत्सहस्रमयुतं वा ।
तत्तन्मन्त्री लभते त्वरितं तदनुग्रहादसाध्यमिति (मपि) ॥

प्रयोगान्तरम् --

स्नात्वार्काभिमुखस्सन् नाभिद्वयसेंभसि स्थितो मन्त्री ।
अष्टोर्ध्वशतं प्रजपेत् निजवाञ्छितसिद्धये च लक्ष्म्यै च ॥

नाभिद्वयसं नाभिप्रमाणम् ॥

प्रयोगान्तरम् --

ध्यात्वा त्रिशूलहस्तां ज्वरसर्पग्रहविपत्सु जन्तूनाम् ।
संस्पृश्य शिरसि जप्यात् तर्जन्योपद्रवं शमयेत् ॥

अयमर्थः — ज्वरेण वा सर्पेण वा पिशाचादिना वा पीडिते साध्यस्य शिरसि तर्जन्यंगुल्या संस्पृश्य त्रिशूलहस्तां वनदुर्गां ध्यात्वा जपेत्। तदुपद्रवनिवृत्तिर्भवति ॥

प्रयोगान्तरम् —

अयुतं तिलैर्वनोत्थैः राजीभिर्वा हुनेत्समिद्भिर्वा ।
मायूरिकीभिरचिरात् सोपस्मारादिकांश्च नाशयति ॥

वनोत्थतिलं कृष्णतिलम् ॥ राजी-கடுகு मायूरिकी-நாயுருவிஸமித்து
अयमर्थः—एतेष्वेकेन अयुतं जुहुयात् । अपस्मारादिपिशाचादिनिवृत्तिर्भवति ॥

प्रयोगान्तरम् —

जुहुयाद्रोहिणसमिधां अयुतं मन्त्री पुनस्सशुङ्गानाम् ।
सर्वापदां विमुक्त्यै सर्वसमृद्ध्यै ग्रहादिशान्त्यै च ॥

रोहिणं वटम् ॥ सशुङ्गं साग्रमित्यर्थः ॥ अयमर्थः— शत्रुशान्त्यर्थं च पिशाचादिशान्त्यर्थं च अयुतं साग्राभिर्वटसमिद्भिः जुहुयात् इति ॥

प्रयोगान्तरम् —

आर्कैः समित्सहस्रैः प्रतिजुहुयादर्कवारमारभ्य ।
दशदिनतोर्वाक्वाञ्छितसिद्धिर्देव्याः प्रसादतो भवति ॥

अर्क—எருக்கு. अर्कवारमारभ्य दशदिनं नित्यशः सहस्रं जुहुयादित्यर्थः ।

प्रयोगान्तरम् —

शुद्धैस्सारैरिध्मैः त्रिदिनं वा सप्तरात्रकं वाथो ।
प्रतिशकलं प्रतिजुहुयान्मनुना निजवाञ्छितात्प्तये मन्त्री ॥

सारं-வேங்கை प्रतिशकलं प्रतिलोमशकलम् -- पृष्ठाग्रं, अथवा शकलं प्रत्येकैकेन कुर्यादित्यर्थः। संख्यानुक्ते सहस्रमिति न्यायात् सारसमिद्भिः सहस्रं जुहुयात् निजवाञ्छितसिद्धये ॥

प्रयोगान्तरम् --

विशिखानां त्रिशत्कं पुरोनिधायाथ तीक्ष्णतैलेन ।
जुहुयात्सहस्रकं वाऽयुतमपि संख्यासु पूरितासु पुनः ॥

संपातिततैलेन च शरान्समभ्यज्य पूर्ववज्जप्यात् ।
तानथ शूरो धन्वी शुद्धाचारः प्रवेधयेद्बाणान् ॥

प्रतिसेनाया मध्ये सा धावति सद्य एव संभ्रान्ता ।
भूयो गुरुं धनैरपि धान्यैः परिपूर(ज)येच्च कारयिता ॥

विशिखं-அம்பு तीक्ष्णतैलं-கரு(டு)கு எண்ணெ.

प्रयोगान्तरम् —

अष्टोत्तरशतं जप्तं यच्छिरसि प्रक्षिपेच्चिताभस्म ।
स तु विद्विष्टो लोकैः देशाद्देशान्तरं परिभ्रमति ॥

चिताभस्म–श्मशानभस्म ॥

प्रयोगान्तरम् —

कारस्करस्य पत्रैरष्टसहस्रं निपातितैर्मरुता ।
जुहुयात्सपादपांसुभिरुच्चाटकरं भवेद्रिपोस्सद्यः ॥

कारस्करं-எட்டி. अयमर्थः— स्वयमेव पतितैः कारस्करपत्रैः अष्टोत्तरसहस्रं साध्यस्य पादपांसुयुक्तैः जुहुयात्। रिपोरुच्चाटनं भवति ॥

प्रयोगान्तरम् —

सेनां संस्तम्भयितुं विषतरुसुमनस्सहस्रकं जुहुयात् ।
तावद्भिस्तत्पत्रैः मन्त्री सेनां निवर्तयति ॥

विषतरुसुमनः-எட்டிப்பூ. अयमर्थः— विषतरुपुष्पैः परसेनास्तम्भनार्थं तत्पत्रैः परसेनोच्चाटनार्थं च सहस्रं जुहुयात् ॥

प्रयोगान्तरम् —

खरसारक्तोपेतैः जुहुयात्पत्रैरुलूकवायसयोः ।
मृतयेऽरातिर्मत्तस्तून्मत्तसमित्सहस्रहोमेन ॥

संस्थापितानिलां तां प्रतिकृतिमुष्णोदके विनिक्षिप्य ।
प्रजपेदुन्मादः स्यात् शत्रोर्दुग्धाभिषेकतः शान्तिः ॥

उन्मत्तसमित्-ஊமத்தஸமித்து साध्यनामयुक्तेनानेन मन्त्रेण उन्मत्तसमित्सहस्रहोमात् साध्यः उन्मत्तो भवति । पुनरपि तेनैवोन्मत्तशकलेन साध्यप्रतिकृतिं निर्माय तस्यां प्राणप्रतिष्ठां च कृत्वा तामुष्णोदके विनिक्षिप्य तां स्पृष्ट्वा मन्त्रं साध्यनामयुतं जपेत् । शत्रोरुन्मादो भवति ॥

अथ कादिमताख्ये नित्यातन्त्रे प्रोक्तेन प्रकारेण सर्वत्र प्रतिकृतिनिर्माणलक्षणमुच्यते —

साध्यजन्मांशकं ज्ञात्वा, चन्द्रांशकेषु चेत् षोडशांगुलां, सूर्यांशकेषु चेत् द्वादशांगुलां अन्यांशकेषु अश्विन्यादिषु नवसु नक्षत्रेषु चेत् चतुर्दशांगुलां, मखादिषु नवसु चेत् अध्यर्धत्रयोदशांगुलां, मूलादिषु नवसु चेत् त्रयोदशांगुलां च प्रतिकृतिं कुर्यात् ॥ तत्र सर्वत्र स्वाष्टमांशेन शिरोदेशं, तावता वक्षः तावता जठरं, तावता नाभेराकटिबन्धं, तद्द्वैगुण्यादूरू, तावता जङ्घे प्रपदौ

च यथावयवशोभं विदध्यात् ॥ एवं सर्वत्र प्रतिकृतिनिर्माणविधानमुक्तम् ॥ पुनस्तच्छान्तिः कर्तव्या चेत् क्षीरेण तां प्रतिकृतिमभिषिञ्चेत् ॥

प्रयोगान्तरम् —

रविबिम्बगतामरुणां करयुगपरिक्लृप्तशूलतर्जनिकाम् ।
ध्यात्वाऽयुतं प्रजप्यात् मारयितुं सद्य एव रिपुनिग्रहम् ॥

तर्जनी तर्जन्यङ्गुळी ॥ अयमर्थः — उक्तलक्षणां देवीं सूर्यमण्डले ध्यात्वा तस्यास्तर्जन्या अधस्तात् साध्यं च ध्यात्वा अयुतं जपेत्, उक्तफलं भवति ॥

प्रयोगान्तरम् —

असिखेटधरार्कस्था क्रुद्धा मारयति सैव जपविधिना ॥

अत्राप्ययुतसंख्याजपः ॥

प्रयोगान्तरम् —

सिंहस्था, बाणधनुष्करा समुच्चाटयेदरीनचिरात् ।

अयमर्थः — दुर्गायाः पुरतः धावमानं शत्रुं धावन्तीं च तां ध्यात्वा अयुतं जपेत् । उच्चाटनं भवति ॥

प्रयोगान्तरम् —

विषतरुसमिदयुतहुतादथ करिणो रोगिणो भवन्त्यचिरात् ।
तत्पर्णैश्च विनाशः तेषामुच्चाटनं च तत्पुष्पैः ॥

अयमर्थः — विषतरुः எட்டி विषतरुसमिद्भिः अयुतं जुहुयात् ।

गजानां रोगो भवति । विषतरुपत्रैः अयुतं जुहुयात् । गजानां मरणं भवति । विषतरुपुष्पैरयुतं जुहुयात् । गजानामुच्चाटनं भवति ॥

प्रयोगान्तरम् —

आनित्यसमिद्धोमात् रोगा नश्यन्ति दन्तिनामचिरात् ।

आनित्यं அநிச்சை दन्ती-गजः ॥

प्रयोगान्तरम् --

तत्पुष्पैर्मधुराक्तैः होमाच्च वशीभवन्ति मातङ्गाः ॥

अयमर्थः -- आनित्यपुष्पैः त्रिमधुरसिक्तैः संख्यानुक्ते सहस्रमिति न्यायात् सहस्रं जुहुयात् । गजा वशीभवन्ति ॥

प्रयोगान्तरम् --

त्रिमधुरसिक्तैरनित्यपत्रैर्मत्ता भवन्ति ते सद्यः ।

अनित्यं-அநிச்சை. अयमर्थः—त्रिमधुरसिक्तैरनित्यपत्रैः सहस्रं जुहुयात् । गजानां मदो भवति ॥

रक्षाकरस्तु करिणां तज्जपितपञ्चगव्यलेपः स्यात् ॥

प्रयोगान्तरम् --

आज्यतिलराज्यनित्यकदोग्धोदनपञ्चगव्यतण्डु(ल)कैः ।
सघृतैश्च प्रत्येकं सहस्रहवनं गजाश्ववर्धनकृत् ॥

राजि-கடுகு. अनित्यकं-அநிச்சை. निम्बमिति केचित् । आज्याद्यै-राज्यान्तैरष्टद्रव्यैरेतैः प्रत्येकं सहस्रं हुनेदित्यर्थः ॥

प्रयोगान्तरम्--

द्विजभूरुहं महान्तं छित्वा निर्भिद्य पञ्चधा भूयः ।
आशाक्रमेण पञ्चाऽयुधा विधेयाश्च साधु शिल्पविदा ॥

शङ्खस्सनन्दकोरिः शार्ङ्गः कौमोदकी दिशाक्रमतः ।
पञ्चेति पञ्चगव्ये निधाय जप्याच्च पञ्चसाहस्रम् ॥

तावत् घृतेन जुहुयात् तेष्वथ संपात्य साधु सम्पातम् ।
पुनरपि तावज्जप्त्वा मद्ध्याद्यवटेषु पञ्चगव्ययुतम् ॥

संस्थाप्य समीकृत्य च बलिं हरेत्तत्र तन्मन्त्रैः ।
पुरराष्ट्रग्रामाणां कार्या रक्षैवमेव मन्त्रविदा ॥

यस्मिन्देशे विहिता रक्षेयं तत्र वर्धते लक्ष्मीः ।
धनधान्यसमृद्धिः स्यात् रिपुचोराद्याश्च नैव बाधन्ते ॥

अयमर्थः—द्विजभूरुहं-पलाशं (பொரசு) द्विजभूरुहवृक्षमेकं छित्वा, तस्य वृक्षरूपेणावस्थानसमये पूर्वदिक्स्थो यः पार्श्वः तत्पार्श्वं पृथक् छित्वा तेन शङ्खं संपाद्य, पुनस्तस्य दक्षिणदिक्स्थो यः पार्श्वः तमपि पृथक् छित्वा तेन नन्दकायुधं संपाद्य, पुनस्तस्य पश्चिमदिक्स्थखण्डेन चक्रायुधं संपाद्य, पुनस्तस्योत्तरदिक्स्थखण्डेन शार्ङ्गायुधं संपाद्य, पुनस्सर्वमध्यखण्डेन कौमोदक्या-युधं संपाद्य, तानेवं संपाद्य, पुनरेतान् पञ्च पञ्चगव्ये निधाय सर्वान्सह स्पृष्ट्वा, वनदुर्गामन्त्रं चतुर्विंशतिपटले उपरि विष्णुपञ्जरे वक्ष्यमाण-तत्तदायुधमन्त्रांश्च पञ्चसहस्रं जपेत् । पुनः पञ्चसहस्रसंख्यं घृतेन हुत्वा तत्संपातं गृहीत्वा आयुधानां संपातस्पर्शनं कुर्यात् । पुनरपि पूर्ववदेव पञ्चायुधानि स्पृष्ट्वा वनदुर्गामन्त्रं तत्तन्मन्त्रं च पञ्चसहस्रसंख्यं जपेत् । पुनस्साध्यस्थले चतुर्दिक्षु मध्ये च पञ्चकुण्डानि खनित्वा, तेषु पूर्वादिक्रमेण

शङ्खाद्यायुधानि पञ्चगव्ययुतानि स्थापनीयानि । पुनस्तानि कुण्डानि पिधाय, पुनः तत्र(तत्र) तत्तदायुधमन्त्रैः शङ्खाय नमः इत्यादिभिः बलिं हरेत् । अक्षतादिद्रव्यैः पुनर्मूलमन्त्रोक्तवदेव सर्वत्र पूजा ॥ पुनरायुधानां समीपे स्थित्वा स्तोत्रमपि कुर्यात् ॥

कुन्देन्दुनीकाशमशेषपापरक्षोविषघ्नं वरधीरनादम् ।
आस्यानिलापूरितमच्युतस्य शङ्खं सदा शरणमहं प्रपद्ये ॥ १ ॥

प्रभासयन्तं भुवनं महान्तं सुपुष्करं पुष्कराक्षोद्धृतं च ।
विद्यामयं नन्दकनामधेयं खड्गं सदाहं शरणं प्रपद्ये ॥ २ ॥

सहस्रसूर्यप्रतिमांशुजालस्फुरद्भ्रमद्वह्निशिखावृतं च ।
भ्रमत्कराग्रे यदरिष्टनेमेः चक्रं सदा शरणमहं प्रपद्ये ॥ ३ ॥

येनाखिलं विश्वमिदं सुगुप्तं हत्वारिसङ्घान् परमेश्वरेण ।
समस्तदेवासुरदुर्निरीक्ष्यं शार्ङ्गं सदा शरणमहं प्रपद्ये ॥ ४ ॥

सविस्फुलिङ्गान्वमतीं समन्तात् अशीनशेषासुरदैत्यहन्त्रीम् ।
कौमोदकीं वामकरे निषण्णां अमूं(गदां) सदा शरणमहं प्रपद्ये ॥

एवं कृते उक्तफलं भवति ॥

**प्रयोगान्तरम् —**

पद्मोत्पलकुमुदहुतैः नृपपत्नीः ब्राह्मणान् वशीकुरुते ।

उत्पलं-நைதல்பூ कुमुदं-ஆம்பல் अयमर्थः — पद्मशतहोमात् नृपा वशगा भवन्ति । उत्पलशतहोमात् नृपस्त्रियो वशीभवन्ति । कुमुदशतहोमात् ब्राह्मणा वशगा भवन्ति ॥

प्रयोगान्तरम् --

कल्हारलोणहोमैः विट्शूद्रौ जातिभिस्तथा ग्रामम् ।

कल्हारं-செங்கழுநீர்பூ लोणं-உப்பு जाति-சிறுசெண்பகம் अयमर्थः- कल्हारशतहोमैः वैश्या वशगा भवन्ति । लोणशतहोमात् शूद्रा वशगा भवन्ति ।। जातीकुसुमशतहोमात् ग्रामो वशगो भवति ।।

प्रयोगान्तरम् —

अथ वारिगदाम्बुजकरं मुकुन्दं विचिन्त्य रविबिम्बे ।<br>
व्यत्यस्तपुरुषिभगवति पदमनुं जपतु सर्वसिद्धिकरम् ।।

अयमर्थः — चतुर्भुजं विष्णुं सूर्यमण्डले ध्यात्वा वनदुर्गामन्त्रं जपेत् । तत्र उत्तिष्ठ पुरुषीत्यत्र ईकारान्तः संबुद्धौ उत्तिष्ठ पुरुषेति अकारान्तः । संबुध्या योजयित्वा जपेत् । पुनस्तन्मे भगवतीत्यत्रापि पुंलिङ्गसंबुध्या योजयित्वा जपेत् । एवं जप्ते अभीष्टसिद्धिर्भवति ।।

प्रयोगान्तरम् —

साध्याख्याक्षरगर्भितं मनुमिमं पत्रे लिखित्वा च तत्<br>
चक्रीहस्तमृदा कृतप्रतिकृतेर्विन्यस्य मन्त्री हृदि ।<br>
सप्ताहं त्वथ पुत्तलीमभिमुखेऽवस्थाप्य सन्ध्यात्रये<br>
जप्यादष्टशतं चिराय वशतां गच्छत्यसौ निश्चयः ।।

अयमर्थः — कर्णिकायां साध्यनाम लिखित्वा, तद्बहिरष्टदलं विलिख्य तेषु वनदुर्गामन्त्रवर्णान् विभागशो विलिख्य, तद्यन्त्रं तालपत्रे लिखित्वा कुलालहस्ताश्लिष्टमृदा निर्मितायाः साध्यप्रतिकृतेः हृदि विन्यस्य, तां प्रतिमां पुरतः संस्थाप्य सप्तदिनं त्रिसन्ध्यासु अष्टोत्तरशतं जपेत् ।। एवं जप्ते साध्यो वशीभवति ।।

प्रयोगान्तरम् —

व्रीहीणां जुहुयान्नरोऽष्टशतकं संवत्सराद्व्रीहिमान्
गोदुग्धैः पशुमान्घृतैः कनकवान्दध्ना च सर्वर्धिमान् ।
अन्नैरन्नसमृद्धिमांश्च मधुभिः स्याद्रत्नवान्दूर्वया-
प्यायुष्मान् प्रतिपद्घृतेन महतीं सद्यः श्रियं प्राप्नुयात् ॥

अयमर्थः — एतैरुक्तैर्द्रव्यैः अष्टशतसंख्यं दिनशो हुनेत् । तत्तत्फलं भवति । दूर्वया तु सामान्येन आयुष्मान् भवति । प्रतिप्रतिपदं हुतया लक्ष्मीः भवति ॥

अथ शूलिनीविधानमुच्यते —

दीर्घतमा ऋषिः । ककुप्छन्दः । शूलिनी दुर्गा देवता । हुं बीजम् । स्वाहा शक्तिः । शूलिनि दुर्गे देवसिद्धसुपूजिते नन्दिनि मां रक्ष रक्ष महायोगेश्वरि हुंफट् हृत् । शूलिनि वरदे देवसिद्धसुपूजिते नन्दिनि मां रक्ष रक्ष महायोगेश्वरि हुंफट् शिरः । शूलिनि विन्ध्यवासिनि देवसिद्धसुपूजिते नन्दिनि मां रक्ष रक्ष महायोगेश्वरि हुंफट् शिखा । शूलिनि असुरमर्दिनि देवसिद्धसुपूजिते नन्दिनि मां रक्ष रक्ष महायोगेश्वरि हुंफट् कवचम् ।[१] शूलिनि युद्धप्रिये त्रासय त्रासय देवसिद्धसुपूजिते नन्दिनि मां रक्ष रक्ष महायोगेश्वरि हुंफट् अस्त्रम् ॥ ध्यानम् —

बिभ्राणा शूलबाणास्यरिसदरगदाचापपाशान् कराब्जैः
मेघश्यामा किरीटोल्लिखितजलधराभीषणा भूषणाढ्या ।
सिंहस्कन्धाधिरूढा चतसृभिरसिखेटान्विताभिः परीता
कन्याभिर्भिन्नदैत्या भवतु भवभयध्वंसिनी शूलिनी वः ॥

---

१ शूलिनि सर्वसिद्धिप्रदे + फट् अस्त्रम् इति ङ, मातृकायां योजितः पाठः ।

ज्वल ज्वल शूलिनि दुष्टग्रह हुंफट् स्वाहा। इति मन्त्रः पञ्चदशार्णः। शारदातिलके तु शूलिनीपदमपि वीप्स्याष्टादशार्णोयं मन्त्रः। रक्षाप्रधानोयं मन्त्रः। पञ्चदशलक्षं जपेत्। आज्येन वा आज्यसिक्तहविषा वा दशांशं पुरश्चरणाहोमः॥

अथ पूजाविधिः—आं प्रभायै० ईं मायायै० ऊं जयायै० एं सूक्ष्मायै० ऐं विशुद्धायै० ओं नन्दिन्यै० औं सुप्रभायै० अं विजयायै० अः सर्वसिद्धिदायै० ९ इति नवशक्तिभिरष्टदलेषु नवमीं कर्णिकायां च समभ्यर्च्य पुनः ओं वज्रनख-दंष्ट्रायुधाय महासिंहाय हुंफट् नमः इति कर्णिकायां समभ्यर्च्य तस्मिन्पीठे शूलिनीं समावाह्य समर्चयेत्। अङ्गैः प्रथमावृतिः। दुर्गायै० वरदायै० विन्ध्यवासिन्यै० असुरमर्दिन्यै० युद्धप्रियायै० देवसिद्धसुपूजितायै० नन्दिन्यै० महायोगेश्वर्यै० ८ इति द्वितीयावृतिः। रथाङ्गाय० शङ्खाय० असये० गदायै० बाणाय० कार्मुकाय० शूलाय० पाशाय० ८ इति तृतीयावृतिः॥ लोकपालै-श्चतुर्थी॥

अथ प्रयोगः—

अङ्गकर्मैव रक्षाकृत्प्रोक्तं ग्रहनिवारणम्।

अयमर्थः—मन्त्रस्याङ्गानि कुर्यात्साध्यशरीरे। तस्मादतीव रक्षाकरं भवति॥

प्रयोगान्तरम्—

उद्घूर्णैः प्रहरणकैरुदीर्णवेगैः शूलाद्यैर्निजमथ शूलिनीं विचिन्त्य।
आविश्य क्षणमपि जप्यमानमन्त्रस्यावृत्त्या द्रुतमपयान्ति भूतसङ्घाः॥

अयमर्थः—आत्मानं शूलबाणादिभिः श्लोकोक्तैरायुधैर्युक्तां शूलिनीं ध्यात्वा मन्त्रं जप्यात्॥ भूतपिशाचादय आविश्य क्षणेन गच्छन्ति॥

प्रयोगान्तरम्——

अन्तराथ पुनरात्मरोगिणोरम्बिकामपि निजायुधाकुलाम् ।
संविचिन्त्य जपतोरिमुद्रया विद्रवन्त्यवशविग्रहा ग्रहाः ॥

अरिमुद्रा——चक्रमुद्रा ॥ पाण्योस्स्तन(ल)द्वयमन्योन्न्यं सम्मुखं प्रसृतां-गुलिकं कनिष्ठिकाद्वयस्पृष्टांगुष्ठद्वयाग्रमन्योन्यं दृढसंश्लिष्टं चक्रमुद्रा ॥ रोगिण-स्साध्यस्य साधकस्य जप्तुश्च मध्ये शूलिनीं निजायुधयुक्तां ध्यात्वा साध्ये अरिमुद्राप्रदर्शनपूर्वकं जप्यात् ॥ तस्माद्ग्रहादयः पलायन्ते ॥

प्रयोगान्तरम्——

अहिमूषिकवृश्चिकादिजं वा वहुपात् कुक्कुरलूतिकोद्भवं वा ।
विषमाशु विनाशयेन्नराणां प्रतिपद्यैव च विन्ध्यवासिनी सा ॥

अयमर्थः — अनेन मन्त्रजपेन भस्मना वा एतानुक्तान्विषान् नाशयेत् ।

प्रयोगान्तरम्——

आधाय बाणे निशितेथ देवीं क्षेमंकरीं मन्त्रमिमं जपित्वा ।
तद्वेधनादेव विपक्षसेना दिशो दिशो धावति नष्टसंज्ञा ॥

अयमर्थः—— तीक्ष्णे बाणे शूलिनीं समावाह्य जप्त्वा तेन बाणेन वेधयेत् प्रतिसेनामध्ये । तस्मात्सा सेना भ्रान्ता धावति ॥

प्रयोगान्तरम्——

आत्मानमार्यां प्रतिपद्य शूलपाशान्वितां वैरिबलं प्रविश्य ।
मन्त्रं जपन्नाशु परायुधानि गृह्णाति मुष्णाति च बोधमेषाम् ॥

अयमर्थः—— शूलपाशहस्तां दुर्गामात्मानं ध्यात्वा शत्रुसेनामध्ये प्रविश्य जपेत् । उक्तफलं भवति ॥

प्रयोगान्तरम्—

तिलसिद्धार्थैर्जुहुयात् लक्षं मन्त्री सपत्ननामयुतम् ।
स तु रोगादिहतात्मा मृतिमेति न तत्र सन्देहः ॥

सिद्धार्थं கடுகு अयमर्थः -- तिलसिद्धार्थाभ्यां पृथक् स्वाहाकारान्ते तत्पूर्वं वा साध्यनाम मारयमारयेतियुक्तं लक्षं जुहुयात् । मृतिर्भवति ॥

प्रयोगान्तरम्—

त्रिमधुरसिक्तैश्च तिलैः अष्टसहस्रं जुहोति योनुदिनम् ।
अप्रतिहतास्य शक्तिः भूयात्प्रागेव वत्सरतः ॥

अयमर्थः — त्रिमधुरसिक्तैस्तिलैः अष्टोत्तरसहस्रं जुहुयान्नित्यशः । वत्सराद्बलाधिक्यं भवति ॥

प्रयोगान्तरम्--

सर्पिषाष्टशतहोमतोऽमुना वाञ्छितं सकलमब्दतो भवेत् ।

अयमर्थः -- अष्टोत्तरशतं नित्यशः आज्येन जुहुयात् ॥ संवत्सरात् वाञ्छितं लभते ॥

प्रयोगान्तरम्--

दूर्वया त्रिकयुजेप्सितं लभेत् सम्यगष्टशतसंख्यया हुतात् ।

अयमर्थः — अष्टोत्तरशतं दूर्वात्रिकैर्जुहुयात् वाञ्छितं लभते ॥

प्रयोगान्तरम्—

क्षुरिकाकृपाणनखरा मन्त्रेणानेन साधु संजप्ताः ।

संपाताज्यसुसिक्ताः अप्रतिहतशक्तयो भवन्ति युधि ॥

अयमर्थः — नखर इति असिधेनुः । (சுறுள் கத்தி) उक्तान्येतान्यायुधानि शूलिनीमन्त्रेण आज्यं हुत्वा संपातसिक्तानि चानेन मन्त्रेण जप्तानि च युधि समीचीनानि भवन्ति ॥

प्रयोगान्तरम् —

गोमयविहिता गुलिका जुहुयात् शतमष्टपूर्वकं मन्त्री ।
दिवसैस्सप्तभिरिष्टौ तुष्टौ च मिथो वियोगिनौ भवतः ॥

अयमर्थः — गोमयं गुलिकीकृत्य अष्टोत्तरशतं नित्यशः सप्तदिनं जुहुयात् । तस्मादिष्टयोः साध्ययोः द्वयोरन्योन्यं विद्वेषणं भवति ॥

प्रयोगान्तरम् —

अस्पृष्टकुं गोमयमन्तरिक्षे संगृह्य जप्त्वा त्रिसहस्रमानम् ।
यियासतां वै निखनेन्नराणां संस्तम्भनं द्वारि चमूमुखे च ॥

अयमर्थः — गोमयं तु पशोर्गुदान्निर्गत्य भूस्पर्शनात्पूर्वमेव हस्तेन त्वस्पृष्ट्वा पात्रान्तरे संगृह्य त्रिसहस्रसंख्यं शूलिनीं जप्त्वा कलहरूपेण समागतानां नराणां मार्गे वा तद्द्वारि वा स्वद्वारि वा निखनेत् । तस्मात्तस्य स्तम्भनं भवति ॥ अथवा सेनाया आगतिमार्गे स्थापयेत् । तस्मात्सेनास्तम्भनं भवति ॥

प्रयोगान्तरम् —

पानीयान्धःपाणिमार्यां प्रसन्नां ध्यात्वा ग्रामं वा पुरं वाभिगच्छेत् ।
जप्त्वा मन्त्रं तर्पयित्वा प्रविष्टो मृष्टं भोज्यं प्राप्नुयात् भृत्यवर्गैः ॥

अयमर्थः — अन्नजलहस्तां दुर्गां ध्यात्वा तर्पणं च कृत्वा यत्र क्वापि गतश्चेत् सम्पूर्णमन्नं लभते ॥

प्रयोगान्तरम् —

आर्कैर्मन्त्री त्रिमधुरयुतैरर्कसाहस्रमिध्मैः
आश्वत्थैर्वा त्वतिविशदचेतास्तिलैर्वा जुहोति ।
यानुद्दिश्यावहितमनसा तन्मये सम्यगग्नौ
ते वश्यास्स्युर्विधुरितधियो नात्र कार्यो विचारः ॥

अयमर्थः — त्रिमधुरसिक्ताभिरर्कसमिद्भिर्वा तत्सिक्ताभिरश्वत्थसमिद्भिर्वा तत्सिक्तैरेव तिलैर्वा यान् साध्यानुद्दिश्य शूलिनीविधानेन पूजितेऽग्नौ जुहुयात् ते शीघ्रं च चलधियो भूत्वा अस्य वशगा भवन्ति ॥

प्रयोगान्तरम् —

कुर्यात्प्रयोगानपि दावदुर्गाकल्पोदितान्वै मनुनामुना च ।
मन्त्री जपाज्याहुतितर्पणाद्यान् नाल्पोपि मन्वोरनयोर्विशेषः ॥

अयमर्थः — वनदुर्गाकल्पे जपहोमादि यदुक्तं तत्सर्वमनेन शूलिनी-मन्त्रेणापि कुर्यात् ॥ तस्मात्तत्फलं भवति ॥ तत्र हेतुमाह — अनयोश्शूलिनी-वनदुर्गामन्त्रयोः कश्चिदपि विशेषो नास्ति ॥

इति प्रपञ्चसारसारसंग्रहे गीर्वाणेन्द्रविरचिते
त्रयोदशः पटलः ॥



## ॥ अथ चतुर्दशः पटलः ॥

अथ शूलिनीमन्त्रप्रसङ्गात् आकाशभैरवकल्पोक्तं शूलिनीयन्त्रमप्यत्र योग्यतावशाल्लिख्यते --

त्रिपञ्चकोष्ठेषु विलिख्य शूलिनीं मध्ये च साध्याङ्कितमध्यबीजम् ।
रेखाशिरःकल्पितशूलयुक्तं यन्त्रं महत् घोरपिशाचहारि ॥

अयमर्थः -- प्रथमं दक्षिणोत्तरतः रेखाद्वयं विलिख्य पुनस्तस्य पश्चिमे च दक्षिणोत्तरतः रेखाद्वयं विलिखेत् । पुनर्दक्षिणाग्रयोः रेखात्रयं पूर्वपश्चिमतो विलिख्य, पुनस्तयोरेवोत्तराग्रयोरपि पूर्वपश्चिमतो रेखात्रयं विलिखेत् ॥ एवं विलिखिते पञ्चदश कोष्ठानि भवन्ति । तेषु कोष्ठेष्वैशान्यमारभ्य शूलिनी-मन्त्रस्यैकैकमक्षरं विलिख्य, मध्यकोष्ठे दुकारं सबिन्दुकं च भुवनेशी-मध्यस्थितसाध्यनाम च विलिखेत् ॥ रेखाग्रेषु शूलिनि विलिखेत् ॥ एतद्यन्त्र-मतीव रक्षाकरम् ॥

अथाकाशभैरवकल्पे शरभसाळुवपक्षिराजकल्पे शूलिनीविधाने प्रोक्तः प्रयोगविशेषोप्यत्र योग्यतावशात् लिख्यते —

ब्रह्मा ऋषिः । गायत्रीछन्दः । शूलिनी दुर्गा देवता । दुं बीजम् । स्वाहा शक्तिः । प्रणवादिशूलिनी मन्त्रः ।

जपेत् षोडशसाहस्रं विधिपूर्वं जितेन्द्रियः ।
दशांशं तर्पयेत्पश्चात् दशांशं होमयेत्ततः ॥

त्रिकोणं कल्पयेत्कुण्डं अथात्माभिमुखाग्रकम् ।
स्वस्वसूत्रविधानेन कुर्याद्धोमं वरानने ॥

शुक्रवारे तथा सौम्ये सौम्यहोमं समाचरेत् ।
कुजवारे तथाष्टम्यां क्रूरहोमं विशेषतः ॥

पायसं च तिलापूपे घृतं मधु तथा दधि ।
क्षीरं गुळं च कदळीं तिलतैलं फलत्रयम् ॥

मुद्गसर्षपयष्टीश्च कुर्यादेकैकशः क्रमात् ।
दक्षिणाभ्यङ्गपूर्वं तु कारयेत् द्विजभोजनम् ॥ इति ॥

एतैरुक्तैर्द्रव्यैस्सर्वैः संभूय शतांशविभागेन पुरश्चरणाहोमं कुर्यात् ॥

अथ पूजायन्त्रम् —

त्रिकोणं विलिखेत्पूर्वं तद्बहिर्वृत्तमालिखेत् ।
तद्बहिर्वसुपत्राब्जं पुटीकृतमहीपुरम् ॥

भूपुरद्वन्द्वबाह्ये तु षट्कोणं विलिखेत्ततः ।
कोणाग्रे शूलमालिख्य तद्बाह्ये पृथिवीं लिखेत् ॥

अनुलोमविलोमाभ्यां बहिः प्रणवमालिखेत् ।
पूर्वे त्वैंकारमालिख्य दक्षिणे मन्मथाक्षरम् ॥

श्रींकारं पश्चिमे भागे मायाबीजं तथोत्तरे ।
त्रिकोणमध्ये देवीं तां ज्वालामालां विभावयेत् ॥

अस्यार्थः — प्रथमं त्रिकोणं विलिख्य तद्बहिरष्टपत्रं पद्मं विलिख्य तद्बहिः भूपुरद्वन्द्वं पुटीकृत्य विलिख्य तद्बहिष्षट्कोणं विलिख्य तत्कोणाग्रेषु शूलमालिख्य तद्बहिश्चतुरश्रं विलिख्य तद्बहिरनुलोमविलोमेन प्रणवेन संवेष्ट्य तद्बहिः पूर्वभागे वाग्भवं दक्षिणे कामबीजं पश्चिमे श्रींकारं उत्तरे भुवनेशीं विलिखेदिति ॥

वश्याकर्षणयो रक्ता श्यामा स्तम्भविरोधयोः ।
निग्रहोच्चाटयोः कृष्णा श्वेता मोक्षापरोक्षयोः ॥

सारस्वतप्रयोगे तु मुक्ता धवळरूपिणी ।
एवं ध्यात्वा जपेद्दुर्गां शूलिनीं सर्वसिद्धये ॥

तरसाऽशेषसिद्धिः स्यात्संहृतिस्तु विशेषतः ।

यन्त्रान्तरम् –

मध्ये शक्तिं वसुदळलसत्शूलिनीवर्णयुग्मं
किञ्जल्कोद्यन्महिषमथिनीमन्त्रवर्णं बहिश्च ।
त्रिष्टुप्दुर्गालिपिपरिवृतं भूपुराश्रान्तरस्थं
दुर्गाबीजन्त्वभिधमभितश्शूलिनीयन्त्रमेतत् ॥

अस्यार्थः – प्रथममष्टपत्रं विलिख्य तन्मध्ये भुवनेशीं दळमध्ये शूलिनीवर्णद्वन्द्वं विलिख्य केसरेषु [1] महिषमर्दिनि स्वाहा इति मन्त्रं विलिख्य तद्बहिः त्रिष्टुभा संवेष्ट्य तद्बहिश्चतुरश्रं विलिख्य तस्य कोणेषु दुर्गाबीजं दुमिति पार्श्वयोः साध्यनाम च विलिखेदिति ॥

सवातवृत्तं ऋतुकोणकोणे लक्ष्मीं च मायामथ तारसाध्यम् ।
आराध्य यन्त्रं प्रजपेत्सहस्रं आकर्षणं स्यात्तु चराचराणाम् ॥

यक्षगन्धर्वसिद्धादिदेवान्देवस्त्रियस्तथा ।
आकर्षति महाभूतान् किमु भूलोकवासिनः ॥

अस्यार्थः –– प्रथमं षट्कोणं प्रागग्रत्रितये श्रीबीजं इतरत्रितये भुवनेशीं,

---

१. महिषमर्दिनी इति ग, घ, ङ मातृकापाठः ।

कर्णिकायां तारं च विलिख्य, तस्मिन्साध्यनाम विलिख्य, वायुबीजेन बहिर्वेष्टयेत् । इति ॥

अस्य मन्त्रस्य मालामन्त्रस्तु--ओं नमो भगवति दिग्बन्धनाय कंकालि कालरात्रि दुं दुर्गे शुं शूलिनि वं वटुकभैरवि अर्धरात्रविलासिनि महानिशि प्रतापकेलिनि महाज्ञाधरि सर्वभूतप्रेतपिशाचसर्वज्वरशान्तिनि मदभीष्टमाकर्षय महावटुकभैरवि हुंफट् स्वाहा ॥ ओं नमो भगवति रुद्रकाळि काळकूटमोहिनि ऐं क्लीं ह्रीं इष्टकाम्यार्थसिद्धिप्रदायिनि सकलज्ञापिनि संक्रामिणि ब्राह्मि माहेश्वरि कौमारि वैष्णवि वाराहि महेन्द्राणि चामुण्डि वटुकभैरवेश्वरि आकर्षयाकर्षय आवेशयावेशय देवदत्तदेहं प्रवेशय प्रवेशय केलय केलय भाषय भाषय ह्रीं क्लीं ऐं हन हन सप्तमातृके हुंफट् स्वाहा । इति द्वाभ्यां जपेद्यन्त्रम् ॥

यन्त्रान्तरम् —

क्लींकारं वृत्तमध्ये तदनु वसुदळे शक्तिलक्ष्मी लिखित्वा
बाह्ये भूकोणयुग्मे दिशिदिशि मदनं तद्बहिस्तारसाध्यम् ।
लोहे ताम्रे तु पूज्यप्रयतनरवरस्तत्सहस्रं जपित्वा
खन्याद्यन्त्रं नळिन्यां मधु कमलयुतं होमकं कर्म कुर्यात् ॥

ततस्त्वादाय तद्भस्म तस्मिन्यन्त्रं विलिख्य तु ।
संपूज्य विधिवद्देवीं सहस्रं प्रजपेत्ततः ॥

तद्भस्म रोचनागन्धकुंकुमेन ललाटके ।
तिलकं मन्त्रविकुर्यात् सर्वलोकवशंकरम् ॥

अस्यार्थः — प्रथमं वृत्तमध्ये कामबीजं ससाध्यं विलिख्य, तद्बहिरष्टदळं पद्मं तत्र प्रागादिदळेषु भुवनेशीमाग्नेयादिषु श्रीबीजं च

विलिख्य तद्बहिरष्टकोणं विलिख्य कोणेषु कामबीजं विलिख्य तद्बहिस्तारेण संवेष्ट्य तस्मिन्साध्यनाम विलिखेत् इति ॥

अस्य मालामन्त्रः — ॐ नमो भगवति क्षांक्षांररररहुंलंवं वटुकेशि एह्येहि संहर संहर महाकालि पतिमानसनिवासिनि परे शत्रून्नाशय नाशय शोषय शोषय नरभूतप्रेतपिशाचादिसर्वग्रहान्नाशय नाशय दह दह पच पच सर्वस्त्रीपुरुषवशंकरि सर्वलोकवशंकरि तद्वशं भ्रंशय मद्वशमानय स्वाहा ॥ अनेन यन्त्रं जपेत् ॥

यन्त्रान्तरम् —

त्रिकोणकोणेष्वथ वह्निबीजं बाह्ये तु वृत्तं परितो धरण्याः ।
कोणेषु धात्रीमभितोऽथ तारं साध्यावृतं स्तम्भनयन्त्रमेतत् ॥

लोहेऽथ ताम्रे फलके विषद्रोः संलिख्य यन्त्रं परिपूज्य जप्त्वा ।
सहस्रवारं प्रयतो मनीषी खनेत् क्षपायां रिपुदिङ्मुखस्सन् ॥

सभाकूटे रिपोश्छत्रे(ःक्षेत्रे) द्वारे तोरणमन्दिरे ।
मातृस्थानेऽथवा प्राच्यां दिशि ज्येष्ठागृहेऽथवा ॥

जिह्वास्तम्भं हनुस्तम्भं भुजपुंल्लिङ्गगुह्ययोः ।
चक्षुर्हृत्श्रवणस्तम्भं सर्वलोकेष्वपि प्रिये ॥

अस्यार्थः -- तत्र धरण्याः कोणेषु भूबीजं भूपुरपार्श्वयोः तारं विलिखेदिति ॥

सबिन्दुकं पावकदीर्घबीजं बाह्ये सलग्नाक्षरराशिकोष्ठम् ।
प्रत्येकरेखात्रिशिखं ससाध्यं विद्वेषणं क्षोभकरं तदेतत् ॥

एतत्समाराध्य जपेत्सहस्रं कृत्वा निशायां रिपुके श्मशाने ।
पुनर्जपेदेवमथो द्विषन्तश्चान्योन्ययुद्धान्मरणं प्रयान्ति ।
दशाहमेवं प्रजपेद्रिपूणां कुलक्षयाय प्रलयाय मन्त्री ॥

अस्यार्थः — मध्ये सदीर्घमग्निबीजं विलिख्य तद्बाह्ये मन्त्रवर्णैः संवेष्ट्य, तद्बहिः राशिकोणं विलिख्य तद्रेखाग्रेषु शूलमालिख्य तेषु शूलेषु साध्यनाम विलिखेदिति ॥ अथवा सलग्नाक्षरमिति प्राक् सप्तमपटले राशिकोष्ठ-परीक्षोक्तक्रमेण राशिकोष्ठेषु मातृकाक्षरान् विलिखेदिति ॥

पञ्चाश्रमालिख्य तदग्रशूलं मध्ये तु वृत्तं पवनं च कोणे ।
मायाषडर्णं त्रिशिखाग्रसाध्यं तारं ततोच्चाटनयन्त्रमेतत् ॥

संपूज्य जप्त्वा विधिवत्सहस्रं खनेत् श्मशाने रिपुके तु कोष्ठे ।
शत्रुस्सबन्धुस्सगणस्सवर्गः प्रयाति देशान्तरमाशु गेहात् ॥

भवेद्विनाशो गृहमध्यगानां भूतादिचेष्टा बहुशो भवन्ति ।
स्वप्नोद्भवाः क्रूरगणोद्भवाश्च पाषाणभीषापतनं च पश्चात् ॥

अस्यार्थः — वायुबीजं मध्ये ह्रीं फडिति कोणेषु शूलाग्रेषु साध्यनाम बहिः प्रणवेन वेष्टयेदिति ॥

त्रिकोणं विलिखेत्पूर्वं पञ्चकोणं ततः परम् ।
वसुकोणं ततः पश्चात् ऋतुकोणं [1] ततः परम् ॥

भूकोणत्रितयं बाह्ये लिखेद्यन्त्रं महोज्वलम् ।
तारसाध्यं त्रिकोणान्तः वह्निबीजेन योजयेत् ॥

---

१ बहिस्तथा इति ग, घ, ङ मातृकापाठः ।

पञ्चारेषु ठकारान्तः विलिखेत्साध्यमारुतम् ।
बहिरष्टसु कोणेषु साध्यचिन्तामणिं लिखेत् ॥

ततष्षट्कोणकोणेषु झण्डीशं साध्यसंयुतम् ।
चतुष्कोणे देवदत्तं मारयेति पृथक् पृथक् ॥

लोहे संलिख्य तत्कृष्णपुष्पेणाभ्यर्च्य पूजयेत् ।
अष्टोत्तरसहस्रं तु स्पृष्ट्वा जप्त्वा जितेन्द्रियः ॥

पर्व आरभ्य पर्वान्ते निशायां दक्षिणादिशि ।
दक्षिणाभिमुखो मन्त्री खनित्वा बलिपूर्वकम् ॥

पुनः स्नात्वा जपेन्मन्त्रं अष्टोत्तरसहस्रकम् ।
तत्पक्षाद्रिपवस्सर्वे प्रयान्त्यव्याजमारणम् ॥

अथवा साध्यवृक्षस्य समिन्मधुघृतान्वितम् ।
तिलसर्षपसंयुक्तं कुर्याद्धोमं यथाविधि ॥

मन्त्रान्ते साध्यमारोप्य मारयेति हुनेत् शिवे ।
सप्ताहान्मरणं यान्ति शत्रवो नैव संशयः ॥

अस्यार्थः — त्रिकोणमध्ये प्रणवस्यान्तः साध्यनाम विलिख्य बहिर्बीजेन वेष्टयेत् । पञ्चकोणेषु ठकारस्यान्तः वायुबीजं, तदन्तः साध्यनाम अष्टकोणेषु प्रसिद्धचिन्तामणिमुपरिवक्ष्यमाणमन्तस्साध्यं पुनष्षट्कोणेषु एकादशस्वराक्षरं विलिखेदिति ॥ ह्रीं श्रीं दुं देवदत्तराजरूपेण ज्वल ज्वल देवदत्त शत्रुविशेषसंहार शूलिनि देवदत्त हुंफट् स्वाहा ॥

सर्वसंहारमन्त्रोयं शत्रूणां गर्वशान्तिदः ।
सर्वलोकैकविजयः साधकाभीष्टसिध्दिदः ॥

अनेनैव विधानेन यः करोति प्रयोगकम् ।
स सर्वजिद्भवेन्मन्त्री संशयो नास्ति तत्वतः ॥

एवं पुनर्जपेत्पक्षं शत्रुग्रामस्य नाशने ।
देशस्वनाशने चैव लोकक्षोभाय पीडने ॥

दुं ज्वालामालिनि विद्महे महाशूलिनि धीमहि । तन्नो दुर्गः (र्गिः) प्रचोदयात् ॥

महादुर्गास्त्रमन्त्रोयं महादुरितनाशनः ।
निग्रहानुग्रहकरो निखिलाभीष्टदायकः ॥

नानाप्रयोगभेदेषु मूलं जप्त्वा विधानतः ।
सिध्यर्थमस्त्रमन्त्रेण मिश्रितं प्रजपेत्पुनः ॥

सन्तानयन्त्रमाह —

बिन्दौ लक्ष्मीं हुतवहपुटे मारगायत्रिवर्णान्
मायां सन्धौ स्वरदळलसच्छूलिनीमन्त्रवर्णान् ।
भूमौ लक्ष्मीं तदनु लिपिभिः वेष्टितं साध्यभेदैः
सत्सन्तानप्रदमघहरं विश्वसौभाग्ययन्त्रम् ॥

अवन्ध्यानां कुलस्त्रीणामाशु सन्तानसिद्धये ।
यन्त्रमाराध्य पश्चाहं बन्धयेन्मन्त्रवित्तमः ॥

अयमर्थः — प्रथमं षट्कोणं पुनष्षोडशदळं पश्चाद्भूपुरं, पुनष्षट्कोणमध्ये बिन्दुं, तदन्तः श्रीबीजं, षट्कोणकोणेषु कामदेवायेत्यादिमारगायत्रिवर्णान्, षट्कोणकपोलेषु मायाबीजं ह्रीं इति, पुनष्षोडशदळमध्ये शूलिनी(मन्त्र)वर्णान्, चतुरश्रकोणेषु श्रीबीजं, तद्बहिर्मातृकावर्णैः साध्यपुटितैर्वेष्टयेदिति ॥

मध्ये मायां हुतवहपुटे शक्तिषट्कं सचन्द्रं
नागाग्रे मां स्वरदळगृहे शूलिनीमन्त्रवर्णम् ।
नामावीतं मणिलिपिवृतं काककाका(कन्या)ख्यवन्ध्या-
सत्सन्तानप्रदमघमुखाशेषदुष्टाहिताक्ष्यम् ॥

अयमर्थः—प्रथमं षट्कोणं, तदन्तः भुवनेशीं षट्सु कोणेष्वपि भुवनेशीं ठकारावृतां, तद्बहिरष्टदळं, तदन्तः श्रीबीजं, तद्बहिः षोडशदळं, तेषु मन्त्रवर्णान् विलिख्य, तद्बहिर्वृत्तद्वयं विलिख्य, प्रथमे वृत्ते साध्यनामाक्षरैर्वेष्टयेत् । द्वितीये उपरि सप्तविंशतिपटले वक्ष्यमाणार्धनारीश्वरचिन्तामणि-बीजेनावृत्या वेष्टयेत् ॥

हुंकारं वृत्तमध्ये पवनसखपुटे पावकोच्चाटबीजं
फट्कारं चार्कपत्रे सकलितभुवनोच्चाटवर्णं स्वराग्रे ।
मूलं मायाभिवीतं सहमरुदखिलं पावकं सर्वसन्धौ
भूतप्रेताहिदुष्टग्रहगणदुरितोच्चाटसंहारयन्त्रम् ॥

समस्तानां च वन्ध्यानां सत्सन्तानस्य सिध्द्ये ।
तत्तद्यन्त्रेण चैतच्च समाराध्य पटान्तरे ॥

तत्तद्यन्त्रार्थसिध्द्यै च तत्तद्दुरितशान्तये ।
जप्त्वा मन्त्री त्रिसाहस्रं बन्धयेत्सावधानतः ॥

निग्रहानुग्रहाभ्यां यः कर्मभ्यां सर्वयोषिताम् ।
संस्कृत्य बन्धयेद्रक्षां सद्यस्सर्वार्थसिद्धये ॥

अयमर्थः— प्रथमं षट्कोणं तदन्तर्वृत्तं तदन्तः हुमिति षट्कोणेषु वमिति वरुणबीजं अथवा अग्निबीजं च वायुबीजं च विलिखेत् । अथवा रः इति पावकस्य उच्चाटबीजं विलिखेत् ॥ पुनः द्वादशदळेषु फट् इति तद्बहिः

षोडशवारं विलिख्य तन्मध्ये ससाध्यं भुवनेश्या उच्चाटवर्णं हूः इति पुनर्वृत्तत्रयं आद्ये मूलेन द्वितीये मायया तृतीये वायुना वेष्टयेत् ॥ सर्वसन्धिरेखायां वन्हिबीजं विलिखेदिति ॥

शुक्रे चन्द्रं शिखिपुटग्रहे मारषट्कं सबिन्दुं
वारीशाग्रे मणिमिनयुतं शूलिनीं षोडशारे ।
नाम्ना वीतं लिपिपरिवृतं जन्मजन्माख्यवन्ध्या-
दोषध्वान्तप्रळयखमणिं पुत्रदं शत्रुवज्रम् ॥

अयमर्थः — प्रथमं त्रिकोणं तदन्तश्चन्द्रबीजं झमिति तद्बहिष्षट्कोणं षट्कोणेषु सबिन्दुकं कामबीजं, तद्बहिरर्धचन्द्राकारवारुणपुरकोणे अर्धनारीश्वर-चिन्तामणिबीजं सप्तविंशतिपटले वक्ष्यमाणं विलिख्य, तद्बहिर्वृत्तं विलिख्य, तद्बहिः षोडशदळेषु शूलिनीमन्त्रवर्णान्विलिखेदिति ॥ तत्र शुक्र इति त्रिकोणम् । तदुक्तं च शरभभुजङ्गे —

महीनीरशुक्रानिलव्योमसोमाहरीशात्ममूर्त्यष्टभेदस्वरूपम् । इति ॥

शोचिष्केशगृहेऽब्धिकोदरमरुत्षट्कोणमारोदरे
सर्पाश्रे गगनोदरे वसुदळे सर्वंसहार्णोदरे ।
भूकोणे वरुणोदरे दिशि बहिर्नाम्नाष्टधा मारुतं
शूलिन्यङ्कितयन्त्रमेतदचिराद्गर्भादिकोच्चाटनम् ॥

त्रिलोहे* यन्त्रमालिख्य षोडशाहं सहस्रकम् ।
त्रिसाध्यैः प्रत्यहं जप्त्वा वायव्यां दिशि मन्त्रवित् ॥

कालरात्रौ खनेत्पश्चात् अदृश्यं गर्भमुद्वसेत् ।
गर्भस्योद्वासनं द्रष्टुं ब्रह्मणापि न शक्यते ॥

* यन्त्रमाराध्य इति ग, घ, ङ, मातृकापाठः ।

तस्मादिदं सुगोप्यं स्यात्कुर्याद्दृढहृदा फलम् ।
दैवयोगाद्गतं गर्भं पुनरायाति न क्वचित् ॥

अन्तर्हितस्य गर्भस्य पुनरागमनं नहि ।
तस्मात्कृतापराधायां कुर्यान्नान्यत्र मन्त्रवित् ॥

अस्यार्थः — प्रथमं त्रिकोणं तद्बहिष्षट्कोणं तद्बहिरष्टकोणं तद्बहिरष्टदळं पुनस्त्रिकोणोदरे भुवनेशीं तदन्तर्वायुबीजं तद्बहिष्षट्कोणकोणेषु कामबीजं तद्बहिरष्टकोणेषु ठमिति तद्बहिरष्टदळेषु सर्वसहार्णोदरेति सर्वसहार्णं भूबीजं ग्लौमिति विलिख्य तद्बहिश्चतुरश्रं विलिख्य तत्कोणेषु वमिति विलिखेत् ॥ त्रिकोणोक्तवदेव सर्वत्रोदरे वायुबीजं च विलिखेत् । तद्बहिरष्टदिक्षु ससाध्यार्णं वायुबीजं विलिख्य तद्बहिश्चतुरश्रं विलिख्य तद्बहिश्शूलिन्या वेष्टयेदिति ॥

चन्द्रे चन्द्रसुबीजपञ्चकमथो सप्ताश्रके मामजां
सूर्याश्रे मणिबीजमष्टदळके श्रीशूलिनीं सस्मराम् ।
साध्ये साध्यरमावृतं लिपिवृतं श्रीजन्मकाकाख्यस-
द्वन्ध्यागर्भकरं त्रिलोकदुरितक्ष्वेळज्वरौघापहम् ॥

अस्यार्थः — प्रथमं वृत्तं विलिख्य तन्मध्ये सोमिति सोमबीजं चतुर्दिक्षु मध्ये च विलिख्य, तद्बहिस्सप्तकोणं विलिख्य तेषु श्रीं ह्रीं इत्यावृत्त्या विलिखेत् ॥ तद्बहिर्द्वादशकोणं विलिख्य तेषु वक्ष्यमाणार्धनारीश्वरचिन्तामणिबीजं विलिख्य, तद्बहिरष्टदळं तेषु सकामबीजं शूलिनीमन्त्रवर्णद्वन्द्वं विलिख्यात् । बहिर्वृत्तद्वयं विलिख्य प्रथमवृत्ते श्रीबीजयुक्तसाध्याक्षरैर्वेष्टयेत् । द्वितीये मातृकया वेष्टयेदिति ॥

मध्ये मन्मथमग्निकोणविवरे चिन्तामणिं तत्पुटे
जिष्णुं चन्द्रसमन्वितं वसुगृहे श्रीशूलिनीयं मनुम् ।

इलांक्लांसूर्यसमन्वितं दशदळे साध्याखिलार्णावृतं
यन्त्रं जन्ममृताख्यवन्ध्यवनितासन्तानसौभाग्यदम् ॥

अयमर्थः — प्रथमं त्रिकोणं त्रिकोणकपोलेषु वक्ष्यमाणार्धनारीश्वरचिन्तामणिं तत्कोणेषु ठकारयुक्तं लमिति विलिख्य तद्बहिरष्टदळं विलिख्य तेषु शूलिनीवर्णद्वन्द्वं विलिख्य तद्बहिर्दशदळं विलिख्य तेषु वृत्तं विलिख्य तदन्तः श्लांक्लां इत्यावृत्त्या विलिखेत् । तद्बहिर्मातृकावर्णैः साध्यपुटितैर्वेष्टयेत् ॥

मायां चन्द्रे हुतवहगृहे कामराजं ससाध्यं
षट्कोणान्तर्वलरिपुयुतं मूलबीजं प्रभेदम् ।
आशाश्राश्रे मणिमिनयुतं शूलिनीसाध्यबाह्यं
यन्त्रं पुत्रप्रदमखिलसत्काकजन्माघवज्रम् ॥

अस्यार्थः — प्रथमं वृत्तं तन्मध्ये भुवनेशीं, तद्बहिस्त्रिकोणं तदन्तः कामबीजं, तद्बहिष्षट्कोणं, तत्कोणेषु श्रीं ह्रीं दुमिति आवृत्त्या लमिति युक्तया विलिखेत् । तद्बहिरष्टकोणं विलिख्य तत्कोणेषु चिन्तामणिबीजं कोणस्थवृत्ते विलिखेत् ॥ तद्बहिस्साध्यवर्णपुटितैश्शूलिनी(मन्त्र)वर्णैर्वेष्टयेदिति ॥ अथवा सर्वत्र चन्द्र इत्युक्ते सकारओकारबिन्दूनां कूटं वा झकाररेफबिन्दूनां कूटं झ्रमिति वा ॥ सूर्य इत्युक्ते गान्तं दहननेत्रेन्दुसहितं तदुदीरितं इत्युक्तं घ्रिमिति सूर्यबीजं विलिखेत् ॥

मध्ये भास्करमग्निकोणशशिनं षट्कोणवैश्वानरं
वस्वश्रे मणिमष्टपत्रविवरे श्रीशूलिनीं साम्बिकाम् ।
यस्ते गर्भमथेभवेदविवरे साध्याखिलार्णावृतं
यन्त्रं काकमृताख्यवन्ध्यवनितासन्तानसिद्धिप्रदम् ॥

अस्यार्थः—प्रथमं त्रिकोणं तन्मध्ये वृत्तं तत्कोणेषु बिन्दुं, तद्बहिष्षट्कोणं तत्कोणेषु अग्निबीजं, तद्बहिरष्टकोणं तत्कोणेषु वक्ष्यमाणचिन्तामणिं, तद्बहिरष्टदळं

तेषु शूलिनीमन्त्राक्षरद्वन्द्वं भुवनेश्या सह विलिख्य, तद्बहिर्द्वात्रिंशद्दळं विलिख्य तेषु यस्ते गर्भमित्यक्षराणि विलिखेत्। तद्बहिः साध्यपुटितमातृकावर्णैः वेष्टयेदिति ॥

शिखिमध्यचन्द्रं शिखिलक्ष्मसूर्यं
शिखियुग्ममारं क्षितियुग्मरत्नम्।
वसुपत्रमन्त्रं स्मरनामबाह्यं
मृतजन्मवन्ध्यासुतदं प्रशस्तम् ॥

अस्यार्थः--प्रथमं त्रिकोणं तन्मध्ये बिन्दुं तत्कोणेषु वृत्तं, तद्बहिष्षट्कोणं तत्कोणेषु कामबीजं, तद्बहिरष्टकोणं तत्कोणेषु उपरि वक्ष्यमाणचिन्तामणिबीजं, तद्बहिरष्टदळं तेषु मूलवर्णद्वन्द्वं, तद्बहिस्साध्यपुटितेन कामबीजेनावृत्त्या वेष्टयेत् ॥ इति। मृतजन्मवन्ध्या इति मृतवन्ध्याया जन्मवन्ध्यायाश्चेत्यर्थः ॥

शशिरत्नलक्ष्मीं शिखिकाममायां
ऋतुभानुवह्निं वसुशूलिनीयम्।
परितोऽखिलार्णं मणिनामबाह्यं
मृतकाकवन्ध्या सुतदं त्वमोघम् ॥

अस्यार्थः — प्रथमं बिन्दुं तन्मध्ये चिन्तामणिं, तन्मध्ये श्रीबीजं, तद्बहिस्त्रिकोणं, तत्कोणेषु कामबीजं भुवनेशीं च, तद्बहिष्षट्कोणं विलिख्य तत्कोणेषु वृत्तं मध्ये अग्निबीजं विलिखेत् ॥ तद्बहिरष्टदळं तेषु मूलवर्णद्वन्द्वं तद्बहिः वृत्तद्वयं प्रथमे मातृकया द्वितीये साध्यपुटितेन चिन्तामणिबीजेनावृत्त्या वेष्टयेत् ॥ मृतकाकवन्ध्येति मृतवन्ध्यायाश्च काकवन्ध्यायाश्चेत्यर्थः ॥

हुतवहरसकीले रत्नचन्द्रार्कवह्नीन्
स्मरयुतमखिलार्णं शूलिनीं षोडशारे।

स्मरमणिलिपिवीतं साध्यपूर्णं वधूनां
जनिमृतसुतवन्ध्यापुत्रसंजीवनं तत् ॥

अस्यार्थः — प्रथमं त्रिकोणं तत्कोणेषु चिन्तामणिचन्द्रार्कवह्निबीजानि *क्ष्म्रयौं झं ग्रिं रं इत्येतानि तद्बहिः षट्कोणं तत्कोणेषु च तथा तद्बहिरष्टकोणं तेषु च तथा, तद्बहिः कामपुटितमातृकावर्णैः वेष्टयेत् । तद्बहिष्षोडशदळं तेषु शूलिन्येकैकाक्षरं विलिख्य, तद्बहिर्वृत्तत्रयं विलिख्य प्रथमे वृत्ते कामबीजेनावृत्त्या द्वितीये चिन्तामणिबीजेन, तृतीये साध्याक्षरैर्वेष्टयेत् ॥

मामायास्मररत्नबीजसुषिरं प्लूंकारवैश्वानरं
प्लूंकाराङ्कितकोणषट्कमनुमां श्रीशूलिनीभाश्रकम् ।
यस्ते हन्ति ऋचं खगाश्रविवरे रत्नाङ्कविश्वान्तरं
यन्त्रं जन्ममृताख्यवन्ध्यवनितासन्तानसिद्धिप्रदम् ॥

अस्यार्थः — प्रथमं वृत्तं तस्मिन् श्रीं ह्रीं क्लीं क्ष्म्रयौंऊं इति विलिख्य तद्बहिस्त्रिकोणं तत्कोणेषु प्लूंकारं विलिख्य तद्बहिः षट्कोणं तत्कोणेषु प्लूंकारं श्रीबीजं च विलिख्य तद्बहिरष्टकोणं तेषु शूलिन्यक्षरद्वन्द्वं विलिख्य तद्बहिः द्वात्रिंशद्दळं विलिख्य तेषु यस्ते हन्तीत्यृगक्षराणि विलिखेत् ॥ तद्बहिश्चतुरश्रं, तत्कोणेषु चिन्तामणिबीजं विलिखेत् । जन्ममृताख्यवन्ध्या जन्माख्यवन्ध्या मृताख्यवन्ध्या चेत्यर्थः ॥

एतानि दिव्ययन्त्राणि सद्यस्सिद्धिप्रदानि वै ।
जन्मकाकमृताख्यानां दिगिनेन्दुदिनक्रमात् ॥

अष्टद्वादशषोडशदिनक्रमादित्यर्थः ॥

साङ्गं द्विसन्ध्यमाराध्य जप्त्वा यन्त्राणि संस्पृशन् ।

---

* क्ष्म्रयौंऊं झ्रं ग्रिं इति, ग, घ, ङ, मातृकापाठः ।

भस्मनापि च सर्वाङ्गं द्विसन्ध्यमभिषिच्य च ॥

प्राशयित्वाऽभिमन्त्र्याज्यं उपदिश्य फलव्रतम् ।
बन्धयेद्योषितां रक्षां सद्यस्सन्तानसिद्धये ॥

सावधानकृतं कर्म सद्यः फलति योषिताम् ।
तस्मादेतानि कर्माणि साधयेत्सावधानतः ॥

चन्द्रे कामं सपद्मां ऋतुगृहविवरे बीजयुग्मस्य षट्कं
वस्वश्रे रत्नवर्णं स्वरदळकमले शूलिनीमन्त्रवर्णम् ।
भूमौ मायां सकामां सकललिपिवृतां साध्यनामार्णबाह्यं
यन्त्रं स्त्रीजन्मवन्ध्यातनयकरमिदं पुष्टितुष्टिप्रदं च ॥

अस्यार्थः — प्रथमं षट्कोणं तन्मध्ये वृत्तं तन्मध्ये कामबीजं श्रीबीजं च षट्सु कोणेष्वपि कामबीजं च श्रीबीजं च विलिख्य तद्बहिरष्टकोणं तत्कोणेषु चिन्तामणिबीजं, तद्बहिः षोडशदळेषु शूलिनीमन्त्रस्यैकैकमक्षरं तद्बहिश्चतुरश्रं तदन्तः भुवनेशीं कामबीजं च तद्बहिर्मातृकया संवेष्टय तद्बहिः साध्याक्षरैर्वेष्टयेत् ॥

यन्त्रमेतदिदं गुह्यं अमोघं पुष्टिवर्धनम् ।
तुष्टिदं जन्मवन्ध्यानां सहसा पुत्रसिद्धिदम् ॥

दशाहं नित्यमाराध्य द्विसन्ध्यं साध्यसंयुतम् ।
सहस्रं मन्त्रहुत्या च बन्धयेत्पुत्रसिद्धये ॥ इति ॥

मायां कामं हुताशं रविशशिसहितं वृत्तमध्ये षडश्रे
पद्मां वायुं सरत्नं दशदळविवरे कामसूर्याग्निकार्णम् ।
बाह्ये तारेशपत्रे मनुमिनसहितं भूपुरे साध्यकामं
यन्त्रं दिव्यं समस्तग्रहदुरितहरं काकवन्ध्यादि तार्क्ष्यम् ॥

अस्यार्थः — प्रथमं षट्कोणं तदन्तः वृत्तत्रयं तदन्तः भुवनेशीकाम-बीजाग्निबीजानि विलिखेत् । षट्सु कोणेषु श्रीबीजवायुबीजचिन्तामणि-बीजत्रयं विलिख्य तद्बहिर्दशदळं तेषु वृत्तं तन्मध्ये कामबीजं च (सूर्यबीजं च) भुवनेशीं च विलिख्य तद्बहिः षोडशपत्रं तेषु वृत्तं तन्मध्ये (सूर्य-बीजेन सह) शूलिनीमन्त्रवर्णान्, तद्बहिश्चतुरश्रं तत्कोणेषु कामबीजं साध्ययुतं विलिखेत् ॥ अत्र पट्टादिविशेषानाह ॥

सीसेयसि हिरण्ये वा यन्त्रमालिख्य मन्त्रवित् ।
द्वादशाहं समाराध्य सर्वाङ्गमभिमन्त्र्य च ॥

अभिषिच्योचितैर्हुत्वा संपाताज्याभिमर्शनम् ।
कृत्वाष्टोत्तरशतकं प्राशयित्वा तु वासरम् ॥

बन्धयेन्मन्त्रविद्रक्षां काकबन्ध्यासुताप्तये ।

युगबिन्दौ रविवारुणौ पुरषट्के रविपावकौ
वसुपत्रे स्मरमारुतौ रविपत्रे वसुधाम्बरे ।
कमलाब्जे वरशूलिनीं स्मरमायाकमलावृतं
कलितैस्सत्सुतदायकं मृतवन्ध्यादुरितापहम् ॥

अस्यार्थः — प्रथमं वृत्तद्वयं विलिख्य तदन्तश्च एकं वृत्तं विलिख्य, तदन्तः (मायया) वरुणबीजं विलिखेत् । तद्बहिः षट्कोणं तत्कोणेषु वृत्तं तेषु अग्निबीजं तद्बहिरष्टदळं तेषु कामबीजं वायुबीजं च विलिखेत् । तद्बहिर्द्वादशदळं तेषु श्रीबीजमिळितान् शूलिनीमन्त्रवर्णान् तद्बहिः कामबीजभुवनेशीश्रीबीजैरावृत्त्या साध्यवर्णमिळितैर्वेष्टयेत् ॥ इति ॥

अत्रापि कर्तव्यविशेषमाह —

पञ्चलोहे त्रिलोहे वा ताम्रे सीसेऽथवाऽऽयसे ।
आलिख्य यन्त्रमाराध्य शूलिनीमिष्टदायिनीम् ॥

षोडशाहं दिनं मन्त्र्य सहस्रं मायया सह ।
तैलाभिषेकहोमाज्यभस्माख्यैः पञ्चकर्मभिः ॥

शुद्धायां बन्धयेद्रक्षां सहसा पुत्रसिद्धये ।

षट्त्रिंशत्कोष्ठकोष्ठे निगमशिखिगृहे रत्नधामूलमन्त्रं
मायापूर्वं दरात्मलिशिखकलनकं कर्मसु व्याप्तवह्नि ।
मायाक्षार्णादिवाह्यं निखिलरिपुमनोगर्वनिर्वापणैक-
प्रौढं श्रीशूलिनीयं प्रणतभयहरं सर्वसंहारयन्त्रम् ॥

भस्मन्येतत्समालिख्य सावधानं सलक्षणम् ।
आराध्य परया भक्त्या निग्रहोक्तविधानतः ॥

मायान्ते त्विष्टरूपेण नाम्ना संहारशूलिनी ।
वैरिणो नाम तत्पश्चात् वर्माद्यन्तं क्रमेण तु ॥

उद्धृत्य विधिवन्मन्त्रं सावधानेन चेतसा ।
अर्धरात्रौ जपेन्मन्त्रं सहस्रं रिपुदिङ्मुखः ॥

सहसा सैव तद्रूपा संहरत्यरिमाशिवम् ।
अनया वर्धिता कृत्या ब्रह्मगाप्यनिवारिणी ॥

तस्मान्मन्त्री तु शुद्धात्मा सर्वत्राशु न योजयेत् ।
यया तु बाधया बाधुं इच्छत्यरिरनन्यधीः ॥

तया संपीड्यमानात्मा शत्रुः क्षयमवाप्नुयात् ।

अस्यार्थः—प्रथमं पूर्वपश्चिमतः सप्तरेखा विलिख्य, तदुपरि दक्षिणोत्तरतश्च सप्त रेखा विलिख्य(खेत्)। एवं विलिखिते षट्त्रिंशत्कोष्ठानि जायन्ते। तेषु कोष्ठेषु प्रतिकोष्ठं त्रिकोणचतुष्टयं विलिखेत्॥ अस्त्यत्रोपदेशः॥ तत्त-चतुरश्राकारकोष्ठेषु अग्निकोणमारभ्य वायुकोणावधि कांचिद्रेखां, तथैव ईशकोण-मारभ्य निर्ऋतिकोणपर्यन्तं काश्चिद्रेखां, विलिखेत्॥ एवं विलिखिते तत्र तत्र त्रिकोणचतुष्टयं जायते। तेषु त्रिकोणेषु मायापूर्वकशूलिनीषोडशार्णं प्रति-त्रिकोणं एकैकमक्षरं विलिखेत्। एवं विलिखिते शूलिनीमन्त्रस्य नवावृत्ति-र्जायते। त्रिकोणाग्रसन्धिषु प्रत्येकं वह्निबीजं विलिखेत्। संभूय षट्त्रिंश-दनलबीजानि जायन्ते। तद्बहिः प्रत्यक्षरं मायासहितमातृकावर्णैः प्रतिलोमेन वेष्टयेत्॥ रेखाग्रेषु अष्टाविंशत् शूलानि विलिखेत्॥ ह्रीं व्याघ्ररूपेण संहार-शूलिनि देवदत्तं हुंफट् स्वाहा॥ तत्र व्याघ्र इति सर्पादीनामुपलक्षणम्॥

ऊर्ध्वं तिर्यक् च कोष्ठे प्रतिभवनलसद्वह्निवैश्वानरान्तं
मायातारोदरोद्यद्विधिमुखलिपिभिर्मूलवर्णैः क्रमेण।
पङ्क्तौ पङ्क्तौ तु विंशत्रिशिखपरिलसन्नाममर्मस्वजार्णं
चोरक्ष्मेशारिरोगग्रहदुरितहरं शूलिनीघोरयन्त्रम्॥

यन्त्रमेतत्समालिख्य सीसे वाऽऽयसि भस्मनि।
इष्ट्वा जपेत् त्रिसाहस्रं मन्त्री साध्यत्रयान्वितम्॥

दिवानिशमविच्छिन्नदीपद्वितयसन्निधौ।
सप्ताहं मन्त्रय वै नित्यं सहस्रं सर्वशान्तये॥

क्षीरमध्ये विनिक्षिप्य सहस्रं प्रजपेत्स्पृशन्।
तरसा पञ्चबाधेभ्यो मुच्यते नात्र संशयः॥

अस्यार्थः—प्रथमं पूर्वपश्चिमतः षड्रेखा विलिख्य, तथैव दक्षिणोत्तरतश्च षड्रेखा विलिखेत्। एवं विलिखिते पञ्चविंशतिकोष्ठानि भवन्ति। तेषु

कोष्ठेषु प्रतिकोष्ठं त्रिकोणचतुष्टयं विलिखेत्। तेषु त्रिकोणेषु मायाबीजोदरे प्रणवं विलिख्य तस्योदरे पुनः पञ्चब्रह्मबीजपूर्वकं शूलिनीमन्त्रपञ्चदशवर्णान् प्रथमपङ्क्तौ प्रतित्रिकोणं एकैकवर्णशो विलिखेत्॥ एवं द्वितीयतृतीयचतुर्थपञ्चमपङ्क्तिषु विलिखेत्। रेखाग्रेषु शूलं शूलाग्रेषु साध्यनाम च विलिखेत्। कोष्ठमध्यत्रिकोणाग्रेषु मायाबीजं ईकारं विलिखेत्। संभूय पञ्चविंशतिमायाबीजानि भवन्ति॥ ऐं ह्रीं श्रीं क्लैं स्रौं एतानि पञ्च ब्रह्मबीजानि। श्रीं ह्रीं दुं देवदत्तदुरितशान्तिरूपेण ज्वल ज्वल देवदत्तदुरितविशेषसंहारशूलिनि देवदत्तदुरितं हुंफट् स्वाहा॥ इति साध्यत्रययुक्तो मन्त्रः॥ तत्र विधिमुखविलिपिभिरिति पञ्चब्रह्मबीजैरित्यर्थः॥ विधिमुखाः अम्बुजन्मोद्भवमुररिपुरुद्रेश्वरशिवाः, तेषां पञ्चब्रह्मात्मकत्वं पञ्चविंशे पटले प्रासादविधाने वक्ष्यति॥ एतेषां बीजानां पञ्चब्रह्मबीजतत्वं च तत्रैव अष्टत्रिंशत्कलान्यासविधाने द्योतयति॥ पञ्चबाधेति चोराद्युक्तपञ्चबाधाः॥

चातुस्त्रिंशत्रिकोणे स्वरवविहृदये शूलिनीयं द्विवारं
लक्ष्मीमायार्णपूर्वं क्षितिनिगमगृहे तारमारोदरार्णम्।
भूयो मर्मस्वनङ्गं व्रणमणिकमले पञ्चसन्धौ हुताशं
यन्त्रं साध्येन्दुबाह्ये ग्रहदुरितहरं गर्भवृद्धिप्रदं च॥

पट्टभेदे समालिख्य पश्चाहं पूज्य मन्त्रवित्।
त्रिसन्ध्यं प्रजपेन्मन्त्रं षट्त्रिंशत्त्रिशताधिकम्॥

त्रिसन्ध्यमभिषिच्याथ भस्मनामन्त्र्य सुस्थिरम्।
बन्धयेद्भूतशान्त्यै च गर्भवृध्द्यै सुखाप्तये॥

अस्यार्थः—प्रथमं दक्षिणोत्तरतः पञ्चांगुलिमानेन रेखाषट्कं अंगुलिमानवीथिकं विलिखेत्। तत्र मध्यमवीथिं त्र्यंगुलिमानेन विलिख्य प्रथमषष्ठरेखयोः पार्श्वद्वयमपि प्रत्येकमेकांगुलिमानं मार्जयेत्। द्वितीयपञ्चमरेखयोः पार्श्वद्वयमपि

प्रत्येकमर्धांगुलिमानं मार्जयेत् । एवं मार्जनं कृत्वा प्रथमवीथ्यां प्रथमरेखामारभ्य द्वितीयरेखासंबन्धाग्रं त्रिकोणत्रयं विलिख्य, पञ्चमरेखापार्श्वद्वयं प्रथमवीथीगतमध्यत्रिकोणे त्रिकोणाकारेण योजयेत् । चतुर्थरेखापार्श्वद्वयमपि प्रथमवीथीगतपार्श्वत्रिकोणाग्रयोरुत्तरमुत्तरे दक्षिणं दक्षिणे योजयेत् । पञ्चमवीथ्यां च षष्ठरेखामारभ्य, पञ्चमरेखासंबन्धाग्रं त्रिकोणत्रयं विलिख्य, द्वितीयरेखापार्श्वद्वयमपि पञ्चमवीथीगतमध्यत्रिकोणे त्रिकोणाकारेण योजयेत् । तृतीयरेखापार्श्वद्वयमपि पञ्चमवीधिगतदक्षिणत्रिकोणाग्रमारभ्य पञ्चमवीधिगत उत्तरत्रिकोणपर्यन्तं रेखां विलिखेत् । पार्श्वद्वयवर्तिनोस्त्रिकोणयोरग्रे उत्तरमुत्तरे दक्षिणं दक्षिणे योजयेत् । पुनः प्रथमवीधिगतउत्तरत्रिकोणाग्रमारभ्य पञ्चमवीधिगतदक्षिणत्रिकोणाग्रपर्यन्तं रेखां विलिख्य, पुनश्च प्रथमवीधिगतदक्षिणत्रिकोणाग्रमारभ्य पञ्चमवीधिगतउत्तरत्रिकोणपर्यन्तं रेखां विलिखेत् । एवं विलिखिते चतुस्त्रिंशत्त्रिकोणानि च मध्यमवीथ्यां चतुरश्रचतुष्टयं च जायते ॥

स्वररवीति रविस्वरे द्वादशस्वरे इत्यर्थः ॥ तत्र चतुस्त्रिंशत्त्रिकोणेषु रविस्वरमैकारं विलिख्य तेषु लक्ष्मीबीजमाया(बीज)पूर्वकशूलिनीमन्त्रवर्णान् प्रत्येकमेकैकमक्षरं विलिखेत् । एवं विलिखिते मन्त्रस्य द्विरावृत्तिर्भवति । मध्यमरेखाद्वयमध्यस्थचतुरश्रचतुष्टये प्रत्येकं प्रणवकामबीजलक्ष्मीबीजदुर्गाबीजानि अन्तरन्तः क्रमेण विलिख्य त्रिकोणचतुर्दशमर्मसु कामबीजं विलिख्य षड्रेखोभयपार्श्वाग्रेषु चिन्तामणिबीजं च विलिख्य मध्यचतुरश्रस्य पञ्चमसन्धिष्वग्निबीजं विलिख्य बहिर्वृत्तं विलिख्य साध्यनाम्ना आवेष्टय पुनः वृत्तं विलिखेत् ॥

दीपागाराररणाग्रौ शशिहृदिदहनस्मारमायार्णपूर्वं
एवं वेदप्रमाणं विशिखपरिलसन्निग्रहाजां ससाध्याम् ।
मर्मस्वाग्नेयमाये क्षमुखलिपिवृतं तारमायाभिवीतं
चोरक्ष्मेशोद्धृणद्धि वसुचयहरणं शूलिनीयन्त्रमेतत् ॥

अयःपट्टे समालिख्य भृङ्गराजेन पूजयेत् ।
कृष्णपाथ्यादिदर्शान्तं प्रतिवारं सहस्रकम् ॥

बीजत्रयात्ततो नानाचोररूपेण तत्परम् ।
द्विर्ज्वलैश्वर्यसंहारशूलिन्यरिवसुं ततः ॥

हुंफट् स्वाहेत्ययं मन्त्रः शत्रुस्वहरणोद्यतः ।
यस्यां दिशि खनेद्यन्त्रं तेन मार्गेण तस्कराः ॥

आगत्यारिस्वमखिलं गृह्णन्त्येवाविशंकिताः ।
कर्मभिर्बलवद्भिर्वा पालितं बलवत्तरैः ॥

शूलिनीशासनादेव नश्यत्यरिधनं स्वयम् ।
एवं गृहग्रामपुरदेशसंपत्क्षयाय वै ॥

साध्यभेदैः प्रयुञ्जीत साधकः स्थिरमानसः ।

अस्यार्थः— दीपेत्यष्टादशसंख्या । आरण इति वेदाः । तेन चतुस्संख्या । एतदुक्तं भवति ॥ दक्षिणोत्तरतः चतस्रो रेखा विलिख्य तदुपरि पूर्वपश्चिमतः सप्तरेखा विलेखनीयाः । एवं विलिखिते अष्टादश कोष्ठानि जायन्ते । तेषु कोष्ठेषु पूर्ववत् त्रिकोणचतुष्टयं विलिखेत् । तेषु त्रिकोणेषु प्रतित्रिकोणं वृत्तं विलिखेत् । तदन्तः अग्निबीजकामबीजमायाबीजपूर्वकशूलिनीमन्त्रस्य वर्णान् प्रतित्रिकोणं एकैकमक्षरं विलिखेत् । एवं विलिखिते मन्त्रस्य चतुरावृत्तिर्भवति । रेखाग्रेषु शूलं विलिखेत् ॥ प्रतिशूलमग्निबीजमायाबीजसहितसाध्यनामार्णान् क्रमेणान्तरन्तर्विलिखेत् । तत्र निग्रहेति अग्निबीजम् । पुनस्त्रिरेखादिसन्धिरूपे वर्मणि अग्निबीजं च मायाबीजं च अन्तरन्तर्विलिखेत् ॥ तद्बहिः क्षकाराद्यकारान्तमातृकया वेष्टयेत् । तद्बहिस्तारेणावृत्त्या वेष्टयेत् । तद्बहिर्मायया आवृत्त्या वेष्टयेत् ॥ श्रीं ह्रीं दुं नानाचोररूपेण ज्वल ज्वल देवदत्त ऐश्वर्य-

[1] संहारशूलिनि देवदत्तवसुहुंफट् स्वाहा ॥ इति साध्यद्वितययुक्तो मन्त्रः ॥ अनेन जपेत् ॥ यन्त्रम् —

कोष्ठे षोडशसंमिते प्रतिगृहं लिख्यारणाग्नेः पुरं
तारस्मारविधूदरे मनुमजापूर्वं मनुं मर्मसु ।
शूलाग्रेषु च साध्यनाम निखिलैर्वर्णैस्समावेष्टितं
यन्त्रं भर्तृविरोधदोषशमनं सन्तानदं योषिताम् ॥

यन्त्रमेतत्समालिख्य चन्दनादिषु वस्तुषु ।
हारिद्रे वा समालिख्य जप्त्वा नित्यं सहस्रकम् ॥

शुक्लप्रतिपदारभ्य पूर्णिमान्तं दृढव्रतः ।
बन्धयेद्योषितां कण्ठे भर्तृकोपप्रशान्तये ॥

सन्तानसिद्धये सर्वसौख्याय शुभवृद्धये ।

अस्यार्थः — पूर्वपश्चिमतः पञ्चरेखा दक्षिणोत्तरतः पञ्च रेखा विलेखनीयाः । एवं विलिखिते षोडश कोष्ठानि जायन्ते । तेषु कोष्ठेषु प्रतिकोष्ठं त्रिकोणचतुष्टयं विलिखेत् ॥ तेषु त्रिकोणेषु प्रतिकोणं प्रणवं च कामबीजं च वृत्तं च अन्तरन्तर्विलिख्य, वृत्तमध्ये मायापूर्वकशूलिनीमन्त्रवर्णान् एकैकशो वा विलिखेत् । एवं विलिखिते मन्त्रस्य चतुरावृत्तिर्भवति । तस्य मर्मसु चिन्तामणिबीजं विलिखेत् । रेखाग्रेषु शूलं विलिखेत् । प्रतिशूलं साध्यनामार्णान्विलिखेत् । तद्बहिर्मातृकावर्णैर्वेष्टयेत् । तस्मादुक्तफलं भवति ॥

येकारं वृत्तमध्ये निगमसमदळे दंपतीशेति बाग्रात्
वृत्ताद्बाह्ये दशारे स्मरमणिसहितं यस्त ऊर्वादिरान्तम् ।
योनिं यो अन्तरारेत्यमृतकरदळे शूलिनीयुक्तबाह्ये
साध्यं नानावधूनां तनयदमतुलं स्वप्नभोगार्तिवज्रम् ॥

---

१ संहारशूलिनी इति ग, घ मातृकापाठः ।

अस्यार्थः — प्रथमं चतुर्दळं पद्मं विलिख्य, तत्कर्णिकायां यस्त ऊरू विहरत्यन्तरा इत्यृचः प्रथमपादान्त्याक्षरं यैकारं विलिख्य, चतुर्दळे दम्पतीश इति चतुर्वर्णं विलिख्य, तद्बहिर्दशदलपद्मं विलिख्य, तेषु कामबीजं चिन्तामणिबीजं चान्तरन्तर्विलिख्य यस्त ऊरू विहरत्यन्तरेति दशार्णान्विलिख्य, तद्बहिः षोडशदळं पद्मं विलिख्य, तेषु प्रणवपूर्वकशूलिनीमन्त्रवर्णांश्च योनिं यो अन्तरारेलितमितो नाशयामासीति षोडशवर्णांश्च विलिख्य, तद्बाह्ये साध्यवर्णैर्वेष्टयेत् ॥

मध्ये नामसमे इभाश्रविवरे कन्दर्पबीजाष्टकं
शूलिन्यष्टदळे रमां क्षितिपुटे मायां च चिन्तामणिम् ।
पञ्चाशल्लिपिभिः श्रिया परिवृतं यन्त्रं जगन्मोहनं
कन्यावृद्धिकरं कुचोद्भवकरं सौभाग्यभोगप्रदम् ॥

अस्यार्थः — प्रथमं चतुरश्रद्वयपुटितरूपेण अष्टकोणं विलिख्य तन्मध्ये साध्यनाम विलिख्य अष्टाश्रेषु कामबीजं विलिख्य तद्बहिरष्टदळं पद्मं विलिख्य तेषु शूलिनीमन्त्रार्णान् द्वन्द्वशो विलिख्य तद्बहिश्चतुरश्रद्वयं पुटित्वा विलिख्य तस्याष्टकोणेषु लक्ष्मीमायाचिन्तामणिबीजानि विलिख्य तद्बहिर्वृत्ते मातृकावर्णैर्वेष्टयेत् । तद्बहिः श्रीबीजेन वेष्टयेत् ॥

मायागर्भस्थसाध्याक्षरहृदि परितो मारुतं हव्यवाहं
नागाश्रे रुद्रवर्णं शशिदळकमले शूलिनीमष्टकोणे ।
कालार्णं साध्यमायाखिललिपिसुवृतं विश्ववैर्यङ्गनानां
गर्भक्षीणप्रदं तद्दुरितकरमिदं गर्भसंक्षोभणं च ॥

सौकुमारपटे यन्त्रं समालिख्य सदक्षिणम् ।
आवाह्य कृष्णपञ्चम्यां पूर्वरात्रौ मरुन्मुखः ॥

आराध्य साध्यसंयुक्तं जप्त्वा दशशतं सुधीः ।

नित्यमेवंक्रमेणैव परात्रौ तु दर्शके ॥

तत्क्षितौ कोष्ठयुग्मे वा सीमान्ते वा यथोचितम् ।
खनित्वा बलिपूर्वं तु जपेद्भूयश्चतुर्दिनम् ॥

नानाविधारियोषाणां गर्भमत्यद्भुतं शनैः ।
क्षयं याति स्वयं कृष्णपक्षचन्द्रकला इव ॥

अस्यार्थः — प्रथममष्टपत्रं पद्मं विलिख्य तन्मध्ये भुवनेश्वरीं विलिख्य, तन्मध्ये साध्यनाम विलिख्य, तन्मध्ये वायुबीजमग्निबीजं च विलिख्य, मायाबीजस्य परितश्च वायुबीजं वह्निबीजं च विलिख्य, पुनरष्टदळेषु श्रींह्रीं रुद्राय नमः इति रुद्रमन्त्रं विलिख्य, पुनः षोडशदळं पद्मं विलिख्य तेषु प्रणवपूर्वकशूलिनीमन्त्रार्णान् विलिख्य, तद्बहिरष्टकोणं विलिख्य, तेषु कालवर्णाख्यं मकारं विलिखेत् । तद्बहिस्साध्येन मायया पञ्चाशद्वर्णैश्च क्रमेण वेष्टयेत् ॥ उक्तफलं भवति ॥ सौकुमारपटं-பித்தளை ॥

अथ शूलिन्याः क्रियोत्कर्षयन्त्रं विलिख्यते —

आलिख्याष्टाष्टकोष्ठे प्रतिगृहसुषिरं कीलपत्रं च मध्यात्
प्रादक्षिण्येन पाङ्क्तं विहितरसरसस्वारतत्सामवर्णम् ।
मध्ये रत्नन्तु बीजं प्रणवपरिवृतं पञ्चधा मूलमन्त्रं
सन्धौ शूलाग्रसाध्यं विहितपरिवृतं सत्क्रियोत्कर्षमेतत् ॥

अस्यार्थः — प्रथमं पूर्वपश्चिमतः नवरेखा विलिख्य तदुपरि दक्षिणोत्तरतश्च नव रेखा विलिखेत् ॥ एवं विलिखिते चतुष्षष्टिकोष्ठानि जायन्ते । तेषु चतुष्षष्टिकोष्ठेषु प्रतिकोष्ठं कर्णिकावृत्तं विलिख्य, तद्बहिः कीलपत्रसंज्ञानि दीर्घायमानान्यष्टपत्राणि कर्णिकावृत्ताभिमुखानि विलिखेत् । पूर्वपङ्क्तावुत्तरकोष्ठगतकर्णिकावृत्तमारभ्य तदष्टदळेषु रसरसस्वारेति, अकारादि-

षोडशस्वरसहितानि षट्त्रिंशदक्षराणीत्यर्थः ॥ तत्र ककारादिक्षकारान्ता वर्णाः पञ्चत्रिंशद्वर्णाः । अथमस्वरविकाराष्षोडश स्वराः । सर्वेपि संभूय एकमक्षरम् । एतानि सर्वाणि संभूय षट्त्रिंशदक्षराणि । एतानि षट्त्रिंशदक्षराणि सर्वाण्यपि प्रत्येकमकारादिषोडशस्वरसहितानि भवेयुः । तत्कथं अ आ इ ई इत्यादि-प्रकारेण अकारस्य षोडशस्वरयोगः । क का कि की ख खा खि खी इत्यादि-प्रकारेण इतरपञ्चत्रिंशद्वर्णानां षोडशस्वरयोगः । एवं योजिते तत्सामवर्णमिति कटपयादिसंख्यया षट्सप्तत्युत्तरपञ्चशताक्षराणि जायन्ते ॥

एतान्यक्षराणि क्रमेण एकैकस्मिन्कीलपत्रे कर्णिकादिक्रमेण दळेषु नवनवाक्षराणि विभज्य विलिखेत् । पुनर्मध्ये रत्नं तु बीजं प्रणवपरिवृतं पञ्चधा मूलमन्त्रं सन्धाविति पूर्वलिखितरेखासु एकाशीतिसन्धयो विद्यन्ते । द्विरेखासंयोगस्सन्धिरित्युच्यते । तासां सन्धीनां मध्ये मध्यसन्धौ चिन्तामणि-बीजं प्रणवेनावृतं विलिख्य, तन्मध्ये साध्यनामादीन् विलिखेत् । इतरास्त्र-शीतिसन्धिषु, प्रणवादिशूलिनीषोडशाक्षरीवर्णानामेकैकं विलिखेत् । एवं विलिखिते मूलमन्त्रस्य पञ्चावृत्तिर्जायते । पुनः रेखाग्रेषु शूलानि विलिख्य तेषु साध्यनाम विलिखेत् । विहितपरिवृतमिति, शूलाग्रेषु मूलमन्त्रवर्णै-कैकयुक्तं साध्यनाम विलिखेदित्यर्थः । तत्र मध्ये रत्नं तु बीजमित्यत्र तुशब्दात् चिन्तामणिबीजस्थाने तद्विहाय चतुरशीति फलविशेषावाप्तये चतुर-शीतिबीजविशेषान् विलिख्य, (इत्यनेन) चतुरशीति प्रयोगविशेषः सूचितः । तत्सर्वमतिविस्तरभयात् अत्र न लिख्यते । तस्माद्गुरुमुखादेवावगन्तव्यम् ॥

मध्ये दुर्जन्तुनामप्रतिभटसुलिपिं निग्रहाजाभिवीतं
षट्कोणे बीज*भूतं स्मरहरसहितं भूपुरे मूलमन्त्रम् ।
कोणाग्रे शूलसाध्यं क्षमुखलिपिवृतं स्वेष्टदुर्जन्तुदंशात्
शत्रूणां क्षिप्रवंशक्षयकरमतुलं शूलिनीघोरयन्त्रम् ॥

---

* भेदं इति ख, ग, घ, मातृकापाठः ।

अस्यार्थः — प्रथमं षट्कोणं विलिख्य, तत्कर्णिकामध्ये साध्यदुर्जन्तोर्नाम साध्यपुरुषस्य नाम च विलिख्य, तदुपरि अग्निबीजं भुवनेश्वरीं च विलिखेत्। षट्कोणकोणेषु दुं क्लीं ह्रीं इत्यावृत्त्या विलिखेत्। तद्बहिश्चतुरश्रं तत्कोणेषु मूलमन्त्रवर्णान् विलिखेत्। रेखाग्रेषु शूलानि विलिख्य तेष्वपि साध्यनाम विलिखेत्। तद्बहिः मातृकावर्णैः प्रतिलोमेन वेष्टयेत्॥ पट्टफलविशेषानाह —

यन्त्रमेतत्समालिख्य विषवृक्षे सलक्षणम् ।
आवाह्य दर्शदिवसे मन्त्री साध्यतयान्वितम् ॥

निशि संपूज्य साहस्रं जप्त्वा पूर्णान्तमन्वहम् ।
रिपुक्षेत्रेऽथवा कोष्ठे खनित्वा तद्दिगाननः ॥

पुनर्जपेत् त्र्यहं वैरिनाशाय स्वेष्टदंशनात् ।
यज्जन्तुनामलिखितं तद्दंशादेव वैरिणः ॥

नश्यन्त्यव्याजमचिरात् शूलिन्या तत्स्वरूपया ।
निवृत्त्यै पूर्ववन्मन्त्री क्षीरे निक्षिप्य वै जपेत् ॥

नो चेदरातिसंबन्धान्नाशयत्येव शूलिनी ।
तस्मात्सर्वप्रयत्नेन नाशयित्वाऽरिमात्मकम् ।
निवारयतु तद्वंशरक्षार्थं पुण्यवृद्धये ॥

बिन्दौ रत्नं सबीजं ऋतुगृहविवरे सेन्दुशक्त्यङ्गषट्कं
वस्वश्रेष्वष्टवह्निं स्वरदळकमले शूलिनीमन्त्रवर्णम् ।
यस्त्वा स्वप्नेन मन्त्रं फलदळकमले साध्यमायाभिवीतं
यन्त्रं दुस्स्वप्नवन्ध्यातनयदमतुलं सर्वदुष्टाहिताक्ष्यर्म् ॥

अस्यार्थः — प्रथमं षट्कोणं, तदन्तर्वृत्तं, तदन्तः दुर्गाबीजसहितं

चिन्तामणिबीजं, षट्सु कोणेषु वृत्तस्यान्तः ह्रामाद्यङ्गं, तद्बहिरष्टकोणं, तेषु वह्निबीजं, तद्बहिष्षोडशदळं, तेषु शूलिनीमन्त्रवर्णान्, तद्बहिर्द्वात्रिंशद्दळं विलिख्य, तेषु यस्त्वास्वप्नेन इत्यृगक्षरान्विलिख्य, तद्बहिस्साध्यपुटितभुवनेश्या वेष्टयेत् ॥ इति ॥

पुत्रदैर्जुहुयाद्द्रव्यैः मण्डलं वृद्धिपल्लवैः ।
मण्डलं भोजयेद्विप्रानुक्तसंख्यं स्वशक्तितः ॥

निजवंशद्वयस्निग्धपोष्ये तत्स्निग्धवर्गिणम् ।
पुत्रपौत्रसुखाशेषशुभवृद्धिर्भविष्यति ॥

तत्र पुत्रदमिति पुत्रजीवकम्। वृद्धिपल्लवमिति गळूची ॥

अथवा वारुणं सूक्तं जापयेद्वेदवित्तमान् ।
अष्टषोडशषट्त्रिंशच्चत्वारिंशत्सपञ्चकान् ॥

आगळं स्थिरतोयस्थानतिगम्भीरमानसान् ।
गळूचीसोमवल्लीभ्यां जुहुयात्तत्समं दिनम् ॥

मण्डलादेव तद्राज्यं वृष्ट्या पूर्णोदकं भवेत् ।
योऽन्वब्दं वर्षणे मासि वृष्टिसिध्द्यै जितेन्द्रियः ॥

जपहोमक्रियां कुर्यात् कारयेद्वा यथाविधि ।
अवग्रहैरनावृष्टिर्न भवेत्तस्य राज्यके ॥

अथ वाऽरिविपज्जन्मवधप्रत्यरभद्रुमात् ।
समित्सहस्रमादाय व्योषसैन्धवसर्षपैः ॥

गोघृतैर्जुहुयान्मन्त्री विजयाय सुखाप्तये ।

व्योषं-त्रिकटु ॥

अथान्यं संप्रवक्ष्यामि विचित्रकरणं परम् ॥

सर्वदोषहरं श्रेष्ठं सर्वाश्चर्यकलावहम् ।
गोमयेन समालिख्य भूतलं चतुरश्रकम् ॥

कृत्वा सिताक्षतेनैव नवकोष्ठं सलक्षणम् ।
हरिद्रालेपितं त्र्यक्षं गन्धाक्षतसुमार्चितम् ॥

संस्थाप्य धूपितं मध्ये घृतदीपोज्ज्वलच्छिखम् ।
कार्पासबीजमाहेन्द्रे सर्षपं हव्यवाहने ।
मरीचिलवणे याम्ये तिलनिम्बदळेऽसुरे ॥

वारुणे कलशं सोदं शाखां निम्बस्य मारुते ।
रक्तप्रसूनं कौबेरे भस्मैशान्ये क्रमात्सुधीः ॥

प्रागास्य उदगास्यो वा समासीनः स्थितोपि वा ।
ऋषिन्यासादिकं कृत्वा शूलिनीदेवतामयः ॥

क्षुद्ररोगग्रहग्रस्तं वामे संस्थाप्य भागके ।
दक्षिणे काष्ठजाङ्गारं धूमज्वालाविवर्जितम् ॥

ॐनमः कृष्णवाससीत्यनया स्वरसंख्यया ।
दीपादिद्रव्यभेदानि मन्त्र्य तत्साध्ययुक्तया ॥

तत्र नमः कृष्णवाससीत्यादि द्वात्रिंशत्पटलानन्तरं प्रत्यङ्गिराविधाने वक्ष्यमाणः प्रत्यङ्गिरामालामन्त्रः ॥

क्षुद्रादि स्वेष्टशमनीं ज्वालायां शूलिनीं हृदा ।
आवाहनादि पूजान्तमुपचर्योपचारकैः ॥

दीपत्र्यक्षं समादाय नामाद्यर्णस्वरादिकम् ।

नामाद्यर्णस्वरादिकमिति नामाद्यर्णस्वरवर्णैकैकपूर्वकं मूलमन्त्रं जप्त्वेत्यर्थः ॥

केशादिपादपर्यन्तमवतार्यावतार्य सः ।
तत्र त्र्यक्षमिति नाळिकेरम् ॥

परिणीय विधानेन ग्रस्तं तद्देहमञ्जसा ।
अन्तस्थदेवतामुक्तं ध्यात्वा हुंकारपूर्वकम् ॥

नाळिकेरमतिक्षिप्रं बलिं दद्यात् शिलातले ।
इन्द्राद्यसुरपर्यन्तं कोष्ठद्रव्यैः पृथक् तथा ।
मन्त्रेण परिणीयाथ जुहुयाज्जातवेदसि ॥

आदाय सोदकलशं परिणीयाभिमन्त्रयन् ।
छायां नयनयोस्तारं पश्यन्तं मन्त्र्य पञ्चधा ॥

पिधाय चरुदीपेन कलशं ताडयेद्बहिः ।
वीजयेन्मन्त्रविन्मुक्तं पञ्चधा निम्बशाखया ॥

रक्तपुष्पैस्तथामन्त्र्य निक्षिपेदमलोदके ।
भस्मनामन्त्र्य केशादिपादान्तं मातृकान्वितम् ॥

ततो दिव्यौषधं युञ्ज्यात् दानहोमजपार्चनैः ।
दिव्येन कर्मणानेन शूलिनीदेवताज्ञया ॥

नानाक्षुद्रमहारोगग्रहैर्मुक्तो भवेत्सदा ।
तदाद्यारोग्यपर्यन्तं वीक्षणस्पर्शभाषणैः ॥

द्विसन्ध्यं मन्त्रयेन्मन्त्री निम्बपत्रेण भस्मना ।

यदा कदाचिदथवा प्राप्ते यदि विजृम्भणे ॥

तदा ऽप्यक्षादिभिर्द्रव्यैः मन्त्री संमन्त्रयेत् द्विधा ।
तथापि ज्वलितं तस्मिन् चिकित्सा नास्त्यसंशयः ॥

अथ दुर्गामन्त्रप्रसङ्गात् मन्त्रसारोक्तः पक्षिदुर्गामन्त्रोपि लिख्यते —

कश्यप ऋषिः । गायत्री छन्दः । पक्षिदुर्गा देवता । ओं ह्रीं दुर्गे हृदयाय नमः । पक्षिरूपिणि शिरः । धूं धूं धूं शिखा । धूं दहासाग्निरों कवचम् । ह्रीं धूं धूं नेत्रम् । स्वाहा अस्त्रम् ॥ ध्यानम् ॥

उद्वृत्तोद्भ्रान्तरत्नप्रभनयनयुगद्वन्द्वनिर्यत्कृशानोः
ज्वालामालातिभीमां विकटतरकराणै(ळो)ग्रतीक्ष्णाग्रतुण्डाम् ।
पक्षाक्षेपप्रचण्डानिलचटुलजवद्रावितारातिसङ्घां
दुर्गां भिन्नाञ्जनाभां खरतरनखरां पक्षिरूपां नमामि ॥

ओं ह्रीं दुं दुर्गे पक्षिरूपिणि धूं धूं धूं धूं [1]दहासाग्निरों ह्रीं धूं धूं स्वाहा॥ इति मन्त्रः । चतुर्विंशतिवर्णः । धूंकारषट्कयुक्तः उच्चाटनप्रधानोयं मन्त्रः ॥ लक्षजपः । आज्याक्ताभिरर्कसमिद्भिर्दशांशं पुरश्चरणाहोमः ॥

अथ पूजा— आं प्रभायै० ईं मायायै० ऊं जयायै० एं सूक्ष्मायै० ऐं विशुद्धायै० ॐ नन्दिन्यै० औं सुप्रभायै० अं विजयायै० अः सर्वसिद्धिदायै० ९ इत्यष्टदळेषु नवमीं कर्णिकायां च संपूज्य, तदुपरि ॐ वज्रनखदंष्ट्राय महासिंहाय हुं फट् नमः ॥ इति सप्तदशार्णो मन्त्रः ॥ अस्मिन्पीठे समावाह्य समर्चयेत् । अङ्गैः प्रथमावृतिः । जं जयायै० विं विजयायै० कीं कीर्त्यै प्रीं प्रीत्यै० प्रं प्रभायै० श्रं श्रद्धायै० में मेधायै० श्रुं श्रुत्यै० ८ इति द्वितीयावृतिः । मातृभिस्तृतीया । लोकेशैश्चतुर्थी ॥

---

१ दहासोग्नि इति ङ पाठः ।

अथ प्रयोगः —

संपूज्यैवं देवीमार्कैरिध्मैर्घृताप्लुतैर्जुहुयात् ।
अष्टोत्तरसहस्रं निजरक्षायै सपत्ननाशाय ॥

प्रयोगान्तरम् —

कारस्करस्य पत्रैः निपातितैर्वायुना शतं जुहुयात् ।
पादरजस्संमिश्रैः शत्रोरुच्चाटनाय मरीचैर्वा ॥

कारस्करं – எட்டி. मरीचं மிளகு.

प्रयोगान्तरम् —

आदाय तुण्डेन रिपुं दारयन्तीं नखैः करैः ।
ध्यात्वा जपेन्मन्त्रममुं शत्रोरुच्चाटनाय वै ॥

अस्य यन्त्रमाह —

आलिख्य चापं सगुणं सबाणं तत्र कार्मुके ।
कलामयगुणे चापं रंबीजं बाणपार्श्वके ॥

कोष्ठद्वन्द्वे मन्त्रवर्णान् साध्यवर्णविदर्भितान् ।
अनुलोमविलोमांश्च क्रमेणालिख्य तद्बहिः ॥

मालाकारेण परितः यंबीजेन प्रवेष्टयेत् ।
पक्षिदुर्गामनोरेत्र (वं) चापयन्त्रमुदीरितम् ॥

उच्चाटनकरं शत्रोर्देशाद्देशान्तरं क्षणात् ।

अस्यार्थः — प्रथमतः सगुणां सबाणां चापाकृतिं विलिख्य, तत्र गुणे षोडशस्वरान् विलिख्य, पुनर्बाणस्य पार्श्वयोः अग्निबीजं विलिख्य गुणे आरोपित-बाणपार्श्ववर्तिनि कोष्ठद्वन्द्वे तु दक्षिणकोष्ठे पक्षिदुर्गामन्त्रवर्णद्वन्द्वपुटितान्

साध्यवर्णानुच्चाटयपदयुक्तान्विलिख्य, उत्तरकोष्ठे तु मन्त्रप्रतिलोमवर्णविदर्भितान् साध्यनामवर्णांश्च विलिख्य, तद्बहिः वृत्तं विलिख्य, वायुबीजेन वेष्टयेत् एतच्चापयन्त्रमुक्तफलदं स्यात् ॥

प्रयोगान्तरम् —

कटुत्रयमिदं पूर्णं जप्त्वा चाष्टोत्तरं शतम् ।
उच्चाटनाय विकिरेत् मर्कटीचूर्णमेव वा ॥

कटुत्रयं சுக்கு. மிளகு. திப்பிலி. मर्कटी பூனைக்காலி.

प्रयोगान्तरम् —

उच्चाटयन्तीं तुण्डेन विद्विषः प्रसभं दशौ ।
स्मृत्वा जपेन्मन्त्रममुं अन्धान्कर्तुं क्षणाद्रिपून् ॥

अथ दुर्गामन्त्रप्रसङ्गात् तत्रैवोक्तः भ्रमरदुर्गामन्त्रोपि लिख्यते —

वामदेव ऋषिः । गायत्रीछन्दः । भ्रमरदुर्गा देवता । ह्रीं दुं दुर्गे हृत । भ्रम शिरः । भ्रम शिखा । भ्रामय कवचम् । भ्रामय नेत्रम् । स्वाहा अस्त्रम् । ध्यानम् —

शङ्खं चक्रं कपालं त्रिशिखरमुसलौ तर्जनीं चापबाणौ
बिभ्राणां बाहुदण्डैः शशिशकलसत्पिङ्गकोटीरभाराम् ।
देवीं भिन्नाञ्जनाभां विकटमुखलसद्घोरदंष्ट्रां त्रिणेत्रां
दुर्गां भोगीन्द्रभूषां मुनिविबुधनुतां घोररूपां नमामि ॥

ह्रीं दुं दुर्गे भ्रमभ्रम भ्रामय भ्रामय स्वाहा इति मन्त्रः ॥ द्वादशसहस्रजपः ॥ आज्यसिक्ताभिरर्कसमिद्भिर्वा आज्यैर्वा दशांशं पुरश्चरणाहोमः ॥ पक्षिदुर्गोक्तवत् पूजा ।

अथ प्रयोगः —

जुहुयान्मत्तसमिद्भिर्महिषीघृतलोलितैर्निशीथेऽग्नौ ।
रिपुनिचयस्सोन्मादो भ्रमति महीमण्डले विनष्टमतिः ॥

मत्तम् ஊமத்தை ஸமித்து. अस्य यन्त्रमाह —

षोडशकोष्ठानि ततो विंशतिशूलाङ्कितानि संलिख्य ।
कोष्ठेषु मन्त्रवर्णान् एकैकं साध्यवर्ण(सं)युक्तान् ॥

शूलान्तरेषु वर्णान् खगदुर्गायाश्च साध्यसंयुक्तान् ।
विलिखेदेतद्यन्त्रं शत्रुविनाशाय सूरिभिः प्रोक्तम् ॥

अस्यार्थः — प्रथमं दक्षिणोत्तरतः पञ्च रेखा विलिख्य एवं पूर्वपश्चिमतोपि पञ्चरेखा विलिखेत् । एवं विलिखिते षोडशकोष्ठानि भवन्ति । तत्र ईशानकोष्ठमारभ्य भ्रमरदुर्गामन्त्रस्यैकैकमक्षरं उन्मादयेति साध्यवर्णैकैकाक्षरपुटितं विलिखेत् । पुनः रेखाग्रेषु विंशतिशूलानि विलिख्य शूलमध्ये पक्षिदुर्गामन्त्रस्यैकैकमक्षरं साध्यार्णपुटितं विलिखेत् । एवं विलिखिते उक्तफलं भवति ॥

प्रयोगान्तरम् —

अरुणाम्बुजविष्टरां प्रसन्नां हृदि संचिन्त्य जपेदभीष्टसिध्यै ।

अथ दुर्गामन्त्रप्रसङ्गात् शत्रुस्तम्भनकरो बगळामुखीदुर्गामन्त्रोपि कल्पान्तरोक्तोत्र लिख्यते —

नारायण ऋषिः । त्रिष्टुप् छन्दः । बगळामुखी दुर्गा देवता ॥ ॐ ह्रीं हृत् । बगळामुखि शिरः । सर्वदुष्टानां शिखा । वाचं मुखं पदं स्तम्भय कवचम् । जिह्वां कीलय नेत्रम् । बुद्धिं विनाशय अस्त्रम् । ध्यानम् —

गम्भीरां च मदोन्मत्तां तप्तकाञ्चनसन्निभाम् ।
चतुर्भुजां त्रिनयनां कमलासनसंस्थिताम् ॥

मुद्गरं दक्षिणे पाशं वामे जिह्वां च वज्रकम् ।
पीताम्बरधरां सान्द्रवृत्तपीनपयोधराम् ॥

हेमकुण्डलभूषां च पीतचन्द्रार्धशेखराम् ।
पीतभूषणभूषां च स्वर्णसिंहासनस्थिताम् ॥

एवं ध्यात्वा च देवेशीं शत्रुस्तम्भनकारिणीम् ।
महादिव्यां महामायां साधकेन्द्रफलप्रदाम् ॥

जपेदिति वाक्यशेषः ॥ ॐ ह्लीं बगळामुखि सर्वदुष्टानां वाचं मुखं पदं स्तंभय जिह्वां कीलय बुद्धिं विनाशय ह्लीं ॐ स्वाहा ॥ इति षट्त्रिंशदक्षरोयं मन्त्रः। वियत्पृथिव्यक्षरयुक्तं द्वितीयं बीजम् ॥ स्तम्भनप्रधानोयं मन्त्रः ॥ अयुतं जपेत् । दशांशं पीतद्रव्यैर्जुहुयात् । पीतद्रव्यं हरिद्रा ॥ अथ पूजा ॥

मध्ये योनिं समालिख्य तद्बाह्ये तु षडश्रकम् ।
तद्बाह्येष्टदळं पद्मं तद्बाह्ये षोडशच्छदम् ॥

चतुरश्रत्रयं बाह्ये चतुर्द्वारोपशोभितम् ।

एवं पूजाचक्रं विलिख्य, तस्मिन् प्राक् नवमे पटले प्रोक्तभुवनेश्वरीपीठं संपूज्य तस्मिन् बगळामुखीं समर्चयेत् । अङ्गैः प्रथमावृतिः । गणेशाय० वटुकाय० योगिन्यै० क्षेत्रपालाय० इति पूर्वदक्षिणपश्चिमोत्तरेषु गुरुपरमगुरुपरमेष्ठिगुरुपरात्परगुरून् आग्नेयादिकोणेषु च समर्चयेत् । पुनः बगळामुख्यै० स्तंभिन्यै० जंभिन्यै० मोहिन्यै० वश्यायै० *अचलायै० ज्वालायै० दुर्धरायै० कल्मषायै०

---

*अबलायै० बलायै० इति घ, ङ, मातृकापाठः ।
अचलायै० बलायै इति ख पाठः ।

धीरायै० कल्पनायै० कालकर्षिण्यै० भ्रामिकायै० मन्दगमनायै० भोगायै० योगायै० १६ एताः षोडशस्वरवर्णैरेकैकपूर्विकाः षोडशपत्रेषु समर्चनीयाः । तदन्तः अष्टपत्रेषु भुवनेशीबीजपूर्विकाः ब्राह्मयाद्यास्समर्चनीयाः ॥ पुनः डां डाकिन्यै० रां राकिन्यै० लां लाकिन्यै० कां काकिन्यै० शां शाकिन्यै० हां हाकिन्यै नमः ६ इति षट्कोणेषु समर्चयेत् ॥ एवं विलिखितेपि षट्कोणाष्टदळ-षोडशदळक्रमेण पूजाक्रमः । पुनस्तद्बहिरिन्द्रादयः । तद्बहिर्वज्रादयश्च समर्चयेत् ॥ योन्याख्यत्रिकोणमध्ये मूलदेवीं च समर्चयेत् ॥

अथ प्रयोगः —

हरिताळं हरिद्रां च लवणेनैव संयुतम् ।
स्तंभने होमयेद्देवी प्रज्ञां चैव गतिं मतिम् ॥

स्तम्भयेदिति शेषः ॥ हरिताळं तत्संज्ञमेव । हरिद्रं மஞ்சள் தூள் एतत् त्रयं हरिद्राचूर्णैश्च हरितालचूर्णैश्च मिलित्वा हुनेदित्यर्थः ॥

प्रयोगान्तरम् —

हरिद्राहरितालाभ्यां जुहुयाल्लवणं निशि ।
स्तम्भयेत्पञ्चदिव्यानि नात्र कार्या विचारणा ॥

स्तम्भनेषु च सर्वेषु प्रयोगः प्रत्ययावहः ।
अथवा पीतपुष्पैर्वा त्रिमध्वक्तैश्च होमयेत् ॥

अस्यार्थः — हरिद्राचूर्णैश्च हरितालचूर्णैश्च संयुतैर्लवणैः हुनेत् । पञ्चदिव्यानि — 'तुलाग्न्यापो विषं कोशो दिव्यानीह विशुध्दये ॥' इति पञ्चदिव्यानि ॥ पीतपुष्पाणि यानि कानिचित् पीतकुसुमानि ॥

प्रयोगान्तरम् — हरिद्राचूर्णैः महिषाज्यसिक्तैः पश्चिमाभिमुखः रात्रौ अष्टोत्तरसहस्रं हुत्वा आज्याहुतीश्च माहिषाज्यैरेव हुत्वा तत्संपातं च विलोड्य नालिकेरमुखं छित्वा तस्मिन्गृहीत्वा शत्रोरागतिमार्गे वा प्रतिसेनायाः समागतिमार्गे वा निखान्य स्थापयेत् ॥ शत्रुस्तम्भनं भवति इति कल्पान्तरप्रोक्तमन्त्रार्थतो लिखितम् ॥

अथ दुर्गामन्त्रप्रसङ्गात् मृत्योस्तुल्यमन्त्रश्च कल्पान्तरोक्तोत्र योग्यतावशाल्लिख्यते —

निघृण ऋषिः । जगती छन्दः । महिषमर्दिनी दुर्गा देवता । दुं बीजम् । नमः शक्तिः । महिषमर्दिनीप्रसादे विनियोगः । मन्त्रस्य चतुर्दशभिश्चतुर्दशभिरक्षरैः षडङ्गानि । वक्ष्यमाणद्वादशाक्षरीवद्वा षडङ्गानि ।

ध्यानम् —

त्रिशिखदळितरक्षोधीशवक्षोविनिर्यत्-
　　बहळरुधिरधारादिव्यमाध्वीरसौघम् ।
वदनमुपनयन्ती सिम्हपृष्ठाधिरूढा
　　हरतु भगवती मे दुःखचिन्तां दुरन्ताम् ॥

मृत्योस्तुल्यं त्रिलोकीं ग्रसितुमतिरसान्निस्सृताः किन्तु जिह्वाः
　　किंवा कृष्णांघ्रिपद्मद्युतिभिररुणिता विष्णुपद्याः पदव्यः ।
प्राप्ताः सन्ध्याः स्मरारेः स्वयमुत नुतिभिस्तिस्र इत्यूह्यमाना
　　देवैर्देव्यास्त्रिशूलक्षतमहिषजुषो रक्तधारा जयन्ति ॥

इति मन्त्रः । रक्षाकरोपद्रवशान्तिप्रधानोयं मन्त्रः । अस्यैव यन्त्रमुच्यते —

संपुटितशिखिपुरान्तः कोणेषु च षट्सु शक्तिमालिख्य ।
सितिवति कोणकपोले तद्रन्ध्रेष्वङ्गषट्कमपि शक्तेः ॥

दिग्गतपत्रचतुष्के प्रत्येकं द्वन्द्वशो लिखेत् प्रान्तम् ।
शिखिमुखकोणचतुष्के गुणशो मादींश्च दिक्षु चैकैकम् ॥

विकृतिषु पादीन् गुणशः संवेष्टितमातृकार्णमपि बाह्ये ।
क्ष्माबिम्बद्वन्द्वान्तः षादीनालिख्य चाष्टमे शिष्टम् ।

इत्थं यन्त्रं कथितं षोडशशूलाङ्कितं च मतिमद्भिः ॥

अस्यार्थः — प्रथमं षट्कोणं विलिख्य, तन्मध्ये भुवनेश्वरीं च विलिख्य, तन्मध्ये साध्यनामादीन् विलिख्यात् । पुनः षट्सु कोणेषु भुवनेशीं विलिख्य, पुनः कोणपार्श्वयोः सितु इत्येवं नवमदशमाक्षरद्वयं विलिख्य, पुनष्षट्कोणकपोलरन्ध्रेषु मूलमन्त्रस्याङ्गानि चतुर्दशवर्णशो विभक्तानि विलिखेत् । तद्बहिरष्टदळपद्मं विलिख्य, प्रागादिदळेषु मन्त्रस्यादित आरभ्य अष्टौ वर्णान् द्वन्द्वशो विलिखेत् । पुनराग्नेयादिकोणचतुष्के त्रिशस्त्रिशो मादिवर्णान् किमन्तान् विलिख्य, तद्बहिश्चतुर्दिक्षु वादिप्रचन्तान् चतुरो वर्णान् विलिख्य, तद्बहिष्षोडशदळं पद्मं विलिख्य, तेषु दळेषु पादिवर्णान् हीत्यन्तान् त्रिशस्त्रिशो विलिख्य, तद्बाह्ये मातृकावर्णैः संवेष्टच, तद्बहिर्भूपुरद्वयं पुटितं विलिख्य तद्गतकोणाष्टके षादीन् जान्तान् मन्त्रवर्णान्विलिख्य, अवशिष्टद्वयं चाष्टमे कोणे विलिखेत् । रेखाग्रेषु षोडशशूलानि विलिखेत् । इति । प्रागुक्तवनदुर्गोक्तवत् पूजा ॥

अथामुमेव मृत्योस्तुल्यमन्त्रमन्यमन्त्रेण संयोज्य प्रयोग उच्यते —

मृत्योस्तुव्यं त्रिलोकीं ग्रसितुमतिरसान्निस्सृताः किन्नु जिह्वाः
कि वा कृष्णांघ्रिपद्मद्युतिभिररुणिता विष्णुपद्याः पदव्यः ।

यदन्ति यच्च दूरके भयं विन्दति मामिह । पवमान मितज्जहि ॥ यदुत्थितं भयं भगवन् तत्सर्वं शमय स्वाहा । दुर्गां देवीं शरणमहं प्रपद्ये प्रतिकूलं मे नश्यतु अनुकूलं मे प्रयच्छ प्रयच्छ ॥

प्राप्तास्सन्ध्यास्स्मरारेस्स्तवयमुत नुतिभिस्तिस्र इत्यूह्यमानाः
देवैर्देव्यास्त्रिशूलक्षतमहिषजुषो रक्तधाराः *पतन्ति ॥

इति मन्त्रः ॥ उपद्रवशान्तिप्रधानोयं मन्त्रः ।

दीपपात्रे चतुर्दिक्षु मध्ये तु (च) पञ्चवर्तीन्निधाय तत्सर्वं प्रज्वाल्य तद्दीपं स्वस्तिकपद्मे निधाय तस्मिन्दीपे देवीं समावाह्य प्रागुक्तवनदुर्गाविधानवत् संपूज्य तत्र नमस्कारं अनेन मन्त्रेण कुर्यात् ॥ तत्सर्वोपद्रवशान्तिर्भवेत् ॥ अयन्तु प्रयोगः अतीव समीचीनः आपच्छान्त्यर्थम् ॥

अत्र स्वस्तिकपद्मप्रकार उच्यते —

प्रथमं तण्डुलरजसा चतुरश्रं विलिख्य तन्मध्ये पूर्वपश्चिमत एकां रेखां विलिख्य तदुपरि दक्षिणोत्तरतश्च एकां रेखां विलिख्य तत्र पूर्वपश्चिमतो या रेखा तस्याः पूर्वाग्रं किञ्चिद्दक्षिणतो गमयित्वा पूर्वचतुरश्ररेखया संयोजयेत् ॥ अस्या एव पश्चिमाग्रन्तु किञ्चित्पूर्वतो गमयित्वा पश्चिमचतुरश्ररेखया संबध्नीयात् । दक्षिणोत्तरतो या रेखा तस्यास्तु दक्षिणाग्रं किंचित्पश्चिमतो गमयित्वा दक्षिणचतुरश्ररेखया संबध्नीयात् ॥ अस्या उत्तराग्रं तु किञ्चित्पूर्वतो गमयित्वा उत्तरचतुरश्ररेखया संबध्नीयात् । एवं विलिख्य ईशाननिर्ऋति-खण्डयोस्तण्डुलचूर्णानि प्रविकीर्य अग्निवायुखण्डयोस्तु रजनीचूर्णानि प्रविकिरेत् ॥ एवं स्वस्तिकपद्मलेखनप्रकारः ॥

---

* जयन्ति इति ख, ग, घ, ङ, मातृकापाठः ।

अथ कल्पान्तरोक्तप्रकारेणापि मृत्योस्तुल्यमन्त्रविधानं लिख्यते —

निघृण ऋषिः । जगती छन्दः । महिषमर्दिनी दुर्गा देवता । दुं बीजम् । हुं शक्तिः । दुं हृत् । गां शिरः । देवीं शिखा । शरणं कवचम् । अहं नेत्रम् । प्रपद्ये अस्त्रम् । ध्यानम् —

प्रालेयाचलपार्श्वस्थ चन्द्रकान्तशिलातले ।
जाम्बूनदमयस्तम्भे रत्नतोरणमण्डपे ॥

मुक्तावितानसंदीप्ते ताराभित्तिसुशोभिते ।
सर्वर्तुकुसुमोपेते सर्वतस्समलंकृते ॥

वैडूर्यवज्रमणिभिः खचिते ऋतुसेविते ।
मन्दारपारिजातादिदिव्यवृक्षविराजिते ॥

पञ्चाशत्कोटिविस्तारसभायां तु सुशोभिते ।
मण्डपे कल्पवृक्षस्य मूले स्थित्वासने शुभे ॥

सिंहमुखपादपीठे कुवलयपद्मस्थवसुदळे पद्मे ।
आसीनां श्यामतनुं मुक्ताताटङ्कराजितां हृद्याम् ॥

करकलितशङ्खचक्रां शरकार्मुकशूलसंज्ञककपालाम् ॥

खड्गं खेटं धारयन्तीं त्रिणेत्रां चारुहासिनीम् ।
काञ्चीनूपुरकेयूरकटकैर्मुकुटैस्तथा ॥

भूषितां रक्तवस्त्राढ्यां मुक्तादामविभूषिताम् ।
ध्यायेद्देवीं सुनियतो मन्त्रस्यास्य प्रसिद्धये ॥

मृत्योस्तुल्यमन्त्रः । लक्षं जपेत् पुरश्चरणार्थम् ॥ दशांशं तर्पयेत् ॥ घृतसिक्तैस्तिलैर्वा त्रिमधुरसिक्तैः सर्षपैर्वा जपाच्छतांशं पुरश्चरणहोमः ॥

अथ पूजार्थं यन्त्रं वक्ष्यते—

पूजायन्त्रं प्रवक्ष्यामि सर्वकामफलप्रदम् ।
पुत्रदं वश्यदं चैव सर्वक्षुद्रारिकृन्तनम् ॥

आलिख्याष्टदळं पद्मं बाह्ये भूपुरमेव च ।
तद्बहिर्द्वादशदळं ततः षट्कोणकं लिखेत् ॥

पुटितं भूपुरं पश्चात् लिखेच्छूलं तदग्रतः ।
कर्णिकायां मूलदुर्गां तारां नृहरिबीजकम् ॥

एकैकशश्शान्तिदुर्गां लिखेदष्टदळेषु च ।
शिष्टाक्षरचतुष्कं तु चतुष्कोणेषु संलिखेत् ॥

लिखेद्भूपुरमध्ये तु मृत्योस्तुल्यं महामनुम् ।
मर्दिनीमनुपर्यन्तं युगलं युगलं क्रमात् ॥

रविकेसरपद्मे तु गुणशो दळमध्यके ।
सप्तत्रिंशाक्षरं कृत्वा शिष्टमन्त्ये लिखेत्पुनः ॥

दळाग्रेष्वपि चैकैकं कुर्याच्छूलिनिमन्त्रकम् ।
शिष्टाक्षरत्रयं त्वन्त्यदळाग्रे विलिखेत्पुनः ॥

षट्कोणेष्वपि चाग्नेयत्रिष्टुभं सप्तशो लिखेत् ।
शिष्टाक्षरद्वयं त्वन्त्ये बहिः पुटितभूपुरे ॥

नृसिंहानुष्टुभं वेदसंख्यया चाष्टकोणके ।
बहिर्मातृकया चैव वेष्टिते यन्त्रनायके ।
सिंहपीठन्तु मन्त्रेण कृत्वा शक्तिं प्रपूजयेत् ॥

अस्यार्थः -- प्रथममष्टदळपद्मं विलिख्य तत्कर्णिकायां मूलदुर्गा ओं ह्रीं दुं दुर्गायै नमः इति, पुनः प्रणवं च क्षकाररेफऔकारबिन्दूनां संयोगो नृसिंहबीजं च (तच्च) एतत्सर्वं कर्णिकायां विलिख्य पुनरष्टदळेषु दुर्गां देवीं शरणमहं प्रपद्ये इत्यस्य शान्तिदुर्गामन्त्रस्य अष्टौ वर्णान् (एकैकशो) विलिख्य तद्बहिश्चतुरश्रं विलिख्य तस्य कोणेषु शान्तिदुर्गामन्त्रस्य अवशिष्टांश्चतुरो वर्णान् विलिख्य चतुरश्रस्य दिक्षु मृत्योस्तुल्यमन्त्रस्य वर्णानेकविंशतिवर्णशो विभज्य विलिखेत्। तत्पर्यन्त एव मर्दिनीमन्त्रं महिषमर्दिनी स्वाहा इत्यस्य वर्णद्वन्द्वं विलिख्य तद्बहिर्द्वादशदळं पद्मं विलिख्य तेषु दळमध्येषु उत्तिष्ठ पुरुषीत्यादि वनदुर्गामन्त्रवर्णान् त्रिशस्त्रिशो विलिख्य अन्त्यमेकमक्षरं अन्त्ये दळे विलिख्य दळाग्रेषु शूलिनीमन्त्रवर्णान् एकैकं विलिख्य अवशिष्टत्रयं अन्त्ये विलिख्य तद्बहिष्षट्कोणं विलिख्य तेषु जातवेदसमन्त्रस्य वर्णान् सप्तशः सप्तशो विलिख्य अवशिष्टद्वयमप्यन्त्ये विलिखेत् ॥ तद्बहिरष्टकोणं विलिख्य उग्रं वीरमित्यादिनृसिंहानुष्टुभो वर्णान् चतुरश्चतुरो विलिख्य तद्बहिर्मातृकया वेष्टयेत् ॥ इति ॥

अस्मिन्मण्डले नवशक्तिभिः पीठं यजेत्। प्रभायै० मायायै० जयायै० सूक्ष्मायै० विशुद्धायै० नन्दिन्यै० सुप्रभायै विजयायै० सर्वसिद्धिदायै० ९ इति पीठनवशक्तयः। एताभिः दीर्घस्वरपूर्विकाभिः आं प्रभायै० इत्यादि क्रमेण समर्चयेत्। वज्रनखदंष्ट्रायुधाय महासिंहाय हुं फट् नमः। इति कर्णिकायाम्। इत्थं पीठं संपूज्य तस्मिन्नावाह्य समर्चयेत्। अङ्गैः प्रथमावृतिः। आर्यायै० दुर्गायै० भद्रायै० भद्रकाल्यै० अम्बिकायै० क्षेम्यायै० वेदगर्भायै० क्षेमकार्यै० (क्षेमङ्कर्यै) ८ इति द्वितीयावृतिः। चक्राय० दराय० खड्गाय० खेटाय० शराय० कार्मुकाय० शूलाय० रक्तकपालाय० ८ इति तृतीयावृतिः। ब्राह्म्यादिभिश्चतुर्थी। इन्द्रादिभिः पञ्चमी शुम्भाय० निशुम्भाय० महिषाय० सिंहाय ४ इति पूर्वदक्षिणपश्चिमोत्तरासु दिक्षु, गणपतये०

वटुकाय० वीरभद्राय० क्षेत्रपालाय० इति निर्ऋतिवायव्याग्नेयैशान्येषु समर्चयेत् ।
इति षष्ठ्यावृतिः ॥

अथ प्रयोगः —

ऐन्द्रत्रिष्टुप्मन्त्रयोगात् मन्त्रमध्ये महद्धनम् ।
प्राप्नुयान्मण्डलजपात् नमस्काराच्च साधकः ॥

जपक्लृप्तिस्तु संप्रोक्ता अशीतिश्चतुरुत्तरा ।
संसृष्टमिति ऋग्योगात्संसृष्टद्रव्यसाधनम् ॥

ऐन्द्रगायत्रियोगात्तु लोकवश्यकरं भवेत् ।
अस्माकमिति ऋग्योगात्स्वस्योत्कर्षश्च शत्रुतः ॥

शैवानुष्टुप्मन्त्रयोगात् महामृत्युं तरत्यसौ ।
अभयंकरऋग्योगात् अभीतिः सर्वतो भवेत् ॥

यो मान्न इत्यस्य योगात् स्वीयं परवशे स्थितम् ।
प्राप्नोति साधकस्सत्यं नात्र कार्या विचारणा ॥

राज्ञां प्रच्युतराष्ट्राणां राज्यावाप्तिः स्थिरा पुनः ।
निर्माया इति ऋग्योगात् भविष्यति न संशयः ।
पद्मं वा स्वस्तिकं वापि कृत्वा संस्थाप्य दीपिकाम् ॥

तत्रावाह्य महादेवीं पूजयित्वा तु पायसैः ।
रक्तपुष्पैः समभ्यर्च्य पूर्वोक्तक्रमशः पुनः ॥

चतुरुत्तराशीतिसंख्यानमस्कारेण मण्डलात् ।
तदर्धाच्च तदर्धाद्वा तत्तत्कार्यानुसारतः ॥

सायं प्रत्यङ्मुखो भूत्वा नमस्कारेण साधकः ।
यान्यानिज(च्छ)ति तांस्तांस्तु प्राप्नोत्येव न संशयः ॥

दिनशो दिनशस्सप्तनमस्कारोत्तरोत्तरः ।
सप्ताधिकनमस्कारः सर्वार्थस्य प्रसाधकः ॥

यो नमस्कुरुते तस्य न मृत्युर्न दरिद्रता ।
नाकीर्तिर्नारिचोरादि न राजा बाधते क्वचित् ॥

नापुत्रता तस्य भवेन्न रोगो न मसूरिका ।
न मारिजं भयं तस्य नाहिव्याघ्रादिजं भयम् ॥

मधुसिक्तजपापुष्पहवनाल्लोकवश्यदम् ।
अमुं मधुरपूर्वन्तु हुनेल्लक्ष्मीसमृद्धये ॥

कारस्करसमिद्धोमात् शत्रोरुच्चाटनं भवेत् ।

कारस्करम् —எட்டி.

जुहुयाद्रोहिणसमिधां त्रिशतं मन्त्री पुनस्सशुङ्गानाम् ।
सर्वापदां विमुक्त्यै सर्वसमृध्द्यै ग्रहादिशान्त्यै च ॥

रोहिणं–वटम् ॥

पूर्वोक्तयन्त्रमालिख्य ग्रस्तं तस्योपरि न्यसेत् ।
जपेत्तत्पुरतस्स्थित्वा ध्यात्वा देवीं परात्पराम् ॥

समाविश्य(ष्टा)ग्रहास्सर्वे पलायन्त्येव तत्क्षणात् ।
नित्यं पूजयतो यन्त्रं लोकाः स्युः पादसेविनः ॥

यन्त्रे संस्थाप्य कलशं कषायोदैश्च पूरयेत् ।
जप्त्वा संस्नापयेत् ध्यायन् ऋतुस्नातां तदैव हि ॥

गर्भिणी तु भवत्येव स्नानात् यन्त्रस्य धारणात् ।
सर्वक्षुद्रा विमुञ्चन्ति मणिमन्त्रौषधा अपि ॥

अपस्माराः पिशाचाश्च प्रेतरुद्रादयोपि च ।
धारणाद्यन्त्रराजस्य पलायन्त्येव तत्क्षणात् ॥

अथास्य यन्त्रमाह —

प्राक्प्रत्यगष्टरेखास्युः दक्षिणोदक् त्रयोदश ।
पङ्क्तिशो मन्त्रवर्णांश्च कोष्ठेष्वालिख्य तद्बहिः ॥

एकैकशश्च रेखाग्रे त्रिष्टुभश्चाक्षरान् लिखेत् ।
अवशिष्टाक्षरद्वन्द्वं अन्त्यशूलाग्रतो लिखेत् ॥

बाह्ये मातृकयावेष्ट्य तन्मध्ये साध्यनामकम् ।
भूर्जपत्रे समालिख्य यन्त्रमेतत्तु निक्षिपेत् ॥

केदारेथ गृहे वापि प्राणस्थापनपूर्वकम् ।
वन्या गजा वराहाश्च आखुव्याघ्रादयोपि च ॥

शलभाः पक्षिणो ये च सस्यक्षेत्रादिहिंसकाः ।
बद्धास्यपादनेत्रास्स्युः न विशन्ति कदाचन ॥

मद्दळे पटहे वापि ध्वजे वा बन्धयेत्पुनः ।
दर्शनात्तध्द्वजस्यैव श्रवणात्तध्द्वनेरपि ॥

सेनास्तम्भो भवेन्नूनं नात्र कार्या विचारणा ।

अस्यार्थः — प्रथमं पूर्वपश्चिमतः अष्टौ रेखा विलिख्य तदुपरि दक्षिणोत्तरतः त्रयोदश रेखा विलिख्य तन्मध्ये साध्यनामादीन् विलिख्य

कोष्ठेषु चतुरशीतिषु मृत्योस्तुल्यमन्त्रवर्णानेकैकशः ईशानादिक्रमेण विलिख्य तद्बहिः रेखाग्रशूलेषु जातवेदसमन्त्रस्य एकैकमक्षरं विलिख्य अवशिष्टाक्षरद्वयमन्त्ये शूलाग्रे विलिख्य तद्बहिर्मातृकया वेष्टयेत् ॥ इति ॥

अथ दुर्गाद्वादशाक्षरीमन्त्रः कल्पान्तरोक्तश्चात्र प्रसङ्गात् लिख्यते—

शेषपर्यङ्कशायिनी नारायणी ऋषिः। जगती छन्दः। शेषपर्यङ्कशायिनी नारायणी देवता। शान्तिदुर्गा वा देवता॥ सर्वज्ञायै ह्रां दुर्गायै हृत्। नित्यतृप्तायै ह्रीं दुर्गायै शिरः। अनादिबोधायै ह्रूं दुर्गायै शिखा। स्वतन्त्रायै ह्रैं दुर्गायै कवचम्। अलुप्तशक्त्यै ह्रौं दुर्गायै नेत्रम्। अनन्तशक्त्यै ह्रः दुर्गायै अस्त्रम्॥ ध्यानम्—

क्षीराम्भोनिधिमध्यस्थे स्वर्णद्वीपे मनोरमे।
सर्वर्तुकुसुमोपेते नानावृक्षसमन्विते॥

रत्नसिंहासनस्थां तां स्वर्णवर्णां मनोरमाम्।
देवीं ध्यायेदतिस्वच्छवेषां भूषासमन्विताम्॥

शङ्खं चक्रमसिं च चर्म सशरं चापं गदां शूलकं
बिभ्राणां वरदाभयामृतघटान् रत्नौघपात्रं तथा।
भूषाभिर्मकुटादिभिस्त्रिनयनां पीताम्बरामम्बिकां
ध्यायेच्चन्द्रकलान्वितां सुरगणैरीड्यां जगन्मङ्गलम्(लाम्)॥

दुर्गां देवीं शरणमहं प्रपद्ये॥ इति मन्त्रः॥ अनेनापि मन्त्रेण पूर्ववत् जपनमस्कारादीन् कुर्यात्॥ सकलोपद्रवशान्तिर्भवति॥

अथ वैरोचनीकल्पोक्तप्रकारेणापि ध्यानादिकमस्य मन्त्रस्योच्यते॥ अङ्गादिकं तु पूर्ववदेव। मन्त्रपदैष्षड्भिश्च वाङ्गानि। ध्यानम्—

मध्ये दुग्धाम्बुधेः श्वेतो नामास्ति द्वीपनायकः ।
लक्षयोजनविस्तारः तस्मिन्प्राकारसप्तकम् ॥

सर्वरत्नमयं तस्य मध्ये मण्डपमुज्ज्वलम् ।
सहस्ररत्नस्तम्भौघप्रत्युप्तमणिभास्वरम् ॥

तस्मिन्स्वर्णमयं पीठं पादैरष्टभिरुद्धृतम् ।
तस्योपर्यब्जमरुणं पत्रैर्दशशतैर्युतम् ॥

तस्मिन्ननन्तशय्यायां शयानां जगदीश्वरीम् ।
किरीटमकुटोल्लासिनीलकुञ्चितमूर्धजाम् ॥

उद्यन्नीहारकिरणबिम्बरम्यतराननाम् ।
ललाटतिलकीभूतस्वाहादीधितिमण्डलाम् ॥

चन्द्रभास्करबिम्बाभ्यां नयनाभ्यां विराजतीम् ।
मौक्तिकस्रगिवोल्लासिदन्तपङ्क्तिविराजिताम् ॥

हारग्रैवेयसंच्छन्नपीनोन्नतकुचद्वयाम् ।
कङ्कणाङ्कितरत्नाढ्ये वामे पाणिसरोरुहे ॥

विभ्राजमानं कमलं कम्पयन्तीं शनैश्शनैः ।
तस्मिन्नाहितनेत्रां तां जपारुणकलेबराम् ।
दक्षिणां बाहुलतिकां उपधानाहितामृजु ॥

लालयन्त्या कमलया क्षोण्या च चरणाम्बुजम् ।
मत्स्यकूर्मवराहादिमूर्तिभिर्दशभीरपि ॥

परितस्सेव्यमानां तां शोणवस्त्रानुलेपनाम् ।
ध्यात्वैवमरिसङ्घातमहावातानलां जपेत् ॥

ॐ ह्रीं दुं दुर्गां देवीं शरणमहं प्रपद्ये ॥ इति मन्त्रः ॥ बीजैस्सह पञ्चदशाक्षरः । विपन्मुक्तिप्रधानोयं मन्त्रः ॥ अथ पूजा—

पश्चिमसन्ध्यासमये पश्चिमवदनो विलिख्य यन्त्रमिदम् ।
संपूज्यास्मिन् देवीं दीपमुखे सन्नमेद्विपन्मुक्त्यै ॥

षट्कोणान्तस्थतारान्तः साध्यनाम समालिखेत् ।
द्वादशाक्षरमन्त्रार्णान् द्विशः कोणेषु चालिखेत् ॥

तत्सन्धिष्वङ्गमन्त्राणि परितो विलिखेत्पुनः ।
दशच्छदेषु पद्मस्य चतुरोर्णान्मनोरथ ॥

शिष्टानन्त्यदळे हलिभः परितश्च प्रवेष्टयेत् ।
स्वरांश्च यन्त्रसामान्याद्विलिखेत्कर्णिकान्तरे ॥

भूपुराश्रिचतुष्के तु द्वारशक्ति दुमालिखेत् ।[1]
यन्त्रमेतद्विष्णुशक्तेस्सर्वाभीष्टफलप्रदम् ॥

अस्यार्थः—प्रथमं षट्कोणं विलिख्य तन्मध्ये प्रणवं तन्मध्ये साध्यनाम तत्परितः स्वरान् विलिख्य, पुनः षट्कोणेषु दुर्गां देवीमित्यादि-द्वादशाक्षरीमन्त्रस्य वर्णान् द्वौ द्वौ विलिखेत् । कोणसन्धिष्वङ्गमन्त्रान् विलिख्य, तद्बहिर्दशदळपद्मं विलिख्य, तेषु तामग्निवर्णामित्यस्य (मन्त्रस्य) चतुरश्चतुरो वर्णान्विलिख्य, अवशिष्टमन्त्ये दळे च विलिख्य, तद्बहिः कादिवर्णैस्संवेष्ट्य, तद्बहिश्चतुरश्रं विलिख्य, तस्य कोणेषु प्रणवभुवनेश्वरी-दुर्गाबीजानि त्रीण्यपि सर्वत्र विलिखेत् । अस्मिन्यन्त्रे एकोनत्रिंशतिपटले वक्ष्यमाणजातवेदोमन्त्रस्य वक्ष्यमाणं पीठं संपूज्य अत्रावाह्य समर्चयेत् ॥

---

१ कोणसन्धिषु अङ्गमन्त्राणि इति ङ मातृकायां नूत्नतया योजितः पाठः ॥

अङ्गैः प्रथमावृतिः । चक्राय० शङ्खाय० नन्दकाय० खेटाय० शराय० चापाय० गदायै० शूलाय० वराय० अभयाय० अमृतघटाय० रत्नकुम्भाय० १२ इति द्वितीयावृतिः ।। जं जयायै० विं विजयायै० किं (कीं) कीर्त्यै० प्रीं प्रीत्यै० प्रं प्रभायै० श्रं श्रद्धायै० में मेधायै० श्रुं श्रुत्यै० ८ इति तृतीयावृतिः । ब्रह्मणे० विष्णवे० रुद्राय० इन्द्राय० इति दिक्षु वाण्यै० लक्ष्म्यै० उमायै० शचीदेव्यै० इति विदिक्षु स्वाहायै० स्वधायै० इति दक्षिणोत्तरयोः, इति चतुर्थ्यावृतिः । मातृभिः पञ्चमी । इन्द्रादिभिः षष्ठी । वज्रादिभिस्सप्तमी । एवं पूजाविधिः ॥

जपापारन्तितुलसीरक्ताब्जानीति मन्त्रवित् ।
आदाय सुरभीण्येव पुष्पाण्यन्यानि कामदा(तः) ॥

अथ सकलोपद्रवशान्तिप्रददुर्गामन्त्रप्रसङ्गात् दृष्टिदोषजिह्वादोषशान्तिकरो दुर्गामन्त्रः कल्पान्तरोक्तोत्र योग्यतावशात् लिख्यते —

ह्रीं दुं दुर्गे भगवति मनोगृहमन्मथमथ जिह्वापिशाचीरुत्सादयोत्सादय हितदृष्ट्यहितदृष्टिपरदृष्टिसर्पदृष्टिसर्वदृष्टिविषं नाशय नाशय हुंफट् स्वाहा इति मन्त्रः ॥

अथ जिह्वादोषशान्तिप्रदमन्त्रप्रसङ्गात् हस्ताभ्यामित्यृक् जिह्वादोषशान्तिकरी लिख्यते —

वसिष्ठऋषिः । नृचिग(द)नुष्टुप् छन्दः । विश्वेदेवा देवताः ॥

हस्ताभ्यां दशशाखाभ्यां जिह्वा वाचः पुरोगवी ।
अनामयित्नुभ्यां त्वा ताभ्यान्त्वोपस्पृशामसि ॥

इति मन्त्रः ॥ जिह्वादोषशान्तिर्भवति ॥

अथ दुर्गामन्त्रप्रसङ्गात् गाणिदुर्गायन्त्रं उच्चाटनकरं कल्पान्तरोक्तवत् योग्यतावशात् लिख्यते —

वायुमण्डलमालिख्य रुद्रबिन्दुयुतं ततः ।
तन्मध्ये वायुमालिख्य साध्यकर्मसमावृतम् ॥

सबिन्दून् क्रमशो वर्णान् मन्त्रस्यानलसंयुतान् ।
तद्बाह्ये वायुबीजेन परितो वेष्टयेद्बुधः ॥

तथैव वह्निबीजेन वेष्टयेद्रुद्रसंख्यया ।
दिशासु तद्बहिर्बिम्बं शूलयुक्तं तु पार्थिवम् ॥

शूलाग्रे वायुमालिख्य तन्मध्ये वायुमालिखेत् ।
सीसपट्टे समालिख्य निखनेत्साध्यमन्दिरे ॥

उच्चाटनं भवेत्सद्यः त्रिदिनात्प्राक् न संशयः ।

वायुमण्डलं षट्कोणम् ॥ दुं धुं क्षिं ववेनाश्वाविणिर्गादु ॥ इति गाणिदुर्गामन्त्रः ॥

अयमर्थः — प्रथमं षट्कोणं विलिख्य, तद्बहिरेकादशबिन्दुभिः परितो वेष्टयेत् । षट्कोणकर्णिकामध्ये यं इति विलिखेत् । तन्मध्ये साध्य-नामादियन्त्रन्यायान्विलिखेत् । पुनरेकादशबिन्दुषु गाणिदुर्गामन्त्रस्य वर्णान् बिन्दुयुक्तान् रं रं इत्यनलयुक्तांश्च (वेष्टितान्) विलिखेत् । पुनस्तद्बहिर्वृत्तद्वयं विलिख्य प्रथमे वृत्ते एकादशसंख्याकैर्वायुबीजैर्वेष्टयेत् । यं इति वायुबीजम् । पुनर्द्वितीये वृत्ते एकादशसंख्याकैरग्निबीजैर्वेष्टयेत् । रं इत्यग्निबीजम् । पुनस्तद्बहिश्चतुरश्रं विलिख्य तस्याग्रेषु शूलानि विलिख्य तस्याग्रे यं यं इति विलिख्य तन्मध्येपि यं यमिति विलिखेत् । एवं विलिख्य निखनेत् । उच्चाटनं भवति ॥

अथान्यमपि वक्ष्यामि प्रकारं भुवि दुर्लभम् ।
वायुमण्डलमालिख्य पूर्ववत् रुचिरं सुधीः ॥

तन्मध्ये वायुमालिख्य साध्यकर्मसमन्वितम् ।
वायव्यास्त्रेण संवेष्ट्य मन्त्रार्णान्वायुसंयुतान् ॥

बिन्दुषु क्रमशो लिख्यात् तद्बाह्येऽस्त्रेण वेष्टयेत् ।
तद्बाह्ये वायुनावेष्ट्य बीजमग्नेश्च तद्बहिः ॥

ततः पार्थिवमालिख्य तद्रेखास्वस्त्रमालिखेत् ।
कनके सीसपट्टे वा ताम्रपट्टेऽथवा लिखेत् ।
उच्चाटनं भवेत्सद्यः नात्र कार्या विचारणा ॥

अयमर्थः — प्रथमं षट्कोणं विलिख्य, तन्मध्ये यमिति विलिखेत् । तन्मध्ये साध्यनामादीन् विलिखेत् । पुनस्तद्बहिर्वायव्यास्त्रेण वेष्टयेत् । पुनस्तद्बहिरेकादशबिन्दून्परितो विलिख्य, तन्मध्ये यं यं इति सर्वत्र विलिख्य, तेषां मध्ये दुं धुं सित्रवेनाश्वाविणिर्गादु इत्येतान्यक्षराणि क्रमेण विलिखेत् । पुनस्तद्बाह्ये वायव्यास्त्रेण वेष्टयेत् । तद्बाह्ये यं यं इत्यनेन वेष्टयेत् । तद्बाह्ये रं रं इत्यनेन वेष्टयेत् । तद्बहिश्चतुरश्रं विलिख्य, तस्य रेखायां वायव्यास्त्रं विलिखेत् । एवं सीसपट्टे विलिख्य साध्यमन्दिरे निखन्यात् । शत्रोरुच्चाटनं भवति ॥

अथ वायव्यास्त्रमन्त्रो लिख्यते—यं य य ये यं ये यं य यं य यं यं ये यः ॥[1]
इति वायव्यास्त्रमन्त्रः सप्तदशार्णः ॥

---

१ यं य य ये यं ये यं ये यं य य यं य यं यं ये यः ॥ इति ख मातृकायां केवलं १७ वर्णो वायव्यास्त्रो दृश्यते । अन्यासु मातृकासु १४ अक्षरात्मक एव दृश्यते ॥ ख मातृकायामपि यं इति १५ तमः अक्षरः, सप्तदशार्णः इत्ययं भागश्च नूतनतया योजितः ॥

अथ वायव्यास्त्रप्रसङ्गात् वायुबीजमन्त्रमप्यत्र योग्यतावशाल्लिख्यते--

किष्किन्ध ऋषिः। त्रिष्टुप्छन्दः। महाभूतवायुर्देवता। यं इति मन्त्रः ॥

अथ वायुबीजप्रसङ्गात् अग्निबीजमप्यत्र लिख्यते-- अग्निबीजस्य काश्यप ऋषिः। गायत्रीछन्दः। वैश्वानराग्निर्देवता ॥ रं इति मन्त्रः ॥

अथाग्निबीजप्रसङ्गात् अमृतबीजमप्यत्र लिख्यते-- अमृतबीजस्य हिरण्यगर्भऋषिः ॥ अनुष्टुप्छन्दः। वरुणो देवता ॥ वं इति मन्त्रः ॥

अथ गाणिदुर्गादिमन्त्रप्रसङ्गात् भद्रकालीमन्त्रोपि कल्पान्तरोक्तश्च योग्यतावशात् लिख्यते--

भद्रकालीमन्त्रस्य ईश्वरऋषिः। त्रिष्टुप्छन्दः। श्रीभद्रकाली देवता। लां बीजम्। लीं शक्तिः। श्रीं कीलकम्। मम शत्रुसंहारार्थे विनियोगः। लामित्यादिषडङ्गम् ॥

या भस्मोध्दूळिताङ्गी भुजगपरिवृता व्याघ्रचर्मोत्तरीया
निर्मांसी मांसभक्षी विगतनरशिरोबन्धमाला कराळी।
चामुण्डा रक्तकर्णी शवशयनिरता बद्धमुण्डप्रचण्डा
निश्शङ्का कोटराक्षी भयदुरितहरी भद्रकाळी प्रसन्ना ॥

लां लीं लूं* काळि कपालि स्वाहा ॥ इति मन्त्रः ॥

अथ भद्रकालीमन्त्रान्तरं कल्पान्तरोक्तं लिख्यते--

ईश ऋषिः। पङ्क्तिश्छन्दः। भद्रकाळी देवता। भां बीजम्।

---

* काळी कपाली इति ख मातृकापाठः।
काळि कपाली इति ग, घ, ङ मातृकापाठः।

भीं शक्तिः । भूं कीलकम् । भद्रकालीप्रसादसिद्ध्यर्थे जपे विनियोगः । भां इत्यादिना करन्यासः । तेनैव षडङ्गं च ॥ ध्यानम् —

मातर्मे मधुकैटभघ्नि महिषप्राणापहारोद्यते
हेलानिर्मितधूम्रलोचनवधे हे चण्डमुण्डार्दिनि ।
निश्शेषीकृतरक्तबीजदनुजे नित्ये निशुम्भापहे
शुम्भध्वंसिनि संहराशु दुरितं दुर्गे नमस्तेऽम्बिके ॥

भं भद्रकाल्यै नमः ॥ इति मन्त्रः । रक्षाकरादौ प्रसिद्धाविमौ मन्त्रौ ॥

अथ भद्रकालीमन्त्रप्रसङ्गात् ज्वालाभिन्नभैरवीमन्त्रोपि कल्पान्तरे प्रोक्तोत्र योग्यतावशात् लिख्यते --

शक्तिसंमोहन ऋषिः । गायत्री छन्दः । ज्वालाभिन्नभैरवी देवता ॥ रां बीजम् । रीं शक्तिः । रूं कीलकम् ॥ रूं ज्वालाभिन्नभैरवि[1] अमुकामुकयोः परस्परविद्वेषणं कुरु कुरु स्वाहा ॥ इति मन्त्रः ॥ अनेन मन्त्रेण रक्तमयजलेन सन्ध्यायां तर्पयेत् । विद्वेषणं भवति ॥ विद्वेषणप्रधानोयं मन्त्रः ॥

अथ विद्वेषणमन्त्रप्रसङ्गात् वश्याकर्षणकरः शास्तृमन्त्रोपि योग्यतावशात् लिख्यते --

मदगजारूढ महाशास्त ललाटतिलक चषकहस्त नीलकञ्चुक लोकवश्याकर्षण ज्वालय ज्वालय तापय तापय वेगय वेगय शीघ्रमाकर्षयाकर्षय स्वाहा ॥ इति मन्त्रः ॥ अस्य यन्त्रमाह --

मान्तं नामयुतं द्विरेफसहितं [2]बाह्ये मूलावेष्टितं
तद्बाह्येऽग्निमरुत्पुरं च विलिखेत्ताम्बूलपात्रोदरे ।

---

१ भैरवी इति ग, घ मातृकापाठः ।

२ बाह्येकला इति ख, पाठः । स्वरा इति ङ, पाठः ।

लेखिन्या परपुष्टकण्टककृताश्वेतार्कदुग्धं [1] लिखेत्
तप्तं दीपशिखाग्निना त्रिदिवसाद्रम्भां समाकर्षति ॥

अस्यार्थः—प्रथमं (सबिन्दुकं) रेफद्वयं अन्तरन्तर्विलिखेत्। तदन्तर्यमिति विलिख्य तन्मध्ये साध्यनामादियन्त्रन्यायान् विलिखेत्। पुनस्तद्बाह्ये स्वरैर्वेष्टयेत्। तद्बाह्ये त्रिकोणं च तद्बाह्ये षट्कोणं च विलिखेत्। एवं ताम्बूलपत्रोदरे परपुष्टकण्टकेन विलिख्य श्वेतार्कक्षीरेण विलिख्य दीपे तापयेत्। एवं त्रिदिवसे कृते स्त्रियमाकर्षति। परपुष्टकण्टकम्-குயில் முள் ॥

अथ पूर्वतरोक्तभिन्नभैरवीमन्त्रप्रसङ्गात् सुखप्रसवकरयक्षिणीमन्त्रोपि लिख्यते—

ब्रह्मा ऋषिः। अनुष्टुप् छन्दः। यक्षिणी देवता।

हिमवत्युत्तरे पार्श्वे [2] सुरसा नाम यक्षिणी।
तस्या नूपुरशब्देन विशल्या भवतु गर्भिणी स्वाहा ॥

अनेन मन्त्रेण तैलं दूर्वाग्रेण स्पृष्ट्वा जप्त्वा गर्भिणीं प्राशयेत् प्रसववेदनासमये। शीघ्रं प्रसोष्यते ॥

अथ शीघ्रप्रसवार्थं मन्त्रान्तरमपि अत्र कल्पान्तरोक्तं योग्यतावशात् लिख्यते—

ओं क्षीं क्षौं क्षय इति मन्त्रः॥ तैले मायाबीजं विलिख्य, अनेन मन्त्रेण दूर्वाग्रेण स्पृष्ट्वा एकविंशतिवारं वा अष्टोत्तरशतवारं वा शीघ्रं अष्टोत्तरसहस्रवारं वा अभिमन्त्र्य तत्तैलं प्रसववेदनासमये स्त्रियं पाययेत्। प्रसोष्यते ॥

---

१ लिपेत् इति ङ, पाठः।

२ सुरधा इति ग, ङ, मातृकापाठः। सुरथा इति ख, पाठः।

अथ भुवनेश्वरी चतुरक्षरविधानमुच्यते —

अज ऋषिः । गायत्री छन्दः । भुवनेश्वरी देवता । ओं बीजम् । ह्रीं शक्तिः । ओं ह्रां हृत् । ओं ह्रीं शिरः । ओं ह्रूं शिखा । ओं ह्रैं कवचम् । ओं ह्रौं नेत्रम् । ओं ह्रः अस्त्रम् । ध्यानम् —

भास्वद्रत्नौघमौळिस्फुरदमृतरुचो रञ्जयच्चारुरेखां
सद्यस्सन्तप्तकार्तस्वरकमलजपाभासुराभिः प्रभाभिः ।
विश्वाकाशावकाशं ज्वलयदशिशिरं धर्तृपाशांकुशेष्टा-
भीतीनां भङ्गि तुङ्गस्तनमवतु जगन्मातुरार्कं वपुर्वः ॥

ओं ह्रीं हंसः इति मन्त्रः ऐश्वर्यारोग्यप्रधानोयं मन्त्रः । लक्षचतुष्कं जपः । त्रिमधुरसिक्ताभिः. पलाशसमिद्भिर्वा सरोजैर्वा दशांशं जुहुयात् ॥

अथास्यार्घ्यविधिश्च पूजाविधिश्चोच्यते —

समे सुमृष्टे रचयेद्विविक्ते शुद्धे तले स्थण्डिलमङ्गणस्य ।

तस्मिन् यजेत् पीठम् । प्रभूतायै० विमलायै० सुरायै० समाराध्यायै० परमसुखायै० इति पीठक्लृप्तेः पूर्वमेव अग्न्यादिष्वश्रीषु मध्ये च स्वयं यजेत् ॥ रां दीप्तायै० रीं सूक्ष्मायै० रूं जयायै० रें भद्रायै० रैं विभूत्यै रों विमलायै० रौं अमोघायै० रं विद्युतायै० रः सर्वतोमुख्यै० ९ ब्रह्मविष्णु-शिवात्मकसौराय योगपीठाय नमः । हृल्लेखाकमलासनाय नमः । इति सौर-पीठम् । अस्मिन् सौरपीठे समावाह्य हृल्लेखिकमर्कं समर्चयेत् ॥

हृल्लेखायै० गगनायै० रक्तायै० कराळिकायै० महोच्छुष्मायै० इति भुवनेश्वरीविधानोक्ताभिः शक्तिभिः प्रथमावृतिः ॥ अङ्गैः द्वितीयावृतिः ॥ मातृभिस्तृतीयावृतिः । सों सोमाय० बुं बुधाय०* गुं गुरवे० शुं शुक्राय०

*बृं बृहस्पतये इति ख, ग, घ, ङ पाठः ।

अं अङ्गारकाय० शं शनैश्चराय० रां राहवे० कें केतवे० इति चतुर्थ्यावृतिः ।। इन्द्रादिभिः पञ्चमी ।। एवमार्कं वपुश्शर्कित परिपूजयेत् ।। अर्घ्यविधानमतः परम् उपरिष्टात् सौराष्टाक्षरीविधाने लिख्यते ; तत्रैवानुसन्धेयम् ।।

अथ अजपाविधानमुच्यते —

ब्रह्मा ऋषिः । देवीगायत्री छन्दः । परमात्मा देवता । हं बीजम् । सः शक्तिः । हंसां हृत् । हंसीं शिरः । हंसूं शिखा । इत्यादि षडङ्गानि ।। ध्यानम् —

अरुणकनकवर्णं पद्मसंस्थं च गौरी-
हरनियमितचिह्नं सौम्यतानीरपातम् ।
भवतु भवदभीष्टप्राप्तये पाशटङ्का-
भयवरदविचित्रं सौम्यतानूनपातम् ।।

सोमाग्निस्वरूपम् । हंसः इति मन्त्रः । प्रयोगविशेषे सोहमिति च योजयेत् । द्वादशलक्षजपः । आज्यसिक्तेन पायसेन सहस्रं जुहुयात् । मोक्षारोग्यप्रधानोयं मन्त्रः ।।

अथ पूजार्थभुवनेशीचतुरक्षरोक्तसौरपीठं संपूज्य, प्राङ्मातृकावर्णोक्तवर्णौषधिष्वेकेन पाचितकषायेन कलशमापूर्य तस्मिन्नावाह्य समर्चयेत् । अङ्गैः प्रथमावृतिः ।। ओं ऋतात्मने० ओं वस्वात्मने० ओं परमात्मने० ओं नारात्मने० इति महादिक्षु, ऋतजायै० अब्जायै० गोजायै० अद्रिजायै० इति कोणेषु, एवं द्वितीयावृतिः ।। इन्द्रादिभिस्तृतीया । वज्रादिभिश्चतुर्थी । एवं संपूज्य कलशमभिषिच्य अर्घ्यमपि दद्यात् ।।

अथास्यैव मन्त्रस्य प्रयोगविशेष उच्यते —

विधाय लिपिपङ्कजं मनुयुतोल्लसत्कर्णिकं
निधाय घटमत्र पूरयतु वारिणा तन्मुखम् ।

पिधाय शशिनात्ममन्त्रयुतवामदोष्णा पुनः
सुधायितरसैस्स्वसाध्यमभिषेचयेत्तज्जलैः ॥

नारी नरो वा विधिनाऽभिषिक्तः
मन्त्रेण तेनेति विषद्वयोत्थैः ।
रोगैस्तथाधिप्रहितैर्वियुक्तः
चिराय जीवेत्करणैस्सुशुद्धैः ॥

अयमर्थः — एकपञ्चाशद्दळयुक्तपद्मं विलिख्य तेषु दळेषु मातृकावर्णान् एकैकं विलिखेत् । पुनस्तत्कर्णिकायां हंस इत्येनं मन्त्रं विलिख्य तत्र कर्णिकामध्ये घटं निधाय तं जलेन पूरयतु ॥ [1] वामहस्ततलमेव चन्द्रमण्डलमिति ध्यात्वा तेन हस्ततलेन हंस इत्यात्ममन्त्रजपपुरस्सरं घटमुखं पिधाय तज्जलं सुधायितं कृत्वा तेन सुधायितजलेन हंस इत्येतन्मन्त्रजपपुरस्सरं साध्यमभिषेचयेत् । तस्मात् विषद्वयोद्भवरोगशमनं चाधिशमनं चायुश्चान्तःकरणशुद्धिश्च भवति ॥

प्रयोगान्तरम् —

करेण तेनैव जलाभिपूरणं प्रजप्य मन्त्री घटकं पिधाय ।
सुधायितैस्तैर्विषिणं निषिञ्चेत् विषं निहन्यादपि कालकूटम् ॥

अयमर्थः — पूर्वोक्तेन वामहस्ततलेनैव जलपूर्णं घटं पिधाय हंस इत्येतन्मन्त्रं मन्त्री पदसूचितगरुडबीजपुरस्सरं जप्त्वा अमृतायितैस्तैर्जलैः विषग्रस्तमभिषिञ्चेत् । कालकूटमपि विषं नाशयति ॥ क्ष्रौं इति गरुडबीजम् ॥

प्रयोगान्तरम् —

गदितं निजपाणितलं विषिणः शिरसि प्रविधाय जलैः शितधीः ।

---

१ पुनः, वामहस्त इति ख, ग, ङ मातृकापाठः ।

अचिरात्प्रतिमोचयते विषतो मतिमानथ तक्षकदष्टमपि ॥

अयमर्थः— पूर्वोक्तवामहस्ततलमेव विषग्रस्तस्य शिरसि शशीति मत्वा निधाय मन्त्रजपध्यानपुरस्सरं जलैः सेचयेत् । तस्मात् शीघ्रं विषान्मुक्तो भवति ॥

अथ प्रयोजनतिलकाख्यसौरमन्त्रविधानमुच्यते —

देवभार्गव ऋषिः । गायत्री छन्दः । आदित्यो देवता । श्रीं बीजं । सः शक्तिः । ह्रां हृत् । ह्रीं शिरः । इत्याद्यङ्गानि ॥ ध्यानम् —

अरुणसरोरुहसंस्थः त्रिदगरुणोऽरुणसरोजयुगलधरः ।
करकलिताभयवरदो द्युतिबिम्बोऽमितभूषणस्त्रिनोऽवतु नः ॥

ह्रां ह्रीं सः इति मन्त्रः ॥

गुह्यादाचरणतलं कण्ठादागुह्यमागळं कान्तात् ।
विन्यस्य मन्त्रवर्णान् क्रमेण मन्त्री करोतु चाङ्गविधिम् ॥

द्वादशलक्षं जपेत् । आज्यसिक्तैरन्नैर्वा त्रिमधुरसिक्तैस्तिलैर्वा द्वादशसहस्रं जुहुयात् । पुरश्चरणाहोमः ॥

अथ पूजाविधिः —

प्राक् भुवनेश्वरीचतुरक्षरविधानोक्तसौरपीठे पुरश्चरणाकलशं संपूर्य समावाह्य समर्चयेत् ॥ अङ्गैः प्रथमावृतिः ॥ सोमाद्यष्टग्रहैः द्वितीयावृतिः ॥ तत्र विशेष उच्यते —

प्रागादिदिशासंस्थाः शशिबुधगुरुभार्गवाः क्रमेण स्युः ।
आग्नेयादिष्वश्रिषु [1] धरणिजमहाहिकेतवः पूज्याः ॥

---

१ धरणिज इति स्थाने धरेनज इति पाठो युक्त इति भाति । धरेनज इत्यस्य धराजः इनजश्चेत्यर्थः ॥

एतेषां ग्रहाणां वर्णादीनि तदायुधानि चोच्यन्ते —

शुभ्रसितपीतशुक्ला रक्तासितधूम्रकृष्णकाः क्रमशः ।
चन्द्राद्याः केत्वन्ताः वामोरुन्यस्तवामकरलसिताः ॥

अपरकराभयमुद्राः विकृतमुखोहिः कराहिताञ्जलियुक् ।
दंष्ट्रोग्रास्यो मन्दः सुवर्णसदृशांशुकादिभूषश्च ॥

एवमष्टग्रहैस्संपूज्य (जयेत्)॥ पुनर्लोकेशैः तृतीयावृतिः ॥

अथ प्रयोगः —

संपूज्यैवं विधिना विधिवद्गोरोचनादिभिर्द्रव्यैः ।
दद्यादर्घ्यं रवये मन्त्री निजवाञ्छितातये मुक्त्यै ॥

गोरोचनादिद्रव्याण्युच्यन्ते —

गोरोचनास्रतिलवैणवराजिरक्त-
शीताख्यशालिकरवीरजपाकुशाग्रान् ।
श्यामाकतण्डुलयुतांश्च यथाप्रलाभान्
संयोज्य भक्तिभरितोऽर्घ्यविधिर्विधेयः ॥

अस्यार्थः-आस्रं कुंकुमम् । वैणवं तण्डुलमिति शेषः । रक्तं रक्तचन्दनम् । शीतं कर्पूरादि ॥

प्रयोगान्तरम् —

कृत्वा मण्डलमष्टपत्रलसितं तत्कर्णिकायां तथा
पत्राग्रेषु विधाय कुम्भनवकं तत्पूरयित्वा जलैः ।
आवाह्य क्रमशो ग्रहान्नव समाराध्याभिषेकक्रियां
कुर्याद्यो ग्रहवैकृतानि विलयं यान्त्यस्य लक्ष्मीर्भवेत् ॥

अयमर्थः — अष्टपत्रं पद्मं पिष्टभूततण्डुलैः दर्भाग्रेण विलिख्य, तद्दळाग्रेषु च कर्णिकायां च पीठपूजापुरस्सरं नव कुम्भान् जलपूर्णान् निधापयेत् ॥ पुनस्तेषु मध्यस्थकुम्भमारभ्य पूर्वादिक्रमेण आदित्यादिनवग्रहान् समावाह्य, अनेन सौरविधानेन समर्च्य, साध्यं समभिषिञ्चेत् ॥ अनेन पिशाचादिग्रहपीडा ग्रहदोषपीडा च नश्यति, लक्ष्मीर्भवेच्च ॥

प्रयोगान्तरम् -- अथ ग्रहयज्ञप्रकारमाह --

ग्रहपरिवृतमिष्ट्वा पूर्वक्लृप्त्या दिनेशं
प्रतिजुहुत निजर्क्षे वैकृते वा ग्रहाणाम् ।
शुभमतिरुपरागे चन्द्रभान्वोः स्वभे वा
रिपुनृपजभये वा घोररूपे गदे वा ॥

अर्कद्विजाङ्घ्रिपमयूरकपिप्पलाश्च सोदुम्बराः खदिरशम्यभिधास्सदूर्वाः ।
दर्भाह्वयाश्च समिधोष्टशतं क्रमेण सर्पिर्हविर्घृतयुताः पृथगेव च स्युः ॥

आज्याहुत्याथादावन्ते च व्याहृतिभिरपि जुहुयात् ।

सोमादीनां दिशि दिशि समाधाय वह्निं यथावत्
होमे सम्यक् कृतवति मुदं यान्ति सर्वे ग्रहाश्च ।
युद्धे सम्यक् जयमपि रुजश्शान्तिमायुश्च दीर्घं
कृत्या शान्तिं व्रजति पुनरेकत्र वा सर्वहोमः ॥

ग्रहपरिवृतमित्यादिग्रन्थानामयमर्थः — निजजन्मनक्षत्रदिने वा ग्रहाणामवस्थितिवैषम्यकाले वा जन्मनक्षत्रे चन्द्रसूर्यग्रहणकाले वा अन्यस्मिन् शुभदिने वा शत्रुभये वा घोरव्याधिभये वा अग्निं संस्थाप्य ग्रहयज्ञोक्तेन आसत्येनेत्यादिमन्त्रेण वा नामभिर्वा सूर्यं समावाहयेत् ॥ पुनस्तस्याग्नेः प्रागादिदिक्षु पृथक् पृथक् अग्निं संस्थाप्य तेषु क्रमेण शशिबुधगुरुशुक्रान् क्रमेण आप्याय-

स्वेत्यादिना तस्य तस्योक्तेन मन्त्रेण वा तत्तन्नामभिर्वा संपूज्य पुनराग्नेयादि-कोणेष्वग्निं संस्थाप्य तेषु क्रमेण अङ्गारकशनैश्चर राहुकेतून् क्रमेण तत्तन्मन्त्रैः संपूज्य पूर्वमाज्येन प्रणवपूर्वकव्याहृतिभिः तत्र तत्र हुत्वा पुनरर्कादिभिः दर्भान्ताभिः समिद्भिरुक्तैरेकैकैः अष्टोत्तरशतसंख्यं तत्तन्मन्त्रेण तत्र तत्र हुत्वा पुनः तत्तद्द्रव्ययुक्तेन हविषा च तत्तन्मन्त्रैः तत्र तत्र तावध्दुत्वा पुनराज्येन तत्तन्मन्त्रैः तत्र तत्र तावदेव हुनेत् ।। पुनर्व्याहृतिपूर्वकप्रणवेनाज्यं तत्र तत्र हुनेत् ।। तत्र तु अनेकत्राग्निं संस्थाप्य जुहोति चेदनेककर्तृभिर्होतव्यश्च । अथवा एककर्ता जुहोति चेत् एकस्मिन्नेवाग्नौ सर्वानपि ग्रहान् समावाह्य स एव कर्ता सर्वैर्द्रव्यैर्हुनेच्च ।। एवंभूते उक्तफलं भवति ।। अर्क–रुयी எருக்கு द्विजाङ्घ्रिपं – पलाशं புரசு । मयूरकं – अपामार्गं நாயுருவி पिप्पलं अश्वत्थम् அரசு खदिरं खैरं கருங்காலி शमी – शमी வன்னி.

अस्य सौरमन्त्रस्य फलश्रुतिः —

अमुना विधिना हुतार्चनाद्यैः प्रभजेद्यो दिनशो नरो दिनेशम् ।
मणिभिस्सधनैश्च धान्यवर्यैः परिपूर्णावसथो भवेच्चिराय ।।

अथ सौराष्टाक्षरविधानमुच्यते —

*देवभार्गव ऋषिः । गायत्री छन्दः । आदित्यो देवता । ओं बीजम् । ह्रीं शक्तिः । ओं सत्यतेजो ज्वलज्वालामणि हुंफट् स्वाहा हृत । ओं ब्रह्मतेजो ज्वलज्वालामणि हुंफट् स्वाहा शिरः । ओं विष्णुतेजो ज्वलज्वालामणि हुंफट् स्वाहा शिखा । ओं रुद्रतेजो ज्वलज्वालामणि हुंफट् स्वाहा कवचम् । ओं वह्नितेजोज्वलज्वालामणि हुंफट् स्वाहा नेत्रम् । ओं सर्वतेजोज्वल-ज्वालामणि हुंफट् स्वाहा अस्त्रम् ।। ध्यानम् —

---

* देवभागऋषिः इति ख–ङ मातृकापाठः ।

अरुणोऽरुणपङ्कजे निषण्णः कमलेऽभीतिवरौ करैर्दधानः ।
स्वरुचाऽहितमण्डलस्त्रिणेत्रः रविराकल्पशताकुलोऽवताद्वः ॥

ओं घृणिः सूर्य आदित्य इति मन्त्रः ॥ आरोग्यप्रधानोयं मन्त्रः ॥

अथ न्यासः— अं आदित्याय नमः । इं रवये नमः । उं भानवे नमः । ऋं भास्कराय नमः । लं सूर्याय नमः ॥ एताः पञ्चमूर्तयः ॥ सशिरोमुखहृदयगुह्यचरणेषु क्रमश एव मन्त्रितमः । एतेषु स्थानेषु न्यसेत् ॥ पुनः

सशिरोमुखगळहृदयोदरनाभिशिवांघ्रिषु प्रविन्यसेत् ।
प्रणवाद्यैरष्टार्णैः क्रमेण सोयं तदक्षरन्यासः ॥

ओं घृं नमः इत्यादि । अष्टलक्षं जपेत् । त्रिमधुरसिक्ताभिः क्षीरद्रुमसमिद्भिर्वा घृतसिक्तैरन्नैर्वा अष्टसहस्रं जुहुयात् । पुरश्चरणाहोमः ॥

अथ पूजाविधिः—

प्राग्भुवनेश्वरीचतुरक्षरीविधानोक्तसौरपीठं संपूज्य, तस्मिन्सौरपीठे पुरश्चरणाकलशं शुद्धाद्भिस्संपूर्य, रक्तवासोयुगेन संवेष्टय, दिनेशं संपूजयेत् ॥ अङ्गैः प्रथमावृतिः ॥ आदित्यायेति मध्ये पूजयेत् ॥ रव्यादयश्चत्वारो दिक्षु ॥ रवये० भानवे० भास्कराय० सूर्यायेति ॥ उषायै० प्रज्ञायै०प्रभायै० सन्ध्यायै० इति विदिक्षु ॥ इति द्वितीयावृतिः ॥ ब्राह्म्यै० माहेश्वर्यै० कौमार्यै० वैष्णव्यै० वाराह्यै० इन्द्राण्यै० चामुण्डायै० अरुणाय नमः ८ ॥ तत्र अरुणमग्रे । इति तृतीयावृतिः ॥ शशिने० बुधाय० बृहस्पतये० शुक्राय० एते प्रागादिदिक्षु । अङ्गारकाय० मन्दाय० राहवे० केतवे० इत्याग्नेयादिकोणेषु ॥ एतान् सूर्यपरिषदे इत्यन्तत्वेन समर्चयेत् ॥ एतेषां ग्रहादीनां वर्णान्युच्यन्ते ॥

शुभ्रसितपीतशुक्लारक्तासितधूम्रकृष्णकाः क्रमशः ।
चन्द्राद्याः केत्वन्ताः वामाङ्कन्यस्तवामकरलसिताः ॥

अपरकराभयमुद्रा विकृतमुखोऽहिः कराहिताञ्जलियुक् ।
दंष्ट्रोग्रास्यो मन्दः सुवर्णसदृशांशुकादिभूषश्च ॥

एतैर्ग्रहैश्चतुर्थ्यावृतिः ॥ इन्द्राय सुराधिपतये सूर्यपारिषदाय० अग्नये तेजोधिपतये सूर्यपारिषदाय नमः इत्यादिभिः लोकेशैः पञ्चमी ॥ एवं कलशं संपूज्य तत्स्पृष्ट्वा यथाशक्ति जप्त्वा हुत्वा अनेनाभिषिच्य, द्वादशसंख्यं वसु वस्त्रं च गुरवे दत्वा, द्वादशसंख्याकान् ब्राह्मणान् भोजयेच्च ॥ पुनः प्राक् भुवनेशीचतुरक्षरविधानोक्तप्रकारेण सूर्यार्घ्यं दद्यान्नित्यशस्तद्वारे वा ॥

अथ सूर्यार्घ्यप्रदानप्रकारमाह — उक्तप्रकारेण सूर्यं संपूज्य पुनः प्रतिपूज्य शक्तिमिति तत्र पुनः,

प्रणिधाय ताम्ररचितं चषकं प्रजपेन्मनुं प्रतिगतक्रमतः ।
परिपूरयेत्सुविमलैस्सलिलैः ... ... ... ... ॥

अक्षतयवकुशदूर्वातिलसर्षपकुसुमचन्दनोपेतैः ।
प्रस्थग्राह्यच्छिद्रं स्वैक्यं संभावयेत् समाहितधीः ॥

इष्ट्वा दिनेशमथ पीठगतं तथैव व्योमस्थितं परिवृतावरणं विलोक्य ।
अष्टोत्तरं शतमथ प्रजपेन्मनुं तं पूर्णोदकं निजकरेण पिधाय पात्रम् ॥

भूयोऽभ्यर्च्य सुधामयं जलमथो तद्गन्धपुष्पादिभिः
जानुभ्यामवनीं गतश्चषकमप्यामस्तकं प्रोद्धरन् ।
दद्यान्मण्डलबद्धदृष्टिहृदयो भक्त्यार्घ्यमोजोबल-
ज्योतिर्दीप्तियशोधृतिस्मृतिकरं लक्ष्मीप्रदं भास्वते ॥

अथ कृतपुष्पाञ्जलिरपि पुनरष्टशतं प्रजपेन्मन्त्री ।

यावद्रश्मिषु भानोः व्याप्नोत्यम्भस्सुधामयं तदपि ॥

अमृतमयजलावसिक्तगात्रो दिनपतिरप्यमृतत्वमातनोति ।
सधनविभवदारपुत्रमित्रं पशुगणजुष्टमनन्तभोगयोगी ॥

तस्मादिनाय दिनशो ददतां दिनादौ दैन्यापनोदितनवे दिनवल्लभाय ।
अर्घ्यं समग्रविभवस्त्वथवार्कवारे पारं स गच्छति भवाह्वयवारिराशेः ॥

एवं भजन् निचितेन्द्रियः नीरुक् च भवति ॥

इति प्रपञ्चसारसारसंग्रहे गीर्वाणेन्द्रविरचिते
चतुर्दशः पटलः ॥



## ॥ अथ पञ्चदशः पटलः ॥

---

अथ सौराष्टाक्षरमन्त्रप्रसङ्गात् मन्त्रसारोक्तं सौराष्टाक्षरयन्त्रमपि लिख्यते-

त्रैकोणोदरतारपङ्क्तिपरितःकोणेषु मायावृतं
कोणाग्रस्थितमष्टपत्रलिखितप्रोल्लासिताष्टाक्षरम् ।
बाह्येष्वावृतमातृकं कुवलये वेदादिमायावृतं
यन्त्रं क्षुद्रविग्रहज्वरहरं सौरं समस्तप्रदम् ॥

अस्यार्थः — प्रथमं त्रिकोणं विलिख्य, तदन्तः प्रणवं विलिख्य, तदन्तः ह्रीमिति विलिखेत् । पुनः त्रिषु कोणेष्वपि ह्रीमिति विलिखेत् ॥ पुनः प्रणवोदरगतशक्तिमध्ये साध्यनामादीन् विलिखेत् ॥ तद्बहिरष्टदळं पद्मं विलिख्य तेषु प्रागादिक्रमेण घृणिस्सूर्य आदित्य इत्यस्यैकैकमक्षरं विलिखेत् । तद्बहिर्मातृकावर्णैर्वेष्टयेत् ॥ तद्बहिश्चतुरश्रं विलिख्य प्रणवं दिक्षु भुवनेशीं विदिक्षु विलिखेत् ॥ एवं विलिख्य धृते उक्तफलं भवति ॥

अथ सौरमन्त्रप्रसङ्गात् सौरविषयमुद्यन्नद्येत्यृचोयन्त्रमपि मन्त्रसारोक्तं योग्यतावशादत्र विलिख्यते —

प्रणवं साध्यसमेतं विलिख्य षट्कोणकर्णिकामध्ये ।
ओंह्रीं हंसः सोहं षड्वर्णानालिखेच्च कोणेषु ॥

केसरविलसत्सौरीचतुर्णे दळचतुष्टये चापि ।
उद्यन्नद्याद्यायाः पादचतुष्कं त्वृचोष्टपत्रे च ॥

केसरराजत्सौरे वसुवर्णे शुकेष्वृचोरष्टौ ।
पादानालिख्य बहिः लिप्या चावेष्ट्य कुगृहकोणेषु ॥

चतुरक्षरस्य च मनोः सौरस्यैकैकमक्षरं विलिखेत् ॥

एतद्यन्त्रं कुष्ठज्वरशूलाद्यान् विनाशयेद्रोगान् ।
विधृतं प्रथयति तेजो लक्ष्मीशोभाधृतिप्रतापाद्यान् ॥

अङ्गणभूमावेतद्रजोभिरालिख्य तत्र दिननाथम् ।
संपूज्यार्घ्यं दद्यात् लक्ष्म्यै कुष्ठज्वरादिशमनाय ॥

रोगघ्नयन्त्रमिदमेव विलिख्य ताम्रे
संस्थापितं निजगृहे विधिवत्प्रपूज्य ।
हन्याच्च कुष्ठमुखरोगपरंपरां वा
विस्मृत्यपस्मृतिभवानथवा विकारान् ॥

आलिख्य चैतत्कलधौतपट्टे तैले विनिक्षिप्य सहस्रसंख्यम् ।
जप्त्वा तदभ्यक्ततनोर्नरस्य कुष्ठादिरोगा विलयं प्रयान्ति ॥

इदमेव विलिख्य यन्त्रवर्यं नवनीते त्रितयं प्रजप्य चर्चाम् ।
परिभक्षयतां तदेव शूलं विषमं जाठरमाशु नाशमेति ॥

अस्यार्थः——प्रथमं षट्कोणं विलिख्य, तन्मध्ये प्रणवं विलिख्य, तन्मध्ये साध्यनामादियन्त्रन्यायान्विलिखेत् । पुनः षट्कोणेषु ओं ह्रीं हंसः सोहमित्येतान्विलिखेत् ॥ पुनस्तद्बहिः चतुर्दळपद्मं विलिख्य तत्केसरेषु ओं ह्रीं हंस इति सौरचतुर्णान् विलिखेत् ॥ पुनस्तद्दळमध्ये उद्यन्नद्यमित्रमहः इति पूर्वदळे विलिखेत् । आरोहन्नुत्तरां दिवं इति दक्षिणदळे । हृद्रोगं मम सूर्य इति पश्चिमदळे । हरिमाणं च नाशय इत्युत्तरदळे विलिखेत् ॥ पुनस्तद्बहिरष्टपत्रं पद्मं विलिख्य तत्केसरेषु घृणिस्सूर्य आदित्य इति एतानि सौराष्टाक्षराणि विलिखेत् ॥ पुनः तद्दळमध्येषु शुकेषु मे हरिमाणं इति पूर्वदळे, रोपणाका सुदध्मसीति द्वितीये दळे विलिखेत् । अथो हारिद्रवेषु मे इति

तृतीये दळे, हरिमाणं निदध्मसि इति चतुर्थे, उदगादयमादित्यः इति पञ्चमे, विश्वेन सहसा सहेति षष्ठे, द्विषन्तं मम रन्धयन् इति सप्तमे, मो अहं द्विषतो रधं इत्यष्टमे दळे विलिखेत् ॥ पुनस्तद्बहिर्वृत्तं विलिख्य तस्मिन्मातृकावर्णैर्वेष्टयेत् ॥ पुनस्तद्बहिश्चतुरश्रं विलिख्य, तत्कोणेषु ओं ह्रीं हंस इति विलिखेत् ॥ एवं ताम्रादिपट्टे विलिख्य धृते रोगादीन् शमयेत्, तेजोलक्ष्म्यादीन्विस्तारयति च ॥

अङ्कणभूमौ रजन्यादिचूर्णैः विलिख्य सूर्यं संपूज्यार्घ्यं दद्यात् ॥ लक्ष्म्यादि-फलार्थं ताम्रादिपट्टे विलिख्य गृहे निखन्याद्वा । कुष्ठादिरोगशान्तिर्भवति ॥ स्वर्णपट्टे विलिख्य तैले विनिक्षिप्य स्पृष्ट्वा, उद्यन्नद्य मित्रमहः, शुकेषु मे हरिमाणं, उदगादयमादित्यः, इत्यृचां त्रितयं सहस्रसंख्यं जप्त्वा तदभ्यज्यात् । कुष्ठादिशमनं भवति ॥ नवनीते विलिख्य नित्यं ऋचो जप्त्वा भक्षयेत् । उदरगतं शूलरोगं शमयेत् ॥

अथ सौरयन्त्रप्रसङ्गात् ग्रहशान्तियन्त्रमपि मन्त्रसारोक्तं योग्यता-वशाल्लिख्यते —

आसत्येनेत्यृचा तारं कर्णिकामध्यसंस्थितम् ।
साध्यगर्भं समावेष्ट्य प्राग्दळे विलिखेत्ततः ॥

आप्यायस्वेत्यृचं याम्ये उद्बुध्यस्वेति पश्चिमे ।
बृहस्पते ऋचं सौम्ये प्रवश्शुक्राय इत्यपि ॥

आग्नेयकोणगे पत्रे अग्निर्मूर्धेति नैर्ऋते ।
शन्नो देवीत्यृचं पत्रे वायव्यकोणगे ततः ॥

कयानश्चित्र इत्यैशे केतुं कृण्वन् ऋचं दळे ।
तद्बाह्ये मातृकावर्णैः संवेष्ट्य कुगृहाश्रिषु ॥

ओं ह्रीं हंसाक्षरान्दिक्षु सोहं हंसाक्षरान् लिखेत् ।
स्वर्णादिपट्टेष्वालिख्य यन्त्रमेतद्यथाविधि ॥

अभिषिक्तं शुभैस्तोयैः कृतपुण्याहमण्डलम् ।
कर्णिकायां क्रमादर्च्याः प्रागाद्यष्टदळेषु च ॥

सूर्येन्द्वङ्गारसौम्यार्किजीवाहिभृगुकेतवः ।
सुजप्तसिक्तसंपातं स्वस्वमन्त्रैर्यथाविधि ॥

ग्रहपीडाप्रशमनं कृत्याज्वरविनाशनम् ।
सर्वामयहरं श्रीदं समरे विजयप्रदम् ॥

आयुष्करं पुत्रदं च परचक्रनिवारणम् ।
किमत्र बहुनोक्तेन वाञ्छितार्थप्रदं नृणाम् ॥

अस्यार्थः — प्रथममष्टदळं विलिख्य तत्कर्णिकायां प्रणवं विलिख्य, तन्मध्ये साध्यनामादियन्त्रन्यायान् विलिखेत् ॥ पुनस्तत्तारं आसत्येन रजसा वर्तमान इत्यनया ऋचा वेष्टयेत् ॥ पुनः प्राग्दळे आप्यायस्वेत्यृचं विलिखेत् । पुनर्याम्ये दळे उद्बुध्यस्वाग्ने प्रति इत्यृचं विलिखेत् । पुनः पश्चिमे दळे बृहस्पते अतियदर्यो इत्यृचं विलिखेत् । पुनस्सौम्ये दळे प्रवश्शुक्राय भानव इत्यृचं विलिखेत् ॥ पुनराग्नेये दळे अग्निर्मूर्धा दिव इत्यृचं विलिखेत् । पुनः नैर्ऋतिदळे शन्नो देवीरभिष्टय इत्यृचं विलिखेत् । पुनर्वायव्ये दळे कयानश्चित्र आभुव इत्यृचं विलिखेत् । ऐशे दळे केतुं कृण्वन्न केतवे इत्यृचं विलिखेत् ॥ पुनस्तद्बहिः वृत्तं विलिख्य मातृकावर्णैर्वेष्टयेत् ॥ पुनस्तद्बहिश्चतुरश्रं विलिख्य, तत्कोणेषु ओं ह्रीं हंस इति सौरचतुरक्षरं विलिखेत् ॥ पुनश्चतुर्दिक्षु सोहं हंस इति विलिखेत् ॥ एवं स्वर्णादिपट्टेष्वालिख्य अभिषिच्य पुण्याहप्रोक्षणं च कृत्वा तत्तन्मन्त्रैर्हुत्वा तस्मिंस्तस्मिन् दळे संपातस्पर्शं च कृत्वा तत्तन्मन्त्रैर्जप्त्वा धारयेत् ॥ उक्तफलं भवति ॥

अथ चन्द्रमनुविधानमुच्यते —

अत्रि ऋषिः । पङ्क्तिश्छन्दः । सोमो देवता । सों बीजम् । आय शक्तिः । सां हृत् । सीं शिरः । सूं शिखा । सैं कवचम् । सौं नेत्रम् । सः अस्त्रम् । ध्यानम् —

विमलकमलसंस्थः सुप्रसन्नाननेन्दुः
वरदकुमुदहस्तः चारुहारादिभूषः ।
स्फटिकरजतवर्णो वाञ्छितप्राप्तये वो
भवतु भवदभीष्टद्योतिताङ्गश्शशाङ्कः ॥

सों सोमाय नमः ॥ इति मन्त्रः । सकारत्रयोदशस्वर बिन्दुभिः प्रथमं बीजम् । ऐश्वर्यप्रधानोयं मन्त्रः । षड्लक्षं जपेत् । पञ्चमी दशमी-पञ्चदशीषु तु विशेषः ॥

अयुतं प्रजपेन्मन्त्रं सायान्हेऽभ्यर्च्य भासितम् ।
पयोन्नेन हुनेद्भूयः सघृतेन सहस्रकम् ॥

अयमर्थः—उक्तदिनेष्वयुतं सायान्हे जप्त्वा सोमं संपूज्य घृतसिक्तेन क्षीरान्नेन सहस्रं हुनेत् । पुरश्चरणाकाले एवं कृत्वा षल्लक्षं पुरश्चर्य पुनराज्य-सिक्तेन पायसेन षट्सहस्रं हुनेत् ॥ पुरश्चरणाहोमः ॥

अथ पूजाविधिः — गुं गुरुभ्यो नमः इत्यारभ्य, अं सूर्यमण्डलाय नमः । उं सोममण्डलाय नमः । इति व्युत्क्रमेण सोमान्तं पीठं संपूज्यावाह्य समर्चयेद्विधुम् ॥

राकायै० कुमुद्वत्यै० नन्दायै० सुधायै० संजीवन्यै० क्षमायै० आप्यायिन्यै० चन्द्रिकायै० ह्लादिन्यै० ९ इति पीठनवशक्तयः ॥ अस्मिन्नावाह्याङ्गैः केसरेषु

समर्चयेत् । इति प्रथमावृतिः ।। रोहिण्यै० कृत्तिकायै० रेवत्यै० भरण्यै० राज्यै० आर्द्रायै० ज्योत्स्नायै० कलायै० ८ इति दळमध्ये शक्तयः ।।

फुल्लकुन्दावभासास्तास्तारहारविभूषिताः ।
सितमाल्याम्बरोपेता रचिताञ्जलयो मताः ।।

इति द्वितीयावृतिः ।। आदित्याय० बुधाय० बृहस्पतये० शुक्राय० अङ्गारकाय० मन्दाय० राहवे० केतवे० ८ इति दळाग्रेषु ।। इति तृतीयावृतिः ।। लोकेशैश्चतुर्थी ।। एवं सुसितैः गन्धकुसुमैः पात्रैः रूप्यमयैश्च समर्चनाविधिः ।।

अथ प्रयोगविधिः--

इति सिद्धमनुर्मन्त्री शशिनं मूर्ध्नि चिन्तयन् ।
त्रिसहस्रं जपेद्रात्रौ मासान्मृत्युंजयो भवेत् ।।

अयमर्थः— शशिनं स्वमूर्ध्नि संचिन्त्य रात्रौ ब्लौंपुटितं मन्त्रं नित्यशः त्रिसहस्रं जपेत् ।। एवं मासत्रये कृते मृत्युञ्जयो भवति ।।

अनेन चन्द्रमनुना प्रयोगान्तरमुच्यते—

हृदयाम्भोजसंस्थं तं भावयन् प्रजपन्मनुम् ।
राज्यैश्वर्यं वत्सरेण प्राप्नुयादप्यकिञ्चनः ।।

दिनेदिने त्रिसहस्रजपः श्रीबीजपुटितः कर्तव्यः ।।

प्रयोगान्तरम्—

आहाराचारनियतो जपेल्लक्षचतुष्टयम् ।
असंशयतरं तेन निधानमपि लभ्यते ।।

प्रयोगान्तरम् —

घोरा ज्वरा गराः शीर्षरोगाः कृत्याश्च कामिलाः ।
तन्मन्त्रायुतजापेन नश्यन्ति सकलापदः ॥

अथ सोमार्घ्यविधानमुच्यते —

त्रितयं मण्डलानां तु कृत्वा पश्चाच्च पूर्वतः ।
आसीनः पश्चिमे मध्यसंस्थे द्रव्याणि विन्यसेत् ॥

पूर्वस्मिन्पङ्कजोपेते पूर्ववत्सोममर्चयेत् ।
राकायामुदये राज्ञो निजकार्यं विचिन्तयन् ॥

*तत्र राकायां पौर्णमास्यां संस्थाप्य राजतं तत्र चषकं परिपूरयेत् ॥

गव्येन शुद्धपयसा स्पृष्टपात्रो मनुं जपेत् ।
अष्टोत्तरशतावृत्त्या दद्यादर्घ्यमथेन्दवे ॥

विद्यामन्त्रेण मन्त्रज्ञः यथावत्तद्गतात्मना ।
विद्ये विद्यापदे प्रोक्त्वा मालिनीति च चन्द्रिणी ॥

चन्द्रमुख्यग्निजायान्तं निगदेत्प्रणवादिकम् ।

अस्यार्थः -- ओं विद्ये विद्यामालिनी चन्द्रिणी चन्द्रमुखी स्वाहा इत्यर्घ्यमन्त्रः ॥

प्रतिमासं च षण्मासात् सिद्धिमेष्यति कांक्षिताम् ।
इष्टाय दीयते कन्या कन्यां विन्देन्निजेप्सिताम् ॥

---

*तत्र + पूरयेत् अनेन वाक्येन, 'तत्र संस्थाप्य चषकं राजतं परिपूरयेत्' । इति श्लोकार्धात्मना भवितव्यमिति भाति ॥

अमितां श्रियमाप्नोति कान्ति पुत्रान्यशः पशून् ।
सोमार्घ्यदानाल्लभते दीर्घमायुश्च विन्दति ॥

अथाग्निमन्त्रविधानमुच्यते —

भृगु ऋषिः । गायत्री छन्दः । अग्निर्देवता । ओं बीजम् । स्वाहा शक्तिः । सहस्रार्चिषे नमः हृत् । स्वस्तिपूर्णाय नमः शिरः । उत्तिष्ठ पुरुषाय शिखा । धूमव्यापिने नमः कवचम् । सप्तजिह्वाय नमः नेत्रम् । धनुर्धराय नमः अस्त्रम् ॥ स्वाहान्तेन व्याहृतित्रयेण द्विरावृत्त्या वा षडङ्गानि ॥ ध्यानम् —

शक्तिस्वस्तिकपाशान् साङ्कुशवरदाभयान् दधत्त्रिमुखः ।
मुकुटादिविविधभूषोऽवताच्चिरं पावकः प्रसन्नो वः ॥

ॐ भूर्भुवस्स्वस्स्वाहा इति सप्तार्णोयं मन्त्रः ॥ ऐश्वर्यप्रधानोयं मन्त्रः ॥ षल्लक्षजपः ॥

अथ पूजा —

प्रथमं षट्कोणं विलिख्य तद्बहिस्त्रिकोणं विलिखेत् ॥ एतदग्निपीठम् । अस्मिन्पीठे, पीतायै० श्वेतायै० अरुणायै० कृष्णायै० धूम्रायै० तीव्रायै० स्फुलिङ्गिन्यै० रुचिरायै० ज्वालिन्यै० ९ इति नवशक्तिभिस्समभ्यर्च्य तस्मिन् अग्निमूर्तिं समावाह्य समर्चयेत् ॥ अङ्गैः प्रथमावृतिः ॥ जातवेदसे० सप्तजिह्वाय० हव्यवाहनाय० अश्वोदरजाय० वैश्वानराय० कौमारतेजसे० विश्वमुखाय० देवमुखाय ८ इत्यष्टमूर्तिभिर्द्वितीयावृतिः ॥ लोकेशैस्तृतीया ॥ एवं संपूज्य कृशानुं सर्पिस्सिक्तेन पयोन्नेन षष्टिदिनादुत्पन्नैः सिततरैः धान्यैः कृतेन दशांशं जुहुयात् ॥ पुरश्चरणाहोमः ॥

अथ प्रयोगः --

आज्यैरष्टोर्ध्वशतं प्रतिपदमारभ्य मन्त्रविद्दिनशः ।
चतुरो मासान् जुहुयात् लक्ष्मीरत्यायता भवेत्तस्य ॥

प्रयोगान्तरम् —

शुद्धाभिः शालीभिः दिनमनु जुहुयात्तथाब्दमात्रेण ।
शालीपूर्णगृहस्स्यात् गोमहिषाद्यैश्च संकुलस्तस्य ॥

शाली-धान्यविशेषः ॥ अयमर्थः — शालिधान्यैर्नित्यशः अष्टोर्ध्वशतं जुहुयात् । अनेन वत्सरमात्रेण धान्यगोमहिषादयोऽस्य जायन्ते ॥

प्रयोगान्तरम् --

शुद्धान्नैर्घृतसिक्तैः प्रतिदिनमग्नौ समेधिते जुहुयात् ।
अन्नसमृद्धिर्महती स्यादस्य निकेतनेऽब्दमात्रेण ॥

अयमर्थः -- अष्टोर्ध्वशतं नित्यशः संवत्सरपर्यन्तं जुहुयात् ॥ उक्तफलं भवति ॥

प्रयोगान्तरम् --

जुहुयात्तिलैस्सुशुद्धैः षण्मासाज्जायते महालक्ष्मीः ।
तिलमपि पूर्ववदेवाष्टोत्तरशतसंख्यं नित्यशः षण्मासमित्यर्थः ॥

प्रयोगान्तरम् —

कुमुदैः कल्हारैरपि जातीकुसुमैश्च जायते सिद्धिः ॥

पालाशैः पुनरिध्मकैस्सरसिजैर्बैल्वैश्च रक्तोत्पलैः
दुग्धोर्वीरुहसंभवैः खादिरजैर्व्याघातवृक्षोद्भवैः ।

दूर्वाख्यैश्च शमीविकङ्कतभवैरष्टोर्ध्वयुक्तं शतं
नित्यं वा जुहुयात् प्रतिप्रतिपदं मन्त्री महासिद्धये ॥

[1] कुमुदं—नीलोत्पलम् । कल्हारं—कमलम् । जाती—जाजी । पलाशेध्मकं—पलाशसमित् । रक्तोत्पलम् । दुग्धोर्वीरुहसंभवाः—अश्वत्थोदुम्बरप्लक्षाणां समिधः । खदिरः-खैर । व्याघातवृक्षोद्भवः கொன்னை ஸமித்து. त्रिभिः लक्ष्मीसिद्धिः ॥ पालाशाद्यैः सर्वैस्तु महालक्ष्मीसिद्धिः ॥

अथ अग्निमन्त्रान्तरमुच्यते —

भृगु ऋषिः । गायत्री छन्दः । अग्निर्देवता । ओं बीजम् । स्वाहा शक्तिः । ओं भूर्भुवस्स्वः स्वाहा हृत् । अग्निर्जातवेदा शिरः । इहावह शिखा । सर्वकर्माणि कवचम् । साधय नेत्रम् । स्वाहा अस्त्रम् ॥ ध्यानम्—

अथवा शक्तिस्वस्तिकदर्भाक्षस्रक्स्रुवस्रुगभयवरान् ।
दधदमिताकल्पो वा वसुरत्नतात्काकमालिकालसितः ॥

ओं भूर्भुवस्स्वः अग्निर्जातवेद इहावह सर्वकर्माणि साधय स्वाहा इति मन्त्रः ॥ ऐश्वर्यप्रधानोयं मन्त्रः ॥

वत्सरादेश्चतुर्दश्यां दिनादावेव दीक्षितः ।
मन्त्रं द्वादशसाहस्रं जपेत्सम्यगुपोषितः ॥

एवं पुरश्चरणाजपः ॥ तत्र वत्सरादेश्चतुर्दश्यां, चैत्रादिमानुषपैतृकदैविकमासत्रयस्यापि कृष्णचतुर्दश्यामित्यर्थः ॥ अथ पूजाविधिः—

---

1 कुमुदं-ஆம்பல், कल्हारं-செங்கழுநீர், जाती-சிறு செண்பகம், रक्तोत्पलं-செங்கழுநீர்ப்பூ व्याघातः-கொன்னை.

पूर्वोक्ताग्निमन्त्रपीठे समावाह्य समर्चयेत् कृशानुम् ॥ अङ्गैः प्रथमावृतिः ॥ जातवेदसे० सप्तजिह्वाय० हव्यवाहनाय० अश्वोदरजाय० वैश्वानराय० कौमारतेजसे० विश्वमुखाय० देवमुखाय० ८ इति द्वितीयावृतिः ॥ लोकेशैस्तृतीया ॥ तदायुधैश्चतुर्थी ॥ एवं संपूज्य पुरश्चरणाहोमं कुर्यात् ॥ अथ पुरश्चरणाहोमविधिः —

समिदाज्यममावास्यां परिशोद्धय यथाविधि ।
ब्राह्मणान् भोजयित्वाऽथ स्वयं भुक्त्वा समाहितः ॥

परेह्नि प्रतिपद्येतैः जुहुयादर्चितेऽनले ।
मन्त्री वटसमिद्व्रीहितिलराजीहविर्घृतैः ॥

अष्टोत्तरशतावृत्त्या हुनेदेकैकशः क्रमात् ।
राजी-मोहर्या=ಕಡುಕು.
दशाहमेवं कृत्वाऽथ पुनरेकादशीतिथौ ॥

शक्त्या प्रतर्प्य विप्रांश्च प्रदद्याद्गुरुदक्षिणाम् ।
सुवर्णवासोधान्यानि शोणां गां च सतर्णकाम् ॥

पुनरष्टोत्तरं मन्त्री सहस्रं दिनशो जपेत् ।

अयमर्थः — चैत्रचतुर्दश्यामेतं मन्त्रमुपोष्य संदीक्ष्य प्रातर्द्वादशसंख्यं पुरश्चर्य पुनरमावास्यायां वटसमिद्व्रीहितिलराजीहविर्घृतानि षड्द्रव्याणि संपाद्य ब्राह्मणान् भोजयित्वा स्वयं भुक्त्वा च, पुनः परे दिने प्रथमायामुक्तप्रकारेणाग्नौ समभ्यर्च्य एतैष्षड्भिर्द्रव्यैः एकैकैरष्टोत्तरशतं जुहुयात् । पुनः परेद्युश्चाप्येवमेव जुहुयात् । एवं दशाहं नित्यशो जुहुयात् ॥ पुनरेकादश्यां गुरुदक्षिणां स्वर्णाद्युक्तद्रव्यैर्दत्वा विप्रांश्च प्रतर्प्य पुनर्नित्यशः अष्टोत्तरसहस्रं जपेत् ॥ एवं पुरश्चरणाविधिः ॥ अथ प्रयोगः —

प्रजपेदथवा सहस्रसंख्यं दिनशो वत्सरतो भवेन्महाश्रीः ॥

अयमर्थः — पूर्वोक्तपुरश्चरणाविध्युक्तप्रकारेण जप्तश्चेन्महालक्ष्मीसिद्धिरित्युक्तम् ॥

अथवा दिनशस्सहस्रसंख्यं जप्तश्चेदपि महालक्ष्मीसिद्धिर्भवतीत्यभिप्रायः ॥

प्रयोगान्तरम् —

जुहुयात्प्रतिवासरं शताख्यं हविषाब्देन भवेन्महासमृद्धिः ॥

संवत्सरं नित्यशः शतसंख्यं हविषा जुहुयादित्यर्थः ॥

प्रयोगान्तरम् —

पालाशैः कुसुमैर्हुनेद्दधिघृतक्षौद्राप्लुतैर्मण्डलं
नित्यं वाष्टशतं तथैव करवीरोत्थैस्समिद्धिर्हुनेत् ।

क्षौद्रं–मधु ॥ अयमर्थः — एतेषु द्रव्येषु स्वक्तैः पलाशकुसुमैर्नित्यमष्टोत्तरशतसंख्यया मण्डलं हुनेत् ॥ अथवा करवीरकुसुमैरेवमेव हुनेत् । तेन समृद्धिर्भवति ॥ करवीरं-कन्नेरी–அரளி.

प्रयोगान्तरम् —

षण्मासं कपिलाघृतेन दिनशोप्यष्टौ सहस्रं तथा
होतव्यं लभते स्वराज्यसदृशीं लक्ष्मीं यशो वा महत् ॥

अथोत्तिष्ठेत्याद्यग्निमन्त्र उच्यते —

भृगुरृषिः । गायत्री छन्दः । अग्निर्देवता । ओं बीजम् । स्वाहा शक्तिः । उत्तिष्ठ पुरुष हृत् । हरिपिङ्गल शिरः । लोहिताक्ष शिखा । देहि मे कवचम् । दापय नेत्रम् । स्वाहा अस्त्रम् ॥ ध्यानम् —

हेमाश्वत्थसुरद्रुमोदरभुवो निर्यान्तमश्वाकृतिं
वर्षन्तं धनधान्यरत्ननिचयान् रन्ध्रैस्स्वकैस्सन्ततम् ।
ज्वालापल्लवितस्वरोमविवरं भक्तार्तिसंभेदनं
वन्दे धर्मसुखार्थमोक्षफलदं दिव्याकृतिं पावकम् ॥

उत्तिष्ठ पुरुष हरिपिङ्गळ लोहिताक्ष देहि मे दापय स्वाहा इति मन्त्रः ॥ ऐश्वर्यप्रधानोयं मन्त्रः ॥ लक्षं जपेत् ॥ घृतसिक्तैः पलाशैः दशांशं पुरश्चरणाहोमः ॥

अथ पूजा —

पूर्वतरोक्ताग्निमन्त्रपीठे कृशानुं समावाह्य समर्चयेत् ॥ अङ्गैः प्रथमावृतिः ॥ जातवेदसे० सप्तजिह्वाय० हव्यवाहनाय० अश्वोदरजाय० वैश्वानराय० कौमारतेजसे० विश्वमुखाय० देवमुखाय० ८ इति द्वितीयावृतिः ॥ लोकेशैस्तृतीया ॥ तदायुधैश्चतुर्थी ॥

अथ प्रयोगः —

दिनावतारे मनुमेनमन्वहं जपेत्सहस्रं नियमेन मन्त्रवित् ।
अधृष्यतायै यशसे श्रिये रुजो विमुक्तये युक्तमतिस्तथाऽऽयुषे ॥

दिनावतारे प्रातःकाले ॥ अस्यार्थः — अधृष्यतायै नृसिंहबीजयोगः ॥ यशसे अजपायोगः ॥ श्रिये तद्योगः ॥ रुजोविमुक्तये दुर्गाबीजयोगः ॥ आयुषे मृत्युञ्जययोगश्च ॥ तत्तद्बीजयोगे तत्तदुचितध्यानम् ॥

प्रयोगान्तरम् —

शालीतण्डुलकैस्सितैश्च पयसा कृत्वा हविः पावकं
गन्धाद्यैः प्रतिपूज्य तेन हविषा संवर्त्य पिण्डं महत् ।

आज्यालोलितमेकमेव जुहुयाज्जप्त्वा मनुं मन्त्रवित्
साष्टोर्ध्वं प्रतिपद्यथो शतमथ स्यादिन्दिरा वत्सरात् ॥

अयमर्थः — * शाली धान्यविशेषः । धवळितेन शालितण्डुलेन क्षीर-संयुक्तेन हविः कृत्वा तेन हविषा महत्पिण्डं निर्वर्त्याज्यसिक्तं तत्पिण्डं मन्त्रेणाष्टोत्तरशतं जप्त्वा प्रतिप्रतिपदं जुहुयात् ॥ संवत्सरात् लक्ष्मीर्भवति ॥

प्रयोगान्तरम् —

अष्टोत्तरं शतमथो मृगमुद्रयैव
मन्त्री प्रतिप्रतिपदं जुहुयात्पयोन्नैः ।
साज्यैर्भवेन्न खलु तत्र विचारणीयं
संवत्सरात्स च निकेतनमिन्दिरायाः ॥

अयमर्थः — अंगुष्ठमध्यमानामिकाग्राणां संहतिः मृगीमुद्रा ॥ आज्य-सिक्तैः पयोन्नैः प्रतिप्रतिपदं मृगीमुद्रया अष्टोत्तरशतं जुहुयात् ॥ एवं संवत्सरे कृते लक्ष्म्या निकेतनमावासस्थानं भवति ॥

प्रयोगान्तरम् —

अष्टोर्ध्वशतं हविषा मन्त्रेणानेन नित्यशो जुहुयात् ।
षण्मासादाढ्यतमो भवति नरो नात्र सन्देहः ॥

प्रयोगान्तरम् —

शालीभिश्शुद्धाभिः प्रतिदिनमष्टोत्तरं शतं जुहुयात् ।
धनधान्यसमृद्धिस्स्यात् मन्त्री संवत्सरार्धमात्रेण ॥

---

* शाली–குளச்சல்நெல்.

शालीधान्यविशेषः-குளச்சநெல்.

प्रयोगान्तरम्—

आज्यैरयुतं जुहुयात् प्रतिमासं प्रतिपदं समारभ्य ।
अतिमहती लक्ष्मीस्स्यात् अस्य तु षण्मासतो न सन्देहः ॥

अयमर्थः — प्रतिमासं प्रतिप्रतिपदमाज्यैरयुतं जुहुयात् ॥ एवं षण्मासे कृते लक्ष्मीर्भवति ॥

प्रयोगान्तरम्—

अरुणैः पुनरुत्पलैश्शतं यो मधुराक्तैः प्रजुहोति वत्सरार्धम् ।
मनुनाप्यमुना दशाधिकं सो लभते मंक्षु महत्तरां च लक्ष्मीम् ॥

अरुणोत्पलं-तामरसं-செந்நெய்தல் பூ.

अयमर्थः — दशोत्तरशतसंख्यं अरुणोत्पलैः त्रिमधुरसिक्तैः षण्मासं जुहुयात् । लक्ष्मीर्भवति ॥

प्रयोगान्तरम्—

जातीपलाशकरवीरजपाख्यबिल्व-
व्याघातकेसरकुरण्डभवैः प्रसूनैः ।
एकैकशः शतमथो मधुरत्रयाक्तैः
जुह्वन्प्रतिप्रतिपदं श्रियमेति वर्षात् ॥

जाती-जाजी । करवीरं-कन्नेरी । जपा दासुन्दपुष्प । कुरण्डं कोराटा செங்குறிஞ்சில். व्याघातं-கொன்னை. अयमर्थः — एतैरुक्तैः कुसुमैस्सर्वैः त्रिमधुरसिक्तैः प्रत्येकं शतसंख्यं प्रतिप्रतिपदं जुहुयात् ॥ एवं संवत्सरं हुते लक्ष्मीर्भवति ॥

प्रयोगान्तरम् —

खण्डैश्च सप्तदिनमध्यमृतालतोत्थैः
मन्त्री हुनेद्गुणसहस्रमथो पयोक्तैः ।
सम्यक् समर्च्य दहनं नचिरेण जन्तुः
चातुर्थिकादिविषमज्वरतो वियुञ्ज्यात् ॥

अमृतालता—சீந்தில்கொடி. अयमर्थः — अमृताखण्डैः क्षीरसिक्तैः नित्यशः त्रिसहस्रसंख्यं हुनेत् । एवं हुते चातुर्थिकादिविषमज्वरतो विमुक्तो भवति ॥

प्रयोगान्तरम् —

क्षीरद्रुमत्वगभिपक्कजलैर्यथावत्
संपूज्य कुम्भमभिपूज्य कृशानुमत्र ।
जप्त्वा मनुं पुनरमुं त्रिसहस्रमात्रं
सेकक्रिया ज्वरहरी ग्रहवैकृतघ्नी ॥

अयमर्थः — क्षीरद्रुमाः अश्वत्थवटौदुम्बरप्लक्षाः । एतेषां त्वचा क्वथितजलेन कलशं संपूर्य सम्यक् संपूज्य, एनं मन्त्रं त्रिसहस्रसंख्यं जप्त्वा साध्यमभिषिञ्चेत् ॥ ज्वरग्रहदोषादिपीडा नश्यन्ति ॥

प्रयोगान्तरम् —

पयसि हृदयदघ्ने भानुमालोक्य तिष्ठन्
प्रतिजपतु सहस्रं नित्यशो मन्त्रमेनम् ।
सदुरितमपमृत्युं रोगजातांश्च हित्वा
व्रजति नियतसौख्यं वत्सराद्दीर्घमायुः ॥

अयमर्थः — हृदयदघ्नं हृदयप्रमाणम् । एवं सहस्रसंख्यं जले स्थित्वा नित्यशो जपेत् । उक्तफलं भवति ॥

प्रयोगान्तरम् —

मनुनामुनाष्टशतजप्तमथ प्रपिबेज्जलं ज्वलनदीपनकृत् ।
गुरुभक्तमप्युदरगं त्वमुना परिजापितं प्रचति कुक्ष्यनलः ॥

अयमर्थः — अनेन मन्त्रेणाष्टोत्तरशतं जलं जप्त्वा पिबेत् ॥ उदरं स्पृष्ट्वा वा जपेत् । तस्मादजीर्णादिरोगं शमयेत् ॥

प्रयोगान्तरम् —

हुनेदरुणपङ्कजैस्त्रिमधुराप्लुतैर्नित्यशः
सहस्रमृतुमासतः पृथुतरा रमा जायते ।
प्रतिप्रतिपदं हुनेदिति बुधोथवा वत्सरं
त्रिनष्टवसुरप्यसौ भवति चेन्दिरामन्दिरम् ॥

अयमर्थः — अरुणपङ्कजैस्त्रिमधुरसिक्तैः नित्यशस्सहस्रसंख्यं षण्मासं जुहुयात् । अथवा प्रतिप्रतिपदं संवत्सरं जुहुयात् ॥ तस्मादुक्तफलं भवति ॥

अथाग्निमन्त्रप्रसङ्गात स्वशरीरादिषु दग्धेषु सत्सु तच्छान्त्यर्थं मन्त्र उच्यते —

यद्यस्ति शाम्भवी विद्या यदि धर्मस्सनातनः ।
यदि मे भक्तिर्भरिता शीतो भव हुताशन ॥

यत्र कुत्रचित् दाह्यं चेत् शीतो भवेत्यत्र शीघ्रं दहेति प्रयोजयेत् ॥ शन्नो देवीरभिष्टय इत्यृचापि अग्निदग्धे प्रयुञ्ज्यात् ॥ जपादिना तस्माच्छान्तिर्भवति ॥

अथाग्निमन्त्रप्रसङ्गात् अग्निविषयमपि यन्त्रमग्निना गृहदाहाद्यभयप्रदं यन्त्रसारोक्तं अयमग्ने जरितेति सूक्तस्य यन्त्रमप्यत्र योग्यतावशाल्लिख्यते —

अथानलातङ्कहरं वक्ष्ये यन्त्रं समृद्धिदम् ।

कर्णिकायां साध्ययुक्तं तारं पत्राष्टकोदरे ॥

अयमग्नेति सूक्तस्य प्रतिपत्रं क्रमादृचाम् ।
एकमेकं महाव्यग्नेत्यृचा मातृकयापि च ॥

आवेष्ट्य दिक्षु वंबीजं कोणेषु ठपरं लिखेत् ।
ताम्रादिपट्टेष्वालिख्य मन्त्रमेतद्यथाविधि ॥

संस्थापितं मन्दिरादौ शमयेदग्निजं भयम् ।
समावहेत्समृद्धं च स्फीतामाभूतसंप्लवम् ॥

अस्यार्थः — प्रथममष्टपत्रं विलिख्य, तन्मध्ये प्रणवं विलिख्य, तन्मध्ये साध्यनामादियन्त्रन्यायान्विलिखेत् ॥ पुनरष्टदळेषु अयमग्ने जरितेति सूक्तं विलिखेत् ॥ तत्र तु प्रथमे दळे अयमग्ने जरिता त्वा इत्यृचं विलिखेत् ॥ द्वितीये दळे प्रवर्ते अग्ने इत्यृचं विलिखेत् ॥ तृतीयदळे उतवा उपरि इत्यृचं विलिखेत् ॥ चतुर्थे दळे यदुद्वतो निवतो इत्यृचं विलिखेत् ॥ पञ्चमे दळे प्रत्यस्य श्रेणयो इत्यृचं विलिखेत् ॥ षष्ठे दळे उत्ते शुष्मा इत्यृचं विलिखेत् ॥ सप्तमे दळे अपामिदं न्ययनं इत्यृचं विलिखेत् । अष्टमे दळे आयने ते इत्यृचं विलिखेत् ॥ पुनर्बहिर्वृत्तद्वयं विलिख्य पूर्ववृत्ते अहाव्यग्ने इत्यृचा वेष्टयेत् । द्वितीये वृत्ते मातृकया वेष्टयेत् ॥ बहिश्चतुरश्रं विलिख्य तस्य प्रागादिदिक्षु वं वं इति विलिखेत् ॥ कोणेषु ठं ठं इति विलिखेत् ॥ एवं ताम्रादिपट्टे विलिख्य स्थापिते गृहदाहादिभयं न भवति ॥

इति प्रपञ्चसारसारसंग्रहे गीर्वाणेन्द्रविरचिते
पञ्चदशः पटलः ॥

---

## ॥ अथ षोडशः पटलः ॥

अथ श्रीमहागणपतिविधानमुच्यते —

गणक ऋषिः ॥ निचृद्गायत्रीछन्दः । श्रीमहागणपतिर्देवता ॥ गं बीजम् । ह्रीं शक्तिः । ओं श्रीं ह्रीं क्लीं ग्लौं गं गां हृत् । ओं श्रीं ह्रीं क्लीं ग्लौं गं गीं शिरः । इत्याद्यङ्गानि ॥

मन्दाराद्यैः कल्पकवृक्षविशेषैर्विशिष्टतरफलदैः ।
शिशिरितचतुराशेन्तर्बालातपचन्द्रिकाकुले च तले ॥

ऐक्षवजलनिधिलहरीकणजालकवाहिना च गन्धवहेन ।
संसेविते सुरतरुसुमनःश्रितमधुपपक्षचलनपरेण ॥

रत्नमये मणिवज्रप्रवाळफलपुष्पपल्लवस्य सतः ।
महतोधस्ताद्दतुभिः युगपत्संसेवितस्य कल्पतरोः ॥

सिंहमुखपादपीठगलिपिमयपद्मे त्रिषट्ककोणोल्लसिते ।
आसीनस्त्वेकरदो बृहदुदरो दशभुजोरुणो गजवदनः ॥

इत्यासनध्यानम् ॥ तत्र लिपिमयपद्मेत्यादीनामयमर्थः — त्रिकोणमध्ये प्रणवे गं इति साध्यादियुतं लिखित्वा, श्रीं ह्रीं क्लीं ग्लौं इत्येभिस्तं संवेष्टय, षट्कोणेषु बीजषट्कं, तदन्तरालेषु अङ्गषट्कं, अष्टदलेषु मन्त्रपदाष्टकं तद्बहिर्वृत्तत्रये मातृकया पाशांकुशेन च संवेष्टय, तद्बहिर्भूपुरद्वये आं ह्रीं इति कोणेषु दिग्विदिग्भेदेन विलिखेदिति ॥

अथास्य न्यासविधिः —

प्रथमं षडध्वन्यासं कुर्यात् ॥ तत्प्रकारस्तु द्विविधो भवति वाच्य-वाचकभेदेन । तत्रापि वाच्यं त्रिविधम् कलातत्वभुवनभेदेन । वाचकमपि त्रिविधं वर्णपदमन्त्रभेदेन ।

तत्र कलान्यासो यथा —

[1]हौं नमः पराय शान्त्यतीतकलात्मने नमः । हैं नमः पराय शान्तिकला-त्मने नमः । हूं नमः पराय विद्याकलात्मने नमः । ह्रीं नमः पराय प्रति-ष्ठाकलात्मने नमः । ह्रां नमः पराय निवृत्तिकलात्मने नमः ॥ इति पञ्चकलामन्त्रान् शिरोभ्रूमध्यहृद्गुह्यपादेषु विन्यस्य मूलेन व्यापयेत् ॥

पुनस्तत्वन्यासः —

मं नमः पराय जीवात्मने नमः । भं नमः पराय प्राणात्मने नमः । बं नमः पराय बुध्यात्मने नमः । फं नमः पराय अहंकारात्मने नमः । पं नमः पराय मनआत्मने नमः ॥ इति पञ्चमन्त्रेषु द्वाभ्यां शिरआदि व्याप्य त्रयं हृदि न्यसेत् ॥ नं नमः पराय शब्दतन्मात्रात्मने नमः । धं नमः पराय स्पर्शतन्मात्रात्मने नमः । दं नमः पराय रूपतन्मात्रात्मने नमः । थं नमः पराय रसतन्मात्रात्मने नमः । तं नमः पराय गन्धतन्मात्रात्मने नमः ॥ इति शिरोभ्रूमध्यहृद्गुह्यपादेषु विन्यसेत् ॥ णं नमः पराय श्रोत्रात्मने नमः । ढं नमः पराय त्वगात्मने नमः । डं नमः पराय चक्षुरात्मने नमः । ठं नमः पराय जिह्वात्मने नमः । टं नमः पराय घ्राणात्मने नमः । इति श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणेषु न्यसेत् ॥

ञं नमः पराय वागात्मने नमः । झं नमः पराय पाण्यात्मने नमः । जं नमः पराय पादात्मने नमः । छं नमः पराय पाय्वात्मने नमः । चं

---

१ हौं, हैं, हूं, ह्रीं, ह्रां इति बीजानि क्रमेण, ग, घ, ङ पाठः ।

नमः पराय उपस्थात्मने नमः ।। इति वाक्पाणिपादपायूपस्थेषु न्यसेत् ।। ङं नमः पराय आकाशात्मने नमः । घं नमः पराय वाय्वात्मने नमः । गं नमः पराय तेजआत्मने नमः । खं नमः पराय अबात्मने नमः । कं नमः पराय पृथिव्यात्मने नमः ।। इति शिरोमुखहृद्गुह्यपत्सु विन्यसेत् ।।

शं नमः पराय हृत्पुण्डरीकात्मने नमः । षं नमः पराय सूर्यमण्डलाय द्वादशकलात्मने नमः । सं नमः पराय सोममण्डलाय षोडशकलात्मने नमः ।। रं नमः पराय वह्निमण्डलाय दशकलात्मनें नमः ।। इति चतुष्टयं हृदि विन्यसेत् ।। गों नमः पराय शान्त्यतीतात्मने नमः । गें नमः पराय शान्त्यात्मने नमः । गुं नमः पराय विद्यात्मने नमः । गिं नमः पराय प्रतिष्ठात्मने नमः । गं नमः पराय निवृत्त्यात्मने नमः ।। इति शिरोमुखहृद्गुह्यपादेषु विन्यस्य मूलेन व्यापयेत् ।।

पुनः भुवनत्रयन्यासः —

गां भूलोकाय नमः । गीं भुवर्लोकाय नमः । गूं स्वर्लोकाय नमः ।। इति पादादिनाभ्यन्तं नाभ्यादिगलान्तं गळादिशीर्षान्तं व्याप्य, मूलेन व्यापयेत् ।।

पुनः वर्णन्यासः —

तत्प्रकारः—महागणपतिमन्त्रेण मातृकावर्णान् प्रत्येकं पुटित्वा, मातृकान्यासस्थानेषु न्यसेत् ।। तत्प्रकारः—महागणपतिमन्त्रमुच्चार्य तदन्ते मातृकाप्रथमवर्णं सबिन्दुकमुच्चार्य तदन्तेपि महागणपतिमन्त्रमुच्चार्य नम इति न्यसेत् ।। एवमेव क्षान्तं विन्यस्य मूलेन व्यापयेत् ।।

पुनः पदन्यासः —

तत्पुरुषाय नमः । विद्महे नमः । वक्रतुण्डाय नमः । धीमहि नमः । तन्नमः । नो नमः । दन्तिः नमः । प्रचोदयान्नमः इति

महागणपतिगायत्र्यष्टपदानि, के फालदेशे मुखकण्ठनाभ्यूरुजानुपादेषु विन्यस्य, मूलेन व्यापयेत् ॥

अथ मन्त्रन्यासः —

गणानां नमः । त्वा नमः । गणपतिं नमः । हवामहे नमः । कविं नमः । कवीनां नमः । उपमश्रवस्तमं नमः । ज्येष्ठराजं नमः । ब्रह्मणां नमः । ब्रह्मणः नमः । पते नमः । आ नमः । नः नमः । शृण्वन् नमः । ऊतिभिः नमः । सीद नमः । सादनं नमः इति सप्तदशपदानि काळिकवदनकण्ठ-(कर्ण) द्वयास्यगळांसहृन्नाभिगुह्येषु जानुद्वयाङ्घ्रिद्वयपृष्ठककुत्सु विन्यस्य मूलेन व्यापयेत् ॥

एवं सूक्ष्मशरीरकल्पनार्थं षडध्वन्यासं कृत्वा, पुनः स्थूलशरीरकल्पनार्थं पञ्चाशद्विघ्न (घ्नेश) न्यासं कुर्यात् ॥ तत्प्रकारस्तु अष्टमपटले श्रीविद्याविधाने लघुषोढान्यासप्रकरणे उक्तः ॥

अथ विनायकादिन्यासः —

मूर्ध्नि नेत्रे च जिह्वायां हृन्नाभिशिश्नजानुषु ।
विनायकादिविघ्नेशान् चरणाग्रेषु विन्यसेत् ॥

विनायको विरूपाक्षः क्रूरकर्माऽपराजितः ।
चण्डवेगो गजग्रीवः करालश्चण्डविक्रमः ॥

सकण्ठा (र्णा) स्येषु तेष्वेव विघ्नादीन्दश विघ्नपान् ।

दश विघ्नपाः अत्रैव चतुरावृत्तितर्पणविधाने वक्ष्यन्ते ॥

अथ विवरणोक्तप्रकारेण विघ्नेशन्यासविधानं लिख्यते —

प्रणवपुटितैः पञ्चबीजैः अंगुलीषु विन्यस्य अवशिष्टेन करयोर्व्याप्य, अङ्गान्यङ्गुलीषु विन्यस्य, मूलेन देहे त्रिशो व्याप्य, प्रणवपुटितं बीजपञ्चकं मूर्धादिषु विन्यस्य, अवशिष्टेन तत्रैव व्याप्य, तथैव पञ्चवक्त्रेषु शिरोभ्रूमध्यचक्षुर्द्वयास्येषु, दोःपत्सन्ध्यग्रेषु, कटिद्वयांसद्वयहृत्सु च प्रादक्षिण्येन जानुद्वयगुल्पद्वयनाभिषु स्तनद्वयगलपृष्ठापरगळेषु न्यसित्वा, मूर्धभ्रूमध्याक्षिकण्ठ(र्ण) द्वयास्यकरपत्सन्ध्यग्रहृत्सु वर्णान् न्यसित्वा, पुनः पदाष्टकमष्टाधारेषु न्यसेत् ॥ पदचतुर्दशकं चेत् चतुर्दशाधारेषु, नवकं चेन्नवाधारेषु, दशकं चेद्दशाधारेषु ॥ मूलाधार वृषण लिङ्ग मूल जठर नाभ्युदर हृदयोरोगल लम्बिका भ्रूमध्यललाटकेशांतमूर्धानश्चतुर्दशाधाराः ॥ वृषणजठरोदरोरोवर्ज्या दशाधाराः ॥ केशान्तवर्ज्या नवाधाराः ॥ ललाटवर्ज्या अष्टाधाराः ॥ बीजषट्कं पदषट्कम् । वरदेत्यन्तं सप्तमम् । अवशिष्टमष्टमम् ॥ गणपतय इत्यन्तं सप्तमम् । वरदान्तमष्टमम् ॥ अवशिष्टं नवमम् ॥ सर्वजनं मे इत्यन्तं नवमम् । अवशिष्टं दशमम् ॥ चतुर्दशपदपक्षे वरवरदेति च पदद्वयमवगन्तव्यम् ॥ पुनः मूर्धभ्रूमध्याक्षिद्वयास्येषु बीजपञ्चकम् । सर्वजनं मे वशमानय स्वाहेत्यन्तेन सहितं न्यसेत् ॥ तथैव पञ्चवक्त्रेषु शिरोभ्रूमध्यचक्षुर्द्वयास्येषु, करपत्सन्ध्यग्रेष्वपि, कट्यंसद्वयकटिहृत्स्वपि, जानुद्वयगुल्फद्वयनाभिष्वपि, स्तनद्वयकण्ठपृष्ठककुत्स्वपि ॥ एवं विभूतिन्यासो बीजपञ्चकेनैव ॥ पुनः बीजपञ्चकमेव मूर्धभ्रूमध्याक्षिवदनेषु । सर्वजनमित्यादि व्यापकत्वेन न्यसेत् ॥

रमारमेशादिकं मूर्धादिपञ्चभूतस्थानेषु । तत्र पञ्चमः पुष्टिविनायकौ ॥ नाभितत्पार्श्वकण्ठतत्पार्श्वेषु विघ्न(विघ्नेश)षट्कं सशक्तिकं, सशक्तिकं निधिद्वयं च वामदक्षिणस्तनद्वयाधः, पुनः ब्रह्माण्यादिकं अळीकादिषूक्तेषु स्थानेषु सामान्यपटलोक्ताश्च न्यासाः कार्या इति । अस्य ब्रह्माण्यादिन्यासस्य स्थानानि प्राक् सप्तमे पटले प्रपञ्चयागन्यासविधाने उक्तानि ॥ सामान्यपटलोक्तोऽस्तु, गुरुगणपतिवन्दनादिलिपिन्यासान्तं, तदादावेव कर्तव्यम् ॥

ध्यानम् —

बीजापूरगदेक्षुकार्मुकरुजाचक्राब्जपाशोत्पल-
व्रीह्यग्रस्वविषाणरत्नकलशप्रोद्यत्कराम्भोरुहः ।
ध्येयो वल्लभया च (स) पद्मकरयाश्लिष्टो ज्वलद्भूषया
विश्वोत्पत्तिविपत्तिसंस्थितिकरो विघ्नो विशिष्टार्थदः ॥
(विघ्नेश इष्टार्थदः ॥)

रुजा शूलम् ॥

करपङ्करधृतकलशस्रुतमणिमुक्ताप्रवालवर्षेण ।
अविरतधारं विकिरन् परितस्साधकसमग्रसंपत्त्यै ॥

मदजललोलुपमधुकरमालां निजकर्णताळताडनया ।
निर्वासयन्मुहुर्मुहुरमरैरसुरैश्च सेवितो युगपत् ॥

एवं स्वरूपध्यानम् ॥ एवं महागणपतिरूपमात्मानं ध्यात्वा, पुनः परिवारान् ध्यायेत् ॥

अग्रेऽथ बिल्वमभितश्च रमारमेशौ तद्दक्षिणे वटजुषौ गिरिजावृशाङ्कौ ।
पृष्ठेऽथ पिप्पलजुषौ रतिपुष्पबाणौ सव्ये प्रियंगुमभितश्च महीवराहौ ॥

ध्येयौ च पद्मयुगचक्रदरैः पुरोक्तौ
पाशाङ्कुशाख्यपरशुत्रिशिखैरथान्यौ ।
युग्मोत्पलेक्षुमयचापशरैस्तृतीया-
वन्यौ शुकाह्वकलमाग्रगदारथाङ्गैः ॥

ध्येयाः षट्कोणाश्रिषु परितः पाशाङ्कुशाभयेष्टकराः ।
सप्रमदा गणपतयः रक्ताकाराः प्रभिन्नमदविवशाः ॥

अग्राश्रे चामोदः प्रमोदसुमुखौ च तमभितोऽश्रयुगे ।
पृष्ठे च दुर्मुखाख्यस्तमुमभितोऽविघ्नविघ्नकर्तारौ ॥

सव्यापसव्यभागे तस्य ध्येयौ च शङ्खपुष्प(पद्म)निधी ।
मौक्तिकमाणिक्याभौ वर्षन्तौ धारया धनानि सदा ॥

ऋद्धिस्समृद्धिश्चान्या कान्तिर्मदनावती मदद्रवया ।
द्राविणीवसुधाराख्ये वसुमत्यपि विघ्ननिधियुगप्रमदाः ॥

अग्रे बिल्वमभितश्चेत्यादिग्रन्थानामयमर्थः — पूर्वोक्तबीजापूरेत्यादिमार्गेण स्वमात्मानं महागणपतिरूपं ध्यात्वा, पुनरग्रे बिल्ववृक्षं ध्यात्वा तदभि (तदधः)रमारमेशौ ध्यायेत् ॥ सपद्मयुगा रमा । सचक्रदरो रमेशः ॥ दक्षिणभागे वटवृक्षं ध्यात्वा तदभितः(तदधः)गिरिजावृषाङ्कौ ध्यायेत् ॥ सपाशाङ्कुशा गिरिजा । सपरशुशूलो वृषाङ्कः ॥ पुनश्च पश्चिमभागे पिप्पलवृक्षं ध्यात्वा तदभितः (तदधः) रतिपुष्पबाणौ ध्यायेत् ॥ सोत्पलयुग्मा रतिः । सेक्षुचापपुष्पबाणः पुष्पबाणाख्यः ॥ पुनस्सव्ये भागे प्रियंगुवृक्षं ध्यायेत् ॥ प्रियंगुः वृक्षविशेषः । புங்கமரம். तदभितः महीवराहौ ध्यायेत् । सशुककलमाग्रा मही ॥ कलमाग्रं धान्यविशेषः-சம்பாநெல்கதிர் सगदाचक्रो वराहः ॥ चतस्रो मूर्तयः एवं ध्येयाः ॥

तद्बहिः षट्कोणेषु षड्विघ्नान् (षड्विघ्नेशान्) ध्यायेत् ॥ प्रथममग्रकोणे ऋद्धिशक्तिं च आमोदविघ्नं (विघ्नेशं) च ध्यायेत् ॥ तद्दक्षिणकोणे समृद्धिशक्तिं च प्रमोदविघ्नं (विघ्नेशं) च ध्यायेत् । उत्तरकोणे कान्तिशक्तिं च सुमुखविघ्नं (विघ्नेशं) च ध्यायेत् ॥ पृष्ठकोणे मदनावतीशक्तिं च दुर्मुखविघ्नं (विघ्नेशं) च ध्यायेत् ॥ तद्दक्षिणतः मदद्रवाशक्तिं च अविघ्नं च ध्यायेत् ॥ उत्तरकोणे द्राविणीशक्तिं च विघ्नकर्तारं च ध्यायेत् ॥

एते विघ्नाः (विघ्नेशाः) सपाशांकुशाभयवरदकराः प्रभिन्नमदविवशाश्च

ध्येयाः। एतेषां षड्विघ्नानां (विघ्नेशानां) उत्तरपार्श्वे वसुधाराशक्तिं च शङ्खनिधिमूर्तिं च ध्यायेत् ॥ दक्षिणपार्श्वे वसुमतीशक्तिं च पुष्प (पद्म) निधिमूर्तिं च ध्यायेत्। वसुधाराशङ्खनिधी मौक्तिकाभौ वसुमतीपुष्प(पद्म) निधी माणिक्याभौ। एतावुभौ च वर्षन्तौ धारया धनानि सदा इति ॥

ॐ श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वर वरद सर्वजनं मे वशमानय स्वाहा ॥ इति मन्त्रः ॥ गणपतये इति चतुर्थ्यैव योजयेत् ॥ ऐश्वर्यप्रधानोयं मन्त्रः। अष्टाविंशतिवर्णो मन्त्रः। एवं ध्यात्वा विघ्नेश्वरमन्त्रं सचतुश्चत्वारिंशत्सहस्रं चतुर्लक्षं जपेत्। प्रतिदिनं चतुश्चत्वारिंशत्संख्यं प्रतर्पयेद्विघ्नं (विघ्नेशम्)। जपाद्दशांशं होमः अष्टद्रव्यैर्मिलितैः ॥

मोदकपृथुकसलाजाः ससक्तवश्चेक्षुनारिकेळतिलाः।
कदलीफलसहितानीत्यष्ट द्रव्याणि संप्रदिष्टानि ॥

अथ पूजा—

सिद्धमुखपादपीठगलिपिमयपद्मे त्रिषट्कोणोल्लसिते इति पूर्वं ध्यानविषये प्रोक्ते पीठे नवशक्तिभिर्यजेत् ॥ तीव्रायै० ज्वालिन्यै० नन्दायै० भोगदायै० कामरूपिण्यै० उग्रायै० तेजोवत्यै० सत्यायै० विघ्नविनाशिन्यै० ९ इति नवशक्तयः ॥ सर्वशक्तिकमलासनाय नमः। इति पीठमन्त्रः ॥ तस्मिन्नावाह्य संयजेद्विघ्नराजम् ॥

रमायै० रमेशाय० उमायै० महेश्वराय० रत्यै० पुष्पबाणाय० मह्यै० वराहाय० ८ इति प्रथमावृतिः ॥ ऋध्द्यै० आमोदाय० समृध्द्यै० प्रमोदाय० कान्त्यै० सुमुखाय० मदनावत्यै० दुर्मुखाय० मदद्रवायै० अविघ्नाय० द्राविण्यै० विघ्नकर्त्रे० वसुधारायै० शङ्खनिधये० वसुमत्यै० पुष्प(पद्म)निधये० १६ इति द्वितीयावृतिः ॥

अत्र मिथुनानां स्थानविशेषः पूर्वं ध्यानविषये प्रोक्तः ॥ अङ्गैस्तृतीयावृतिः ॥ मातृभिश्चतुर्थ्यावृतिः ॥ इन्द्रादिभिः पञ्चमी ॥ एवं संपूज्य पुनरुक्तक्रमेण सपरिवारं महागणपतिं ध्यात्वा पुरश्चरणां कुर्यात् ॥ तत्र दीक्षाकलशविधिरुच्यते —

मध्ये च दिग्दळानां चतुष्टयाग्रे प्रविन्यसेत्कलशान् ।
क्षीरद्रुबिल्वरोहिणपिप्पलफलिनीत्वगुद्भवैः क्वाथैः ॥

संपूरयेद्यथावत् क्रमात्समावाह्य गणपमिथुनानि ।
अभ्यर्च्य चोपचारैः हुत्वा विधिवत्पुरस्समभिषिञ्चेत् ॥

अयमर्थः — क्षीरद्रुमाः अश्वत्थवटोदुम्बरप्लक्षाः । रोहिणः वटवृक्षः । पिप्पलः अश्वत्थः । फलिनी वृक्षविशेषः । चतुर्दळं विलिख्य तत्कर्णिकायां च तेषु चतुर्दळाग्रेषु च उक्तैरेतैः क्वाथोदकैः क्रमेणैकैकेनैकैकत्र कलशं संपूरयेत् ॥ तत्र दिक्स्थकलशचतुष्टये रमारमेशादिचतुष्टयं सशक्तिकं मध्यकलशे गणपतिं च समावाह्य षोडशोपचारैस्संपूज्य, पुनस्तत्समीपे अग्निं समाधाय तस्मिन् गणपतिं समावाह्य पूर्वोक्तैरष्टद्रव्यैर्दीक्षाहोमं कृत्वा, तान्कलशान् प्राग्दलस्थकलशादिक्रमेण गुरुश्शिष्यमभिषिञ्चेत् ॥ पुनरुक्तसंख्यं पुरश्चर्य(जप्त्वा)पश्चादग्नौ विघ्नं (घ्नेशं) सपरिवारं संपूज्य अष्टद्रव्यैर्मिलितैः जपदशांशं पुरश्चरणाहोमं कुर्यात् ॥

अथानेन विघ्न(विघ्नेश)मन्त्रेण प्रयोग उच्यते —

अष्टद्रव्यैरन्नै(न्यै)र्वा जुहुयात्तत्तत्प्रयोजनावाप्त्यै ।

अन्यैर्द्रव्यैश्चेत्,

स्वर्णाप्त्यै मधुनाथ गव्यपयसा गोसिद्धये सर्पिषा
लक्ष्म्यै शर्करया जुहोतु यशसे दध्ना च सर्वर्द्धये ।

अन्नैरन्नसमृद्धये च सतिलैर्द्रव्याप्तये तण्डुलैः
जातीभिः पतये कुसुम्भकुसुमैस्साश्वारिजैर्वाससे ॥

पद्मैर्भूपतिमुत्पलैर्नृपवधूं तन्मन्त्रिणः कैरवैः
अश्वत्थादिसमिद्भिरग्रजमुखान्वर्णान्वधूः पिष्टजैः ।
पुत्तल्यादिभिरन्वहं च वशयेज्जुहृन्ननावृष्टये
लोणैर्वृष्टिसमृद्धये च जुहुयान्मन्त्री पुनर्वेतसैः ॥

अयमर्थः — संख्यानुक्ते सहस्रमिति न्यायात् एतैरुक्तैर्द्रव्यैस्सर्वैः सहस्रसंख्यं तत्तत्प्रयोजनावाप्त्यै जुहुयात् ॥ कुसुम्भं कुसुंबाचे पुष्प- குஸும்பைப்பூ. अश्वारि करवीरम् । उत्पलं नीलोत्पलम् । कैरवं श्वेतोत्पलम् । अश्वत्थादिसमिधः अश्वत्थवटोदुम्बरप्लक्षाणां समिधः । अग्रजमुखवर्णाः ब्राह्मणप्रभृतयश्चत्वारो वर्णाः ॥ पिष्टजैः पुत्तल्यादिभिरिति । पिष्टनिर्मिताभिः साध्यप्रतिकृतिभिरित्यर्थः ॥ एतैरुक्तैः पद्मप्रभृतिभिर्हुते भूपति-प्रभृतयस्तूक्तास्साध्या वशीभवन्ति इत्यभिप्रायः । लोणं लवणम् । तैरनावृष्टये जुहुयात् ॥ वैतसं वेतससमित् । तैर्वृष्ट्यर्थं जुहुयादित्यर्थः ॥

पुनरथ(स्य)चतुरावृत्तितर्पणप्रकारः संक्षेपेणोच्यते —

मन्त्रेणाथ पुरामुनैव चतुरावृत्त्या समं तर्प्य च
श्रीशक्तिस्मरभूविनायकरतीर्नाम्नैव बीजादिकम् ।
आमोदादिनिधिद्वयं च सचतुःपूर्वं चतुर्वारकं
मन्त्री तर्पणतत्परोभिलपितं संप्राप्नुयान्मण्डलात् ॥

अस्य तर्पणविधिग्रन्थस्यायमर्थः-प्रथमं सप्तमपटलोक्तप्रकारेण गुरुगण-पतिवन्दनादिकं कृत्वा, अत्रैव प्राक् षडङ्गविधानोक्तवत् करन्यासं कृत्वा मूलेन व्याप्य, पुनरपि प्रागुक्तवदङ्गऋष्यादिकं विधाय ध्यात्वा चतुर्वारं

जपेत् ॥ पुनः पुरतः ऐक्षवजलनिधिं संचिन्त्य, तस्मिन्मन्दारसन्तानपारिजातकल्पद्रुमान् महादिक्षु संचिन्त्य हरिचन्दनमाग्नेयादिकोणेषु चिन्तयेत् ॥ तन्मध्ये सर्वर्तुकुसुमोपेतस्य सुद्रुमस्याधः पद्माकारसिंहासनं संचिन्त्य तस्मिन्नष्टदलानलपुरपुटावृतकर्णिकां च स्मरेत् ॥ पुनर्जलं स्पृष्ट्वा यं रं वं इति पञ्चविंशतिवारं प्राणानायम्य शोषणदाहनप्लावनानि विधाय पीठं तर्पयेत् ॥ गुं गुरुं तर्पयामि । गं गणपतिं तर्पयामि । इति कर्णिकायाम् ॥

पुनः आधारशक्तिं तर्पयामीत्यारभ्य रत्नसिंहासनं तर्पयामीत्यन्तं कर्णिकायामुपर्युपरि तर्पयेत् ॥ धर्मं, ज्ञानं, वैराग्यं, ऐश्वर्यं, इति तत्रैवाग्नेयादिकोणेषु तर्पयेत् ॥ अधर्मं, अज्ञानं, अवैराग्यं, अनैश्वर्यं, इति तत्रैव पूर्वादिदिक्षु ॥ सं सत्वं, रं रजः, तं तमः, मं मायां, विं विद्यां, पं पद्मं, अं सूर्यमण्डलं, सोममण्डलं वह्निमण्डलं अं आत्मानं उं अन्तरात्मानं, मं परमात्मानं, ओं ह्रीं ज्ञानात्मानं, एतान् कर्णिकामध्ये तर्पयेत् ॥

पुनः प्रथमं महागणपतिपीठविधानोक्ततीव्रादिनवशक्तिभिः कर्णिकायामष्टदिक्षु मध्ये च तर्पयेत् । ओं ह्रीं गं सर्वशक्तिकमलासनं तर्पयामीति कर्णिकामध्ये च तर्पयेत् । एवं पीठं संतर्प्य, कर्णिकायां मूलमन्त्रेण पुष्पमुद्रया मूर्तिमाराध्य परिकल्प्य पुनरावाहयेत् । ओं ओं ओं गणानां त्वा गणपतिमित्युक्त्वा, प्रणवमेकवारमुक्त्वा, मूलमुक्त्वा, महागणपतिमावाहयामीति उदकाञ्जलिना आवाह्य, आवाहितो भव, इत्यादिमुद्राः प्रदर्श्य, मूलेन त्रिवारं व्याप्य, गों नमः पराय शान्त्यतीततत्वात्मने नमः । गें नमः पराय शान्तितत्वात्मने नमः । गूं नमः पराय विद्यातत्वात्मने नमः । गीं नमः पराय प्रतिष्ठातत्वामने नमः । गां नमः पराय निवृत्तितत्वात्मने नमः । एवं तत्वानि विन्यस्य, लिपिन्यासं कृत्वा व्याप्य, अङ्गऋष्यादीन्कृत्वा, बीजापूरेत्यादि ध्यात्वा, आसनादिकं दद्यात् ॥

पुनः पुरतः स्वर्णमयं घटं संचिन्त्य, तस्मिन् मोदकं पृथुकतिललाजसक्तिक्ष्वक्षुनारिकेळकदळीफलान्यष्टद्रव्याणि सुरभिमुद्राप्रदर्शनपूर्वकं संचिन्त्य, तज्जलममृतबीजेन जप्त्वा तेन जलेन गणपतेरास्ये तर्पयेत् ॥ प्रथमं मूलतर्पणाय मूलं चतुर्वारं सन्तर्प्य, पुनर्मूलमेव चतुर्वारं, पुनर्विभूतये च मूलेन चतुर्वारं पुनर्विभूतिं तर्पयेत् ॥

ओं श्रीं ह्रीं क्लीं ग्लौं गं महाविभूते वरे वरदे सर्वजनं मे वशमानय स्वाहा तर्पयामीति च चतुर्वारं महागणपतेः पुरतः संतर्प्य, पुनर्मूलं चतुर्वारं, पुनः ओं तर्पयामि । श्रीं तर्पयामि । ह्रीं तर्पयामि । क्लीं तर्पयामि । ग्लौं तर्पयामि । गं तर्पयामि । गणपतये तर्पयामि । वर वरद तर्पयामि । सर्वजनं मे तर्पयामि । वशमानय स्वाहा तर्पयामि ॥ इत्यक्षरमूर्तीर्दशधा विभज्य कर्णिकायामेव महागणपतेरष्टदिक्षु, मूलचतुर्वारपुरस्सरं चतुश्चतुर्वारं सन्तर्पयेत् ॥ अवशिष्टद्वयमीशकोणे, पुनस्तत्रैव बहिः, आयुधमूर्तीस्तर्पयेत् ॥

बीजापूरं तर्पयामि । गदां तर्पयामि । इक्षुकार्मुकं तर्पयामि । रुजां तर्पयामि । चक्रं तर्पयामि । अब्जं तर्पयामि । पाशं तर्पयामि । उत्पलं तर्पयामि । व्रीह्यग्रं तर्पयामि । स्वविषाणं तर्पयामि । रत्नकलशं तर्पयामि ॥ एतांश्च पूर्ववदष्टदिक्षु अवशिष्टत्रयमीशकोणे च, मूलचतुर्वारपुरस्सरं चतुश्चतुर्वारं संतर्पयेत् । पुनस्तद्बहिः कर्णिकायामेव दश विघ्नेशांस्तर्पयेत् । तत्प्रकारः—

ओं श्रीं ह्रीं क्लीं ग्लौं (गं) विघ्नगणपतये वर वरद सर्वजनं मे वशमानय स्वाहा तर्पयामि ॥ बीजान्युक्त्वा विनायकगणपते इत्यादि बीजान्युक्त्वा वीरगणपते इत्यादि । बीजान्युक्त्वा शूरगणपते इत्यादि । बीजान्युक्त्वा वरदगणपते इत्यादिबीजान्युक्त्वा हस्तिमुखगणपते इत्यादिबीजान्युक्त्वा एकदन्तगणपते इत्यादिबीजान्युक्त्वा लम्बोदरगणपते इत्यादिबीजान्युक्त्वा क्षिप्र(प्रसादन)गणपते इत्यादि-

बीजान्युक्त्वा महागणपते वर वरद सर्वजनं मे वशमानय स्वाहा तर्पयामि । एतानष्टदिक्षु अवशिष्टद्वयं ईशकोणे च मूलचतुर्वारपुरस्सरं चतुश्चतुर्वारं तर्पयेत् ॥

ओं श्रीं रमां तर्पयामि । ओं श्रीं रमेशं तर्पयामि । ओं ह्रीं उमां तर्पयामि । ओं ह्रीं महेश्वरं तर्पयामि । ओं क्लीं रतिं तर्पयामि । ओं क्लीं पुष्पबाणं तर्पयामि । ओं ग्लौं महीं तर्पयामि । ओं ग्लौं वराहं तर्पयामि । इति कर्णिकायां पुरत आरभ्य चतुर्दिक्षु मूलचतुर्वारावृत्या चतुश्चतुर्वारं तर्पयेत् । तत्तच्छक्तिपुरुषावेकत्रैव ॥

ओं गं पुष्टिं तर्पयामि । ओं गं विनायकं तर्पयामि । इति द्वावपि ईशकोणे चतुरावृत्त्या तर्पयेत् । पुनः षड्विघ्नान् ( षड्विघ्नेशान् ) सन्तर्पयेत् । तान् कर्णिकाया बहिः पूर्वसंचिन्तितषट्कोणेषु । ओं श्रीं गं सि(ऋ)द्धिं तर्पयामि । ओं श्रीं गं आमोदं तर्पयामि । ओं श्रीं गं समृद्धिं तर्पयामि । ओं श्रीं गं प्रमोदं तर्पयामि । ओं श्रीं गं कान्तिं तर्पयामि । ओं श्रीं गं सुमुखं तर्पयामि । ओं श्रीं ह्रीं गं मदनावतीं तर्पयामि । ओं श्रीं ह्रीं गं दुर्मुखं तर्पयामि । ओं ह्रीं गं मदद्रवां तर्पयामि । ओं ह्रीं गं अविघ्नं तर्पयामि । ओं ह्रीं गं द्राविणीं तर्पयामि। ओं ह्रीं गं विघ्नकर्तारं तर्पयामि। एतैः पूर्वं गणपतेरग्रकोणे पुनस्ततो दक्षिणे तदुत्तरतश्च, एवमेव पृष्ठकोणत्रयेपि, एवं षट्कोणेषु चतुरावृत्त्या मूलचतुर्वारपूर्वकं संतर्पयेत् । शक्तिपुरुषावेकत्रैव । सर्वाश्च मूर्तयो महागणपतिमभिमुखीकृत्य ध्यातव्याः ॥

पुनः ओं क्लीं गं वसुधारां तर्पयामि । ओं क्लीं गं शङ्खनिधिं तर्पयामि । ओं ग्लौं गं वसुमतिं तर्पयामि । ओं ग्लौं गं पुष्प(पद्म)निधिं तर्पयामि । इति षट्कोणाद्बहिः दक्षिणोत्तरयोः देवापेक्षया, चतुरावृत्या तर्पयेत् ॥

ओं श्रीं ह्रीं क्लीं ग्लौं गं गां हृदयं तर्पयामि। बीजान्युक्त्वा गीं शिरस्तर्पयामि इत्यादि षट्कोणाद्बहिः आग्नेयादिकोणेषु ! पुरतो नेत्रम् ।

दिक्स्वङ्गम्। एवं मूलतर्पणेन विना एकैकवारं तर्पयेत्। पुनस्तद्बहिः ब्राह्मयादीस्तर्पयेत्॥ ब्राह्मीं तर्पयामि इत्यादि। इति मूलेन विना एकैकवारं परितः केसरेषु तर्पयेत्॥

पुनस्तद्बहिः पूर्वं चिन्तितेष्वष्टदळेषु इन्द्रं सुराधिपतिं विघ्न(विघ्नेश)-पार्षदं तर्पयामि। इत्यादि ब्रह्मान्तं संतर्प्य, पुनस्तदायुधानि वज्रं तर्पयामि इत्यादि एकैकवारं दळाग्रेषु संतर्पयेत्। पुनः कुम्भोदरं तर्पयामि, इत्येकवारं पुरतस्संतर्प्य, मूलं चतुर्वारं संतर्प्य, अमृतमुद्रां प्रदर्श्य, मानसपूजां कृत्वा अष्टवारं जप्त्वा गण्डूषादिकं समर्पयेत्। पुनरपि मानसपूजां कृत्वा ताम्बूलादि-राजोपचारान् समर्प्य, गणानां त्वेत्यृचा स्तुत्वा, इतः पूर्वं प्राणबुद्धीत्यादि-मन्त्रेण चुळुकोदकं दत्वा, लयाङ्गं कृत्वा उद्वासयेत्। आवाहनसमयोक्तवदेव मन्त्रमुक्त्वा भगवन् क्षमस्व, ओं उद्वासयामीति अञ्जलिजलं प्रक्षिप्योद्वास्य प्रणामं कृत्वा स्वस्यापि लयाङ्गं कुर्यात्। एवं चतुरावृत्तितर्पणविधिस्समाप्तः॥

ग्लौं इति बीजम्॥ एतत्स्तम्भनकरं परम्॥

अथ वनस्थलीमध्यगतगजग्रहणोपायविधिर्लिख्यते —

अथ गजलिप्सुर्नृपतिः गजवनमध्ये प्रसारयेद्वारिम्।

तत्र वारिमिति गजपतनार्थमवटविशेषः॥

तन्निकटे सुविशालं चतुरश्रं कारयेच्च गृहवर्यम्॥

परिवीतदृढावरणं तच्च चतुर्द्वारतोरणोल्लसितम्।
तस्मिन्मण्डपमध्ये चतुरश्रामुन्नतां स्थलीं कृत्वा॥

स्थलीमिति॥ विघ्नेशपूजार्थं वेदिकामित्यर्थः॥

उत्तरभागे तस्याः कुण्डं रचयेद्यथापुरा तत्र।

पूर्वं सप्तमपटलोक्तचतुरश्रं कुण्डमित्यर्थः ॥

चापजहरिभवमानुषचक्रप्रोक्तानथाक्षरान्मन्त्री ।
ऊर्ध्वादिमेखलासु क्रमेण विलिखेन्निजेष्टसमवाप्त्यै ॥

अत्र चापजहरिभवेत्यादेरयमर्थः — चापजचक्रप्रोक्ताक्षराणि धनुरादीनि वृश्चिकान्तानि । तानि तु अकारादीनि ञकारान्तानि । हरिभवचक्रप्रोक्ताक्षराणि सिंह्मादीनि कर्कटान्तानि तु ओकारादीनि ऐकारान्तानि । मानुषचक्रप्रोक्ताक्षराणि मेषादीनि मीनान्तानि तु अकारादीनि ळकारान्तानि । एतान्मूर्धादितिसृषु रेखासु क्रमेण प्रादक्षिण्येन विलिखेत् । एवं कुण्डप्रकारः ॥

अत्र मण्डपनिर्माणप्रकारः आगमान्तरोक्तप्रकारेण विस्तारेण लिख्यते ॥ सारसंग्रहे —

राज्ञां होमाभिषेकेषु दीक्षादानव्रतादिषु ।
भानोर्गत्या दिशो ज्ञात्वा पुण्याहं वाचयेत्सुधीः ॥

ततः पञ्चनिनादेन मण्डपं रचयेत् शुभम् ।
ज्येष्ठमध्याधमत्वेन तन्मानं त्रिविधं मतम् ॥

षोडशाष्टदशमितैर्हस्तैर्मानमिहोत्तमम् ।
हस्तैर्विंशतिभिः केचिन्मानमुत्तममूचिरे ॥

मध्यमं द्वादशकरैश्चतुर्दशकरैर्मतम् ।
अधमं दशभिर्हस्तैः मितमाहुर्मनीषिणः ॥

केचित्तु नवभिस्तद्वत्सप्तभिर्वाथ पञ्चभिः ।
हस्तैर्मितं वदन्त्यत्र विस्तारायामसंयुतम् ॥

स्तम्भैष्षोडशभिर्युक्तं चतुर्द्वारं सुशोभनम् ।

दिक्षु द्वाराणि चत्वारि सार्धांगुलकरद्वयात् ॥

सार्ध्यंगुलकरद्वन्द्वाद्विदधीत करद्वयात् ।
ततो मण्डपसूत्रं तु त्रिगुणं परिकल्पयेत् ॥

पूर्वादिषु क्रमात्तस्य मध्यभागे तु वेदिका ।
इष्टकाभिर्मृदा वा सा कार्या दर्पणसन्निभा ॥

वेदिकोणेषु विन्यस्याः स्तम्भा वेदस्वरूपकाः ।
ते चोत्तमे तदर्धोच्चा मध्यमाधमयोः पुनः ॥

अष्टहस्तोन्नतिमितास्ततो द्वादश शोभनाः ।
ऋजवः पञ्चहस्तास्ते सशिखास्तु समन्ततः ॥

चतुष्कोणेषु चत्वारश्चाष्टौ ते सूत्रकोटिषु ।
समान्तराळास्सर्वे ते स्थाप्याः षोडश देशिकैः ॥

पञ्चमांशोन्मितांस्तांश्च निखनेद्भुवि देशिकः ।
मध्यस्तम्भचतुष्काग्रादेकीभूताग्रकं पुनः ॥

कृत्वा काष्ठचतुष्कं तु तदग्रे कलशं शुभम् ।
शोभितं कमलेनाथ मुखस्थेन स्वदारुजम् ॥

निर्मितं शिल्पिभिस्सम्यक् स्थापयेद्देशिकोत्तमः ।
आच्छादयेत्ततो वंशैः कटैः केशदळैश्च तम् ॥

मण्डपद्वारबाह्ये च युग्मं युग्मं दिशां क्रमात् ।
अश्वत्थोदुम्बरप्लक्षवटोत्थं तोरणं न्यसेत् ॥

सप्तपद्पञ्चककरं निखनेत् भुवि पूर्ववत् ।

विशालता च तस्याथ दशभिस्त्वंगुलैर्मता ॥

पञ्चांगुलमितं स्थौल्यं त्रिषमं चतुरश्रकम् ।
मध्यभागे तोरणयोस्तिर्यक् काष्ठं प्रविन्यसेत् ॥

सार्धहस्तद्वन्द्वपादः हस्तयुग्मस्तु युग्मकः ।
अग्निमीळेति मन्त्रेण विन्यसेत्पूर्वतोरणम् ॥

इषे त्वेत्यादिमन्त्रेण दक्षिणं तोरणं न्यसेत् ।
अग्न आयेति मन्त्रेण पश्चिमं तोरणं न्यसेत् ॥

शन्नो देवीति मन्त्रेण दद्यादुत्तरतोरणम् ।
ऊर्ध्वे ध्वजं च बध्नीयात् घण्टाचामरभूषितम् ॥

पञ्चहस्तो ध्वजः प्रोक्तः दण्डस्तु दशहस्तकः ।
ततस्तु लोकपालानां पताका बहुसम्मिताः ॥

द्वादशांगुलविस्ताराः तत्तन्मूर्त्या च लाञ्छिताः ।
पीतरक्तश्यामधूम्रश्वेतधूम्रसिताजुनाः ॥

आयुधाङ्काः पताकास्स्युः पुष्पगन्धसमन्विताः ।
यथायोग्यं दण्डयुताः तत्तन्मन्त्रेण तान्न्यसेत् ॥

चन्द्रमण्डलगौरेण वितानेन विभूषितम् ।
दुकूलवेष्टितस्तम्भं नानादीपाद्यलंकृतम् ॥

आम्रपल्लवमालाभिः शोभितं द्वारमुत्तमम् ।
वेष्टितं दर्भरज्वाच विदध्यान्मण्डपं शुभम् ॥

तत्र षोडशहस्तैरष्टादशहस्तैर्वा उत्तमो मण्डपो द्विविधः । विंशतिहस्तैरपि

उत्तमं केचिदाहुः । चतुर्दशहस्तैर्द्वादशहस्तैर्मध्यमोपि द्विविधः । दशहस्तैर्नवहस्तैस्सप्तहस्तैः पञ्चहस्तैस्समायामविस्तारैः कनिष्ठश्चतुर्विधः । अत्र यथावकाशं ऋत्विक्सदस्यसामयिकाद्युपवेशादिसौकर्ययुक्तं मण्डपं कुर्यात् । हस्तस्तु चतुर्विंशांगुलः । अंगुलिमानं तु महाकपिलपाञ्चरात्रे —

वातायनपथं प्राप्य ये भान्ति रविरश्मयः ।
तेषु सूक्ष्मा विसर्पन्तो रेणवस्त्रसरेणवः ॥

परमाणोरष्टगुणस्त्रसरेणुरुदाहृतः ।
तेऽष्ट केशाङ्ग्र्यास्तेष्टौ ल(ली)क्षा यूकास्तदष्टकम् ॥

तदष्टकं यवस्तेऽष्टावंगुली समुदाहृता ।
सा सप्तमांगुलिस्सप्तयवाः सैव तु मध्यमाः ॥

षड्वा सा तु यत्रा प्रोक्ता मानांगुलमितीरितम् ।
विन्यस्तैस्तिर्यगष्टाभिर्यवैर्मानान्तरांगुलम् ॥

शालीभिर्वा ऋजुन्यस्तैस्त्रिभिर्मानांगुलं भवेत् ।
आचार्यदक्षिणकरे मध्यमांगुलिमध्यमम् ॥

पर्वणोरन्तरं दीर्घं मात्रांगुलमुदाहृतम् ।
विनांगुष्ठेन शेषाभिर्मुष्टिमंगुलिभिः कृतम् ॥

चतुर्धा विभजेदेको भागो मध्यांगुलः स्मृतः ।
होमाङ्गानि स्रुवादीनि कुण्डं मुष्ट्यंगुलाश्रयम् ॥

तत्र प्रोक्तविधिना समीकृते भूतले यथोद्दिष्टमानहस्तविस्तारं समचतुरश्रं कोणचतुष्टयनिखातशङ्कुचतुष्टयं दिक्चतुष्टयगतपूर्वापरायतं दक्षिणोत्तरायतं च मध्यमसूत्रं दूरीकृत्य, तच्चतुरश्रक्षेत्रं नवधा विभज्य, परितःकोणचतुष्टये

स्तम्भचतुष्टयं दिक्चतुष्टयगत पूर्वापरायतदक्षिणोत्तरायत सूत्रचतुष्कोष्टगतस्तम्भाष्टकमिति संभूय द्वादश स्तम्भान् नातिस्थूलकृशानव्रणानेकजातीयान्सुवृत्तान्पञ्चहस्तसमुच्छ्रायान् खातप्रविष्टस्वपञ्चमांशान् प्रमाणबहिःस्वस्वस्थौल्यतृतीयांशस्थूलवितस्त्याख्यद्वादशांगुलोन्नतशिखायुक्तान् कुर्यात् ॥

मध्यविभक्तेः कोणचतुष्टये स्तंभचतुष्टयं पूर्वसजातीयं, पूर्वतः किञ्चित् स्थूलं, अष्टहस्तसमुन्नतमण्डपे तन्मानस्यार्धमानोच्चमन्यमण्डपेषु पूर्ववत् सशिखं पञ्चमांशेन प्रविष्टभूतलमिति संभूय षोडशस्तम्भान्निखाय, तेषामुपरि सजातीयानि ऋजून्यव्रणानि शिखाप्रवेशयोग्यवेधयुक्तकोटिद्वयवत्तिर्यक्काष्ठानि शिल्पिभिः परिकल्पितानि द्वादशस्तम्भाग्रेषु मध्यस्तम्भचतुष्टयाग्रेषु च चतुरश्राकारेण समारोप्य, मध्यस्तम्भचतुष्टयशिखाग्रप्रविष्टमूलवेधयुक्तं एकीकृताग्र चतुष्टय निविष्ट शिल्पिवरनिर्मित सजातीयकाष्ठकलश कमलाकृतिशोभिताग्रं, दिक्विदिक्स्थ द्वादशस्तम्भ शिखाग्र प्रोतमूर्ध्व मध्यस्तम्भ चतुष्टयाग्र स्पृष्टाग्र मध्यतिर्यक्काष्ठचतुष्टयमध्यगताग्रं, ऋज्वाकृति यथायोग्यं दीर्घस्थौल्ययुतप्रसारितद्वादशकाष्ठयुतं, अन्यैरपि काष्ठैर्यथायोग्यं दृढीकृतं, नाळिकेरदळैर्वंशकटैर्वा सम्यगाच्छादितं, तैरेव निश्शेषपिहितकोणचतुष्टयं, चतुर्दिक्षु उत्तममध्यमकनिष्ठेषु मण्डपेषु साष्टांगुलहस्तद्वयसचतुरंगुलहस्तद्वयद्विहस्तविस्तारयुतसशाखद्वारचतुष्टयोपेतं मण्डपं विरच्य, मण्डपस्य पूर्वद्वाराद्बहिः हस्तमात्रं परित्यज्य, अश्वत्थवृक्षेणोत्तममध्यमकनिष्ठेषु मण्डपेषु क्रमेण सप्तषट्पञ्चहस्तोच्छ्रितं दशांगुलविस्तृतं पञ्चांगुलस्थूलं विषमचतुरश्रं प्रमाणातिरिक्तवितस्त्युन्नतशिखं, द्वारस्योभयपार्श्वयोः उत्तममध्यमकनिष्ठेषु मण्डपेषु सार्धहस्तद्वयसपादहस्तद्वयहस्तद्वयान्तराळं, यथापूर्वं पञ्चमांशेनान्तःप्रविष्टभूतलं फलकाद्वयं, अग्निमीळे+धातमम्। इति मन्त्रेण निखाय, तत्सजातीयकाष्ठेन समानविस्तारस्थूलं विषमचतुरश्रं कोटिद्वयेपि शिखाप्रवेशयोग्यवेधयुतं तिर्यक्फलकां च समारोप्य दर्भमालां च बध्नीयात् ॥

एवं दक्षिणद्वारे उदुम्बरतरुमयं तोरणं प्राग्वन्निर्मितं इषेत्वेति मन्त्रेण न्यसेत् । ततः पश्चिमद्वारे प्लक्षमयं तोरणं प्राग्वन्निर्मितं अग्न आयाहि + बर्हिषि इति मन्त्रेण न्यसेत् । तत उत्तरद्वारे वटवृक्षमयं तोरणं प्राग्वन्निर्मितं शन्नो-देवीः + स्रवन्तु इति मन्त्रेण न्यसेत् ॥

ततस्तेषामुपरिगतेषु तत्तत्तिर्यक्फलकेषु मध्यतस्सुषिरं विधाय, तेषां तोरणसजातीयकाष्ठेन निर्मितमुत्तममध्यमकनिष्ठेषु मण्डपेषु त्रयोदशैकादशनवां-गुलमात्रदैर्ध्यं तत्तच्चतुर्थांशविस्तारं, शैवे त्रिशूलाकारं, वैष्णवे तोरणोपरिगत-तिर्यक्फलकस्य द्वादशमात्रदीर्घं प्रागादिक्रमेण शङ्खचक्रगदापद्मलाञ्छितं प्रति-तोरणमेकैकं कीलमारोपयेत् ॥

तत्र त्रिशूलनिर्माणप्रकारस्तु पिङ्गळागमे --

शूलेन चिन्हिताः कुर्यात् द्वारशाखास्तु मस्तके ।
शूले नवांगुलं दैर्ध्यं तुरीयांशेन विस्तृतम् ॥

ऋजु वै मध्यशृङ्गं स्यात् किञ्चिद्वक्रं च पार्श्वयोः ।
हीने चैव समाख्यातं त्र्यङ्गुलं रोपयेत्तथा ॥

शेषाणां त्र्यङ्गुलाद्वृद्धिः त्रिशश्चांगुलवृद्धितः ॥ इति ॥

हीने कनिष्ठमण्डपे, शेषाणां मध्यमोत्तमानां, त्रिशः प्रवेशः । वास्तुशास्त्रे —

मस्तके द्वादशांशेन शङ्खचक्रगदाम्बुजम् ।
प्रागादिक्रमयोगेन न्यसेत्तेषां स्वदारुजम् ॥ इति ॥

द्वादशांशतिर्यक्फलकस्य स्वदारुजं तत्तत्तोरणदारुसजातीयकाष्ठसंभवं, तेन कनिष्ठमण्डपे चतुरंगुलोच्चं, मध्यमे सार्धचतुरंगुलमुत्तमे पञ्चांगुलमिति । केचित्तु,

तत्र हस्तोन्मिताः कीलास्संस्थाप्या वैष्णवे तथा ।
शङ्खचक्रगदापद्मैर्लाञ्छिताश्शूलसंभवाः ॥

शैवे, इति सारसंग्रहवचनात् हस्तमात्रं कीलं वदन्ति । तत्र तिर्यक्फलकेषु हस्तमात्रेषु कीलेषु उक्तमानेनैवाग्रदेशेषु शङ्खचक्राकारं वा त्रिशूलाकारं वा कार्यम् । बिलप्रवेशश्च तथा कार्यः । उर्वरीतन्तु तेषां दण्डवद्दृश्यत इति ॥

ततो मण्डपाग्रे दशहस्तदीर्घवंशदण्डावलंबितं हस्तमात्रं विस्तृतं पञ्चहस्तदैर्घ्यं ध्यातव्यमन्त्रदेवतावाहनमूर्त्यङ्कितं घण्टादिभूषिताग्रं सुश्वेतं तत्तद्देवतावर्णानुरूपवर्णं वा ध्वजमारोप्य, दशदिक्षु बाहुमात्रदीर्घा यथायोग्यदण्डावलम्बितास्तत्तल्लोकपालवर्णानुरूपवर्णास्तत्तल्लोकपालवाहनमूर्त्यङ्किताः द्वादशांगुलविस्तृताः, लोकपालानां वेदोक्ततत्तन्मन्त्रेण, त्रातारमिन्द्रं, त्वन्नो अग्ने, सुगं नः पन्थां, असुन्वन्तं, तत्त्वायामि, आनो नियुद्भिः, वयस्सोम(वयं सोम), तमीशानं, अस्मे रुद्रा, स्योना पृथिवीत्यादिना पताकाश्च बध्नीयात् । पीतः पिङ्गः कृष्ण इत्यादि पूर्वं मातृकापूजाविधानोक्ताः लोकपालानां वर्णा इति ॥

पताकाभिरलंकृत्य मण्डपाभ्यन्तरं, सुश्वेतवितानपुष्पमालादिभिरलंकृत्य आम्राश्वत्थदळग्रथितदर्भरज्जुरूपबन्धनमालया मण्डपमन्तर्बहिश्च परिवेष्टय, स्तम्भान् दुकूलैस्संवेष्टय, तत्तन्मध्यस्तम्भचतुष्टयमध्यगते चतुरश्ररूपे मध्यखण्डे अपक्वेष्टकादिभिः स्निग्धमृद्भिर्वा चतुरश्रां दर्पणोदरसन्निभपार्श्वचतुष्टयमध्यप्रदेशां समतालां, वेद्यायामस्यैकादशांशेन नवमांशेन सप्तमांशेन पञ्चमांशेन चतुर्थांशेन तृतीयांशेन वा समुन्नतां हस्तमात्रोन्नतां वा वेदिं विदध्यात् । तदुक्तं सारसंग्रहे —

उच्छ्रयोस्या ईशनवसप्तेष्वब्धित्रिभागकैः ॥ इति ॥

तन्त्रराजे —

विदध्यान्मध्यतो वेदिं करमात्रसमुन्नताम् ॥ इति ॥

इति मण्डपनिर्माणविधिः ॥

एवं मण्डपनिर्माणं कृत्वा, तन्मध्यगतचतुरश्रवेदिकायां तु संप्रोक्त-लक्षणयुतं प्रविरचयेन्मण्डलं स्थलीमध्ये । अस्यार्थः — पूर्वं महागणपतिपूजायां सिद्धमुखपादपीठगलिपिमयपद्मे इत्याद्युक्तपूजामण्डलं स्वर्णपट्टे विलिख्य निधाय तस्मिन् महागणपतिं पूजयेदिति ॥

आवाह्य विघ्नेश्वरमर्चयित्वा प्रागुक्तया तत्र विधानक्लृप्त्या ।
निवेदयित्वा सह भक्ष्यलेह्यैः प्राज्यैश्च साज्यैरपि पूज्यजातैः ॥

आधाय वैश्वानरमत्र कुण्डे समर्च्य मन्त्रैः क्रमशः कृशानोः ।

अस्यार्थः — पूर्वं सप्तमपटले होमसामान्यविधौ पद्मरागासुवर्णीत्याद्युक्ताग्निरजससप्तजिह्वामन्त्रैश्च, पञ्चदशपटलोक्ताग्निमन्त्रषडङ्गैस्सह, सहस्रार्चिषे नमः हृदयाय नमः इत्याद्यैश्च, ओं वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा इत्यग्निमूर्तिमन्त्रेण चाग्नौ समभ्यर्च्य, पुनः पूर्वोक्तक्रमेण अग्नौ विघ्नेश्वरं च समावाह्याऽऽवरणैस्सह समभ्यर्च्य तत्र होमं समाचरेत् ॥

प्रथमं जिह्वामन्त्रैः पद्मरागायै स्वाहेत्याद्यैः, सहस्रार्चिषे नमः हृदयाय स्वाहा इत्याद्यैरङ्गमन्त्रैश्च, ओं वैश्वानर जातवेद इति मूर्तिमन्त्रेण च आज्येनैकैकवारं हुत्वा, पुनरप्याज्येन, ओं भूर्भुवस्स्वः अग्निर्जातवेद इहावह सर्वकर्माणि साधय स्वाहा इत्यनेन, पञ्चविंशतिवर्णसमृद्धिमन्त्रेण त्रिवारं हुत्वा, पुनर्महागणपतिमन्त्रेण नवधा विभज्याज्येनैव जुहुयात् ॥ तत्प्रकारः —

ओं स्वाहा इति प्रथमपर्यायः । ओं श्रीं स्वाहा इति द्वितीयपर्यायः ॥ ओं श्रीं ह्रीं स्वाहा इति तृतीयः । ओं श्रीं ह्रीं क्लीं स्वाहा इति चतुर्थः । ओमित्यादि ग्लौं स्वाहा इति पञ्चमः । ओमित्यादि गं स्वाहा इति षष्ठः । ओमित्यादि गणपतये स्वाहा इति सप्तमः । ओमित्यादि वर वरद स्वाहा इत्यष्टमः । ओमित्यादि सर्वजनं मे वशमानय स्वाहा इति नवमः । इति नवधा विभज्य होमः । पुनः समस्तेन महागणपतिमन्त्रेण मन्त्रवर्णसंख्य-

माज्येनैव हुत्वा पुनस्त्रिमधुसिक्तैः "पूर्वोक्ताष्टद्रव्यैः महागणपतिमन्त्रेण सचतुश्चत्वारिंशत्सहस्रसंख्यैश्च चतुश्शतैश्च चतुर्भिर्दशकैश्चापि तु होमात् चत्वारिंशद्भिरन्तरेण दिनैः"। अस्यार्थः—सचतुश्चत्वारिंशत्सहस्रं चतुश्शतं चत्वारिंशत्संख्यं प्रतिदिनमष्टद्रव्यैर्जुहुयादिति ॥

पुनः मिथुनानां गणपानां निध्योश्च तथाङ्गमातृलोकेशानां मन्त्रैः घृतेन हुत्वाभ्यर्च्य होमं समाप्य सम्यक् मन्त्रैः (होमं सम्यक् समापयेन्मन्त्री ॥)

मिथुनादिमन्त्राः—रमायै स्वाहा । रमेशाय स्वाहा । इत्यादि । पुनरुद्धृत्य निवेद्यादिना समभ्यर्च्य, गणपतिं सावरणमुद्वास्य स्वे हृदये विहरेदित्यर्चनाक्रमो निर्दिष्टः। एवं चत्वारिंशद्दिनैर्जुहुयात् । तस्मात्फलमुच्यते ॥

करिकलभाः करिणीभिः संपात्यन्तेऽवटेऽत्र गणपतिना ।
प्रतिदिनमभ्यवहार्यं च विप्रान् संवर्धितस्तदाशीर्भिः ॥

तेषां मातङ्गानां दद्यात्पञ्चांशदक्षिणां गुरवे ।
तद्विक्रीतं वसु वा प्रसादितायाथ तद्दशांशं वा ॥

एवं गजग्रहणविधिस्समाप्तः ॥

अथ विघ्नेशकल्पोक्तप्रयोगः—

प्रत्येकमथवा मित्रैः हुनेत्सर्वार्थसिद्धये ।

पूर्वोक्ताष्टद्रव्यैरित्यर्थः ॥

भृगुवारे विशेषेण नाळिकेरेण दूर्वया ॥

आवत्सरं हुनेन्मन्त्री श्रियमायुश्च विन्दति ।
अयुतं नियुतं वापि तिलदूर्वाज्यपायसैः ॥

अपस्माराद्यवेताळाः सद्यो नश्यन्ति किंपुनः ।

अपामार्गसमिद्धोमात् ग्रहा नश्यन्ति षण्मुख ॥

पद्महोमेन साम्राज्यं लभते नात्र संशयः ।
उत्पलैर्वश्यमथवा रक्तपद्मेन वा हुनेत् ॥

दध्ना सर्वसमृद्धिस्स्याद्धान्यैः रत्नपतिर्भवेत् ।
वृष्टिकामः प्रजुहुयात् वेतसानां समिद्वरैः ॥

पायसं गुळसंमिश्रं कदळीफलसंयुतम् ।
आज्याक्तैर्नारिकेळैश्च सर्वकाम्यार्थसिद्धये ॥

इति कल्पोक्तं किञ्चिल्लिखितम् ॥

अथ गणपतिमन्त्रप्रसङ्गात् भूतनिग्रहमूषिकविषादिशमनकरं विघ्न(विघ्नेश)-मन्त्रान्तरं कल्पान्तरोक्तमत्र लिख्यते —

ओं नमो गणपतये महावीर दशभुज मदनकालविनाशन मृत्युं हन हन धम धम मथ मथ कालं संहर संहर सर्वग्रहांश्चूर्णय चूर्णय नागान्मोटय मोटय रुद्ररूप त्रिभुवनेश्वर सर्वतोमुख हुंफट् स्वाहा ॥ इति मन्त्रः ॥

अनेनापि शतं जप्त्वा ज्वरादीन् (तं) भस्मना स्पृशेत् ।
जलप्रयोगो मूषायामभिमन्त्र्य प्रदापयेत् ॥

मूषिकविषादौ जलमभिमन्त्र्य प्रसिञ्चेदित्यभिप्रायः ॥

अथ मूषिकविषनाशनमन्त्रप्रसंगात् मंत्रसारोक्तमार्जाररुद्रमन्त्रोऽपि मूषिकाद्युच्चाटनकरो लिख्यते —

वसिष्ठ ऋषिः । अनुष्टुप् छन्दः । रुद्रो मार्जाररूपी देवता । ओं नमो भगवते हृत् । मार्जाररुद्राय शिरः । दुष्टसत्व शिखा । विनाशनाय कवचम् । नखदंष्ट्रायुधाय नेत्रम् । हुंफट् स्वाहा अस्त्रम् । ध्यानम् —

उद्वृत्तोद्भ्रान्तपिङ्गैस्त्रिभिरनलकणानक्षिभिः प्रोद्वमन्तं
कोपोदग्रोग्रदीर्घप्रविरलतरलश्मश्रुमत्युग्रनादम् ।
खादन्तं मूषिकाद्यांश्चटचटति हठादुन्नतादुन्नतांसं
वन्दे मार्जाररुद्रं खरतरनखरं स्तब्धवालाग्रभागम् ॥

ओं नमो भगवते मार्जाररुद्राय दुष्टसत्वविनाशनाय नखदंष्ट्रायुधाय हुंफट् स्वाहा ॥ इति मन्त्रः । व्याघ्राहिमूषिकमुखदुष्टसत्वविनाशनप्रधानोयं मन्त्रः ॥

अथ मूषिकोच्चाटनमन्त्रान्तरं कल्पान्तरोक्तप्रकारेण लिख्यते —

ओं नमः सर्वमूषिकेभ्यो विश्वामित्र आज्ञापयति शीघ्रं गच्छन्तु मूषिकास्स्वाहा ॥ ओं नमो भगवते मार्जाररुद्राय तीक्ष्णनखदंष्ट्रायुधाय त्रिशिरसे रक्तशुक्लकृष्णवदनाय चलत्पुच्छाय सन्नद्धकायाय सर्वदुष्टनिवारणायाखूनुच्चाटयोच्चाटय ह्रीं हुंफट् स्वाहा । अयमपि मूषिकोच्चाटनमन्त्रः ॥

अथ मूषिकोच्चाटनमन्त्रप्रसङ्गात् मन्त्रसारोक्तः कृमिकीटपतङ्गनाशनः हनुमन्मन्त्रोप्यत्र लिख्यते —

वसिष्ठ ऋषिः । अत्यनुष्टुप् छन्दः । हनूमान् देवता । ओं नमो भगवते हृत् । हनूमते शिरः । कृमिकीटपतङ्गादि शिखा । दुष्टसत्वानि कवचम् । नाशय नाशय नेत्रम् । हुंफट् अस्त्रम् ॥ ध्यानम् —

क्रोधोद्घृत्तविघूर्णितारुणतरप्रोद्भ्रान्तनेत्रद्वय-
प्रोद्यद्वह्निशिखास्फुलिङ्गनिकरप्लुष्टारिचोरादिकम् ।
घोरं मेरुसमानदेहमरुणश्रोत्रास्यपद्मोस्स्थलं
वन्दे वानरमाञ्जनेयमनिशं दंष्ट्राकराळाननम् ॥

ओं नमो भगवते हनूमते क्रिमिकीटपतङ्गादिदुष्टसत्वानि नाशय नाशय हुंफट् । इति मन्त्रः ॥ अस्य यन्त्रम् —

मध्ये तारं स्वरयुगलसत्केसरे चाष्टपत्रे
मन्त्रस्यार्णान् जलनिधिमितानालिखेद्व्यञ्जनार्णैः ।
वीतं मालामनुवरभवैरक्षरैश्चापि बाह्यैः
भूगेहस्थं प्रवरफलदं वानरेन्द्रस्य यन्त्रम् ॥

आलिख्य तालपत्रे शोभनदिवसे प्रजप्य मन्त्रममुम् ।
शाल्यादिसस्यमध्ये संस्थाप्यास्त्रेण दिक्षु रक्षां च ॥

वितनोतु कीटवैरिः तेन विहङ्गाद्युपद्रवे घोरे ।

[ अथ कृमिकीटादिनाशनः हनूमन्मालामन्त्रः — ]

ओं नमो भगवते हनूमते रामप्राणसमाय लक्ष्मणप्राणदाय सीता-दुःखहरणाय रावणदर्पघ्नाय मम शत्रूनाशु विनाशय सर्वसमृद्धिं कुरु कुरु हुंफट् स्वाहा । इति मालामन्त्रो द्विषष्टयर्णः ॥ अथ प्रयोगः —

सस्यानां वा फलानां वा वानरोपद्रवे मनुम् ।
प्रतिजप्य प्रतिक्षिप्तं पाषाणमथ तान्प्रति ॥

उच्चाटयेन्मन्त्रशक्त्या नष्टसंज्ञान्दिशो दश ।
सस्यानामपि सर्वेषां फलानामप्युपद्रवान् ॥

क्रिमिकीटपतङ्गादिदुष्टसत्वसमुद्भवान् ।
भस्म संजप्य निक्षिप्तं तत्तदाकारभूमिषु ॥

शमयेत् किञ्च महतीं संपदं च समावहेत् ।

अथाकाशभैरवकल्पोक्तप्रकारेण महागणपतिमन्त्रस्य प्रयोगविशेषो लिख्यते—

साध्यद्रुफलके लोहे तालपत्रेऽथ ताम्रके ।

लिखेत्सप्तचतुष्कोष्ठे रेखारेखाग्रशूलके ॥

क्रमान्मन्त्रं बहिस्साध्यमावाह्य च गणेश्वरम् ।
संपूज्य विधिवच्चक्रं स्पृशन्मन्त्रं सहस्रशः ॥

जपावसानात्पूर्वं तु स्त्रीणामाकर्षणं लभेत् ।
सप्तचतुष्कोष्ठं अष्टाविंशतिकोष्ठम् ॥

प्रयोगान्तरम् —

श्वेतार्कमप्यपामार्गं परेतपृथिवीरुहम् ।
सिद्धयोगदिनात्पूर्वं शुक्रसौम्येन्दुवारके ॥

गन्धपुष्पं च धूपं च बलिं दत्त्वा प्रणम्य तत् ।
यदर्थं केन सृष्टासि भूतले सांप्रतं वयम् ॥

आगतास्तत्र तत्सिद्ध्यै तिष्ठ तिष्ठ महौषधे ।
इति सूत्रं त्रिधावेष्टय दशवारं जपेन्मनुम् ॥

सिद्धयोगे समुत्पाद्य मूलमच्छिद्रमादितः ।
सक्तांगुलीयकं कृत्वा वेष्ट्वा तस्मिन् गणेश्वरम् ॥

अष्टोत्तरसहस्रं तु जप्त्वा धृत्वांगुलीयकम् ।
तेन हस्तेन जन्तूनां कराग्रं संस्पृशेद्बुधः ॥

तस्य स्पर्शनमात्रेण महावश्यं भवेद्ध्रुवम् ॥
जन्तवस्तद्वशं प्राप्य दास्यन्ति प्राणमप्यहो ।

प्रयोगान्तरम् —

काकमालि(ची)शिफां पिष्ट्वा कृत्वा तु कुलिशं ततः ।

संपूज्य पूर्ववज्जप्त्वा सर्पावासबिले न्यसेत् ॥

सर्प आगत्य कुलिशमाघ्राणति वरानने ।
आदाय कुलिशं पश्चात् गच्छेदारोप्य मूर्धनि ॥

सहैव सर्प आगच्छेद्देशदेशान्तरेष्वपि ।
सर्पं निवर्तितुं देवि कुलिशं भूतले न्यसेत् ॥

सर्पो वसति तत्रैव गच्छेत्तोयाभिषेचनात् ।

काकमालि(ची)-மணத்தக்காளி, शिफेति मूलमुच्यते ॥

प्रयोगान्तरम् —

व्याघातयोगसहिते लज्जामूलं यथापुरा ।
सक्तांगुलीयकं कृत्वा धृत्वाऽनामिकयाऽङ्घ्रिके ॥

मेळने पुरुषं योषा स्पृशेद्वक्षसि तेन तु ।
तत्क्षणादेव षण्डत्वं जायते मोचनात्सुखम् ॥

लज्जा-வரள்சுண்டில்

अथ महागणपतिप्रसङ्गात् महागणपतिविषयं यन्त्रमपि कल्पान्तरोक्त-मत्र लिख्यते —

बीजं षट्कोणमध्ये स्फुरदनलपुरे तारगे दिक्षु लक्ष्मी-
मायाकन्दर्पभूमीस्तदनु रसपुटेष्वालिखेद्बीजषट्कम् ।
तत्सन्धिष्वङ्गमन्त्रान् वसुदलकमले मूलमन्त्रस्य वर्णान्
शिष्टान्पत्रेषु विद्वान्विलिखतु गुणशश्चान्त्यमन्त्ये पलाशे ॥

आवीतं लिपिभिः क्रमोत्क्रमवशात्पाशांकुशाभ्यामपि
क्ष्माकोणद्वि(त्रि)तयेन वेष्टितमिदं यन्त्रं गणाधीशितुः ।

मध्यें षड्भवनेष्टत्रपृथिवीबाह्यनलेष्वन्तरे
वश्याकर्षणमारणाचलगतिग्रामाङ्कितं चेष्टदम् ॥

अस्यार्थः — प्रथमं षट्कोणं विलिख्य, तन्मध्ये प्रणवस्योदरगत-त्रिकोणमध्ये गमिति बीजं विलिख्य, तन्मध्ये साध्यनामादीन्विलिखेत्। अथवा तारके इति कप्रत्ययपाठे षट्कोणमध्यस्फुरदनलपुरे इत्येकं पदम्। अस्मिन्पक्षे, प्रथमं षट्कोणं, तदन्तस्त्रिकोणं, तदन्तः प्रणवं तदन्तः गणपति-बीजं विलिखेत्। पुनः चतुर्दिक्षु, श्रीबीजभुवनेशीकामभूबीजानि क्रमेण विलिख्य, पुनःषट्कोणेषु तारश्रीभुवनेशीकामभूगणपतिबीजानि ओं श्रीं ह्रीं क्लीं ग्लौं गं इत्येतानि क्रमेण विलिखेत्। अथवा गणपतिबीजमेव सर्वत्र विलिखेत्। पुनः षट्कोणसन्धिषङ्गषट्कं विलिख्य, तद्बहिरष्टदळं पद्मं विलिख्य सप्तसु मन्त्रवर्णान् त्रिशस्त्रिशो विलिखेत्। अवशिष्टमेकमक्षरमन्त्ये विलिखेत्। गणपतये वर वरद सर्वजनं मे वशमानय स्वाहा। इति मन्त्रो द्वाविंशत्यक्षरः। (षड्बीजावशिष्टः)। तद्बहिर्वृत्तत्रयं विलिख्य प्रथमे वृत्ते पूर्वां दिशमारभ्य मातृकां क्षान्तां विलिख्य, द्वितीये वृत्ते आमिति पाशाक्षरेणावृत्त्या वेष्टयेत्। तृतीये वृत्ते क्रोमिति अंकुशबीजेनावृत्त्या वेष्टयेत्। तद्बहिश्चतुरश्रद्वयं विलिखेत्। मध्ये षड्भवने षट्कोणमध्ये, अन्तरे त्रिकोणषट्कोणान्तरे ग्राम इति। विद्वेषणमिति ॥

अथ गणपतिमन्त्रप्रसङ्गात् विधया यदद्येत्यृचा युक्तस्य महागणपति-मन्त्रस्य यन्त्रं मन्त्रसारोक्तमत्र लिख्यते —

आलिख्य कर्णिकामध्ये शक्तिं कोणेषु षट्स्वपि।
तारश्रीशक्तिकामेळाविघ्नबीजानि तद्बहिः ॥

आलिख्य चाष्टपत्रस्य पद्मस्य प्रथमे दळे।
क ए इत्यादिवाग्बीजं द्वितीये च दळे पुनः ॥

यद्येति ऋचो वर्णानष्टौ पत्रे तृतीयके ।
कामबीजं हसेत्यादिपत्रे भूयश्चतुर्थके ॥

उदगा इत्यष्टवर्णानालिख्यापि च पञ्चमे ।
सकलेत्यादिशाक्तं च बीजं षष्ठे दळे पुनः ॥

सर्वं तदिन्द्र इत्यादि वर्णानष्टौ च सप्तमे ।
पत्रे गणपतेत्यादि नव वर्णान् दळेष्टमे ॥

सर्वेत्यादिद्वादशार्णान् तद्बाह्ये मातृकाक्षरैः ।
समावेष्टय कुगेहाश्रिष्वैं श्रीं ह्रीं क्लीमिति क्रमात् ॥

आलिखेद्धेमपट्टादौ हेमसूच्या शुभे दिने ।
महागणपतेर्यन्त्रमेतत्त्रैलोक्यरञ्जनम् ॥

धनधान्यधराधेनुवासोलङ्कारभाजनैः ।
रत्नैर्भाण्डैश्च निचितामावहेन्महतीं श्रियम् ॥

अस्यार्थः — प्रथमं षट्कोणं विलिख्य, तन्मध्ये भुवनेशीं विलिख्य, षट्सु कोणेषु प्रणवश्रीबीजभुवनेशीकामबीजभूबीजविघ्नबीजानि विलिख्य, तद्बहिरष्टपत्रपद्मं विलिख्य, तेषु प्रथमे दळे वाग्भवपूर्वकं विद्याप्रथमपादं विलिख्य, द्वितीये ऐन्द्रगायत्र्या अष्टौ वर्णानालिख्य, तृतीये कामबीजपुरस्सरं विद्याद्वितीयपादं विलिख्य, चतुर्थे ऐन्द्रगायत्र्या नवमाद्यष्टौ वर्णानालिख्य, पञ्चमे सौः इत्येतद्बालातृतीयबीजपुरस्सरं विद्यातृतीयपादं, षष्ठे ऐन्द्रगायत्र्यास्तृतीयपादं विलिख्य, सप्तमे गणपते वर वरदेति नव वर्णान्विलिख्य, अष्टमे अवशिष्टान् द्वादशवर्णानालिख्य, तद्बहिर्मातृकावर्णैः संवेष्टय चतुरश्रकोणेषु वाग्भवश्रीभुवनेशीकामबीजानि विलिखेदिति । अस्मिन् पक्षे गणपते इति संबुध्या मन्त्रः ॥

अथ विघ्न(विघ्नेश)बीजविधानमुच्यते —

गणक ऋषिः । निचृद्गायत्री छन्दः । बीजगणपतिर्देवता । अं बीजम् । गं शक्तिः । गां हृत् । गीं शिरः । इत्याद्यङ्गानि । ध्यानम् -

रक्तो रक्ताङ्गरागांशुककुसुमयुतस्तुन्दिलश्चन्द्रमौळिः
नेत्रैर्युक्तस्त्रिभिर्वामनकरचरणो बीजपूरात्तनासः ।
हस्ताग्राक्लृप्तपाशांकुशरदवरदो नागवक्त्रोऽहिभूषो
देवः पद्मासनो वो भवतु नतसुरो भूतये विघ्नराजः ॥

ओं गम् । इति मन्त्रः । अर्चाविधौ ओं गं नमः इति नमोन्तः । होमविधौ ओं गं स्वाहा । इति स्वाहान्तः । लक्षचतुष्टयजपः । ऐश्वर्यवश्यप्रधानोयं मन्त्रः । पूर्वोक्तैरष्टद्रव्यैः पुरश्चरणाहोमो दशांशः ॥ अथ पूजा —

केवलाष्टदळपद्मे पीठे तीव्राद्याभिर्नवशक्तिभिः समभ्यर्च्य तत्र समावाह्य समर्चयेत् ॥

गणाधिपाय० गणेशाय० गणनायकाय० गणक्रीडाय० ४ इति कर्णिकायां चतुर्दिक्षु यजेत् । अङ्गैः किञ्जल्के समर्चयेत् । किञ्जल्के दळमूले इत्यर्थः । पुनः वक्रतुण्डाय० एकदंष्ट्राय० महोदराय० गजाननाय० लम्बोदराय० विकटाय० विघ्नराजाय० धूम्रवर्णाय० ८ इति दळमध्येषु यजेत् । तद्बाह्ये मातृभिः । तद्बाह्ये लोकेशैः ॥

अथ प्रयोगः --

नाळिकेरान्वितैर्मन्त्री सक्तुलाजतिलैर्हुनेत् ।
आरभ्याच्छां प्रतिपदं चतुर्थ्यन्तं चतुश्शतम् ॥

दिनशस्सर्ववश्यं स्यात्सर्वकामप्रदं नृणाम् ।

प्रयोगान्तरम् --

तिलतण्डुलकैर्लक्ष्मीवश्यकृच्च यशस्करम् ॥

मधुरत्रयसिक्ताभि[1] र्लाजाभिः सप्तवासरम् ।
जुहुयात्कन्यकार्थी वा कन्यका वा वरार्थिनी ॥

आज्यगुळमधुसंमिश्रं त्रिमधुरसंज्ञं भवति । तिलतण्डुलकैः पृथक् पृथक् हुनेदित्यर्थः ॥

प्रयोगान्तरम् --

चतुर्थ्यां नाळिकेरैस्तु होमः सद्यः श्रियावहः ।

प्रयोगान्तरम् --

हविषा घृतसिक्तेन सर्वकार्यार्थदो हुतः ॥

प्रयोगान्तरम् --

दध्यक्तलोणमुद्राभिः हुनेन्निशि चतुर्दिनम् ॥

इष्टार्थसिध्यै मतिमान् सद्यस्संवादसिद्धये ।

अयमर्थः -- लोणमुद्रा लवणगुळिका । अन्ये मुद्रेति [2] मुदिरेति वदन्ति । मुदिरेति कुलर्था கொள்ளு शिम्बी धान्यविशेष इति केचित् । तस्मिन्पक्षे लवणेन मुद्रया च दधिसिक्तया रात्रौ चतुर्दिनं, संख्यानुक्ते सहस्रमिति न्यायात् सहस्रं जुहुयात् । तस्मादिष्टलाभश्च वादिप्रतिवादिनोः कार्यसंवादश्च भवेत् ॥

प्रयोगान्तरम् —

ईदृशं गणपं ध्यात्वा मन्त्री तोयैस्सुधामयैः ।

---

१ लाजशब्दः आकारान्तः स्त्रीलिङ्गोपि भवति ।

२ मुतिरेति ग, ङ, पाठः

दिनादौ दिनशस्तस्य तर्पयेन्मस्तके सुधीः ॥

चत्वारिंशच्चतुःपूर्वं तत्पूर्वं वा चतुश्शतम् ।
चत्वारिंशद्दिनात्तस्य कांक्षिता सिद्धिरेष्यति ॥

अस्य मन्त्रस्य यन्त्रम्—

नवनीते नवे लिख्यादनुलोमविलोमतः ।
उदरस्थितसाध्याख्यं तद्बीजं तु प्रवेष्टयेत् ॥

समीरणं प्रतिष्ठाप्य जप्त्वाष्टशतसंख्यकम् ।
तूष्णीं प्रभक्षयेदेतत्सप्तरात्राद्वशीकरम् ॥

अस्यार्थः—कर्णिकायां षट्कोणमध्ये परस्पराभिमुखं गकारद्वयं विलिख्य, मध्ये बीजभागयोः साध्यादिकं विलिख्य, बीजैस्संवेष्ट्य, षट्कोणेष्वङ्गषट्कं लिखित्वा अष्टदळकेसरेषु स्वरान्विलिख्य, दळेषु "एकदंष्ट्राय (एकदन्ताय) विद्महे वक्रतुण्डाय धीमहि । तन्नो विघ्नः (दन्तिः) प्रचोदयात् ॥" इत्येनां गायत्रीं विभज्य त्रिशस्त्रिशो विलिख्य बाह्ये व्यञ्जनावेष्टितं, बहिश्चतुरश्रद्वये बीजं विलिख्य, साध्यस्य प्राणप्रतिष्ठां कृत्वा जप्त्वा, साध्यदिग्वदनो भूत्वा अर्धरात्रौ स्वयं भक्षयेत् ॥ (उक्तफलं भवति ॥)

अथ क्षिप्रप्रसाद(दन)गणपतिमन्त्रो लिख्यते—

गणक ऋषिः । विराट्छन्दः । क्षिप्र(प्रसादन)गणपतिर्देवता । गं बीजम् । नमः शक्तिः । गामित्यादिना षडङ्गानि । ध्यानम्—

धृतपाशाङ्कुशकल्पकलतिकास्वरदश्च बीजपूरयुतः ।
शशिशकलकलितमौळिः त्रिलोचनोऽरुणतनुश्च गजवदनः ॥

भासुरभूषणदीप्तः बृहदुदरः पद्मविष्टरो ललितः (ह्लसितः ।)

ध्येयोऽनायतदोःपदसरसिरुहस्संपदे सदा मनुजैः ॥

गं क्षिप्रप्रसादनाय नमः। इति मन्त्रः। लक्षचतुष्कं जपेत्। वश्यै-श्वर्यप्रधानोयं मन्त्रः ॥

त्रिमधुरसिक्तैश्च तिलैरयुतं पुरश्चरणाहोमः।
मोदकादिभिः पूर्वोक्तैरष्टद्रव्यैर्वा पुरश्चरणाहोमः ॥

अथ पूजार्थं यन्त्रं विवरणोक्तप्रकारेण लिख्यते--

कर्णिकायां षट्कोणे बीजे साध्यादिकं विलिखेत्। तेनैव बीजेन वेष्टयेत। तद्बहिरष्टदळकेसरेषु स्वरान् दक्षेषु क्षिप्रेति पूर्वदळे, प्र इत्याग्नेये, पुनरेकैकदळे एकैकवर्णं, तद्बहिः गायत्र्या व्यञ्जनैश्च वेष्टयेत्। गायत्री पूर्वोक्तेति। अस्मिन्यन्त्रे पूर्वोक्तविघ्न(विघ्नेश)पीठे समावाह्य विघ्नं (विघ्नेशं) संपूजयेत्। अङ्गैः प्रथमावृतिः। विघ्नाय॰(विघ्नेशाय॰) विनायकाय॰ वीराय॰ शूराय॰ वरदाय॰ हस्तिमुखाय॰ लम्बोदराय॰ एकदन्ताय॰ ८ इति द्वितीयावृतिः। मातृभिस्तृतीया। लोकेशैश्चतुर्थी ॥

अथ प्रयोगः—

पूज्यास्सितघृतपायसहवनात्सञ्जायते महालक्ष्मीः।

एतैः पृथक् पृथक् हुनेदित्यर्थः। सितेति शर्करा। पूज्या इति पूर्वेण संबन्धः ॥

प्रयोगान्तरम्--

केवलघृतहुतमुदितो विघ्नस्सद्यो वशीकरोति जगत् ॥

प्रयोगान्तरम्—

एकमपि नाळिकेरं सचर्मलोष्टेन्धनं हुनेन्मन्त्री।
दिनशश्चत्वारिंशद्दिनतस्स तु वाञ्छितार्थमभ्येति ॥

सचर्मलोष्टेन्धनमिति । तस्य नालिकेरस्य चर्म लोष्टं च इन्धनीकृत्य तस्मिन्नग्नौ तदन्तस्थनालिकेरखण्डमेव हुनेत् ॥

प्रयोगान्तरम् —

सह पृथुकसक्तुलाजैः तिलैरभीष्टार्थसिद्धये जुहुयात् ।
सापूपनालिकेरेक्षुकदलीभिस्तथा समधुराभिः ॥

अष्टभिरेतैर्विहितो होमस्सर्वार्थसाधको भवति ।

अष्टभिरिति ॥ पूर्वोक्तपृथुकादियुक्तमपूपादिद्रव्यमष्टद्रव्यं, समधुराभिः त्रिमधुरसिक्ताभिरित्यर्थः । एतैरष्टद्रव्यैर्मिलितैरेव जुहुयात् । अत्र लाजेति कलमलाजा ॥

प्रयोगान्तरम् —

दिनशस्सघृतान्नहुतो गृहयात्रायापको गृहस्थानाम् ॥

गृहयात्रायापक इति गृहयात्रां नयतीत्यर्थः ॥

अन्वहमन्हामादौ गणपं सन्तर्पयेच्चतुःपूर्वम् ।
चत्वारिंशद्वारं शुद्धजलैरिन्दिराप्तये मन्त्री ॥

प्रयोगान्तरम् —

बिम्बादम्बुदवत्समेत्य सवितुस्सोपानकैराजितैः
तोयं तोयजविष्टरं धृतलतादन्तं सपाशांकुशम् ।
नासां साध्यनृके निधाय सुधया तद्रन्ध्रनिर्यातया
सिञ्चन्तं वपुरन्वहं गणपतिं स्मृत्वाऽमृतैस्तर्पयेत् ॥

अथ गणपतिमन्त्रप्रसङ्गात् अर्कगणपतिमन्त्रोपि कल्पान्तरोक्तोऽत्र योग्यतावशाल्लिख्यते —

ओं गं गणपति(ते) अर्कगणपति(ते)वर वरद सर्वजनं मे वशमानय स्वाहा ॥
इति मन्त्रः । ऋष्यादिकं तु पूर्वोक्तमेव । ध्यानम् —

मूषारूढं लम्बसूत्रं सर्पयज्ञोपवीतिनम् ।
विषाणं पाशकमलं मोदकं च करैर्दृढम्( धृतम्) ॥

मुक्तामणिलताजालैर्भूषितं भुवनेश्वरम् ।
भद्रासनोपविष्टं तं पूजयेन्नित्यशः सुधीः ॥

लक्षं जपेत् ॥

अथ गणपतिमन्त्रप्रसङ्गात् गणपतिमन्त्रोपि कल्पान्तरोक्तोत्र योग्यतावशात् लिख्यते —

गणक ऋषिः । गायत्री छन्दः । श्रीगणपतिर्देवता ॥ * गं बीजम् । विन्दुश्शक्तिः । ब्रह्म बीजमित्यादि । ओं गणपतये नमः इति मन्त्रः । गां गीं इत्यादिषडङ्गानि ॥

अथ गणपतिमन्त्रप्रसङ्गात् वक्रतुण्डगणपतिमन्त्रोपि लिख्यते —

शुक ऋषिः । अनुष्टुप्छन्दः । वक्रतुण्डगणपतिर्देवता । हुं बीजम् । वं शक्तिः । ब्रह्म बीजम् । इत्यादि । वक्रतुण्डाय हुम् इति मन्त्रः । षडक्षरैरेव षडङ्गम् । ध्यानम् —

स्वर्णवर्णं चतुर्बाहुं पाशाङ्कुशधरं प्रभुम् ।
वरदाभयहस्तं च विलसत्कर्णचामरम् ॥

द्वादशसहस्रं जपः ॥

अथ वक्रतुण्डगणपतिमन्त्रप्रसङ्गात् गणपतित्र्यक्षरीमन्त्रोपि कल्पान्तरोक्तोत्र योग्यतावशाल्लिख्यते —

---

* गकारो बीजं इति ग, घ, ङ, मातृकापाठः

शुक्र ऋषिः । गायत्री छन्दः । गणपतिर्देवता । ओं बीजम् । ह्रीं शक्तिः । ब्रह्म बीजमित्यादि । ओं ह्रीं श्रीं ह्रीं इति मन्त्रः । गामित्यादिषडङ्गानि । ध्यानम् —

स्वर्णवर्णं चतुर्बाहुं पाशांकुशधरं विभुम् ।
आम्रपात्रं स्वदन्तं च शक्तियुक्तं विचिन्तयेत् ॥

अथ गणपतिमन्त्रप्रसङ्गात् कुक्षिगणपतिमन्त्रोपि लिख्यते —

ओं हुं ग्लौं ठठ राजसर्वजनहृदयगतिमति मुखक्रोधजिह्वां स्तंभय स्तंभय स्वाहा इति मूलमन्त्रः । ओं हुं ग्लौं हृदयाय नमः । [1]ठं ठं (ठ ठ) शिरसे स्वाहा । ओं राज शिखायै० ओं सर्वजनहृदयगतिमतिमुखक्रोधजिह्वां कवचम् । ओं स्तम्भय स्तम्भय नेत्रम् । ओं स्वाहा अस्त्रम् । लक्षजपः । रजनीचूर्णमिश्रितैर्नाळिकेरैः दशांशं पुरश्चरणाहोमः ॥

अथ वीरगणपतिमन्त्रः —

ओं ह्रीं हरिहरि गणपतये वरद वरद सर्वलोकं मे वशमानय स्वाहा इति मन्त्रः । ओं ह्रीं हृत् । ओं हरिहरि शिरः । ओं गणपतये शिखा । ओं वरद वरद कवचम् । सर्वलोकं मे वशमानय नेत्रम् । ओं स्वाहा अस्त्रम् ॥

अथ गणपतिमन्त्रप्रसङ्गात् हरिद्रागणपतिमन्त्रोपि लिख्यते —

मदन ऋषिः । अनुष्टुप् छन्दः । हरिद्रागणपतिर्देवता । ग्लौं बीजम् । स्वाहा शक्तिः । गां ग्लां हृत् । गीं ग्लीं शिरः इत्याद्यङ्गानि । ध्यानम् —

पाशांकुशौक्षवधनुश्शरपद्मदन्त-
शाल्यग्ररत्नकलशाभरणाभिरामम् ।

---

१ ठ ठ इति न्याय्यः पाठः ।

पार्श्वस्थदारयुगळं कनकाभमीडे
हारिद्रभं गणपतिं करुणानिवासम् ॥

ओं हुं गं ग्लौं हरिद्रागणपतये वर वरद सर्वजनहृदयं स्तम्भय स्तम्भय स्वाहा इति मन्त्रः । स्तम्भनप्रधानोयं मन्त्रः ॥

अथ गणेशमन्त्रप्रसङ्गात् गणेशाङ्कनिवासिनीमहालक्ष्मीमन्त्रोपि गणेशकल्पोक्तोऽत्र लिख्यते —

गणक ऋषिः । निचृद्गायत्री छन्दः । गणेशाङ्कनिवासिनी महालक्ष्मीर्देवता । श्रीं बीजम् । ह्रीं शक्तिः । स्वाहा कीलकम् । ओं श्रां हृत् । श्रीं श्रीं शिरः । ह्रीं श्रूं शिखा । क्लीं श्रैं कवचम् । ग्लौं श्रौं नेत्रम् । गं श्रः अस्त्रम् ॥ ध्यानम् --

मुक्ताभां दिव्यवस्त्रां मृगमदतिलकां फुल्लकल्हारमालां
केयूरैर्मेखलाद्यैर्नवमणिखचितैर्भूषणैर्भासमानाम् ।
कर्पूरामोदवक्त्रामपरिमितकृपापूर्णनेत्रारविन्दां
श्रीलक्ष्मीं पद्महस्तां जितपतिहृदयां विश्वभूत्यै नमामि ॥

ओं श्रीं ह्रीं क्लीं ग्लौं ओं नमो भगवति महालक्ष्मि वर वरदे श्रीं विभूतये स्वाहा । अष्टाविंशतिवर्णः । ऐश्वर्यप्रधानोयं मन्त्रः । अष्टाविंशतिसहस्रजपः ॥

अथ यन्त्रम् --

मध्ये तारं च लक्ष्मीं हुतवहभवने शक्तिमारक्षमार्णान्
सप्तारे सप्त(अष्टाब्जेत्वष्ट)वर्णान् स्वरदलकमले शिष्टवर्णान् क्रमेण ।
तद्बाह्ये चन्द्रवर्णं तदनु पुटमहीकोणलक्ष्मीसमस्तं
त्रैलोक्यैश्वर्यजातप्रदमिदमतुलं सर्वसौभाग्ययन्त्रम् ॥

शातकुम्भमये पत्रे सर्वसौभाग्ययन्त्रकम् ।

समालिख्य मरुत्स्थाप्य शतं जप्त्वा विधानतः ॥

उत्तमाङ्गे तु कण्ठे वा बाहुमूलेऽथवा सुधीः ।
निवहेद्यन्त्रराजं तु निखिलैश्वर्यसिद्धये ॥

सौभाग्ययन्त्रकं यत्र वर्तते साधकाहृतम् ।
परितस्तस्य षट्क्रोशं पुण्यक्षेत्रं तपस्विनाम् ॥

अस्यार्थः — तत्र चन्द्रवर्णमिति वृत्तम् । लक्ष्मीसमस्तमिति श्रामादि-
दीर्घसमस्तश्रीबीजमित्यर्थः । अत्रशिष्टं स्पष्टार्थम् ॥

अथ प्रयोगः —

उपरागे समारभ्य आदाने सोमसूर्ययोः ।
तथा जपेदाग्रहणं दृढव्रतमतन्द्रितः ॥

सहस्रक्रोशविस्तीर्णां सर्वसस्यविशालिनीम् ।
अकण्टकां महीं प्राप्य भोगभोगी भवेद्ध्रुवम् ॥

बलेन वा तस्करेण कपटानुनयेन वा ।
न गृह्णीयान्न गृह्णीयान्न गृह्णीयात्कदाचन ॥

दुष्टधीर्यस्तु गृह्णीयात् गुरुहस्ताच्च पुस्तकात् ।
तं दहत्याशु सा लक्ष्मीरनुगान्वयसंयुतम् ॥

इति वल्लभाम्बाकल्पः समाप्तः ॥

अथ गणपतिमन्त्रप्रसङ्गात् मन्त्रदेवताप्रकाशिकोक्तप्रकारेण विघ्न(विघ्नेश)
त्र्यक्षरीमन्त्रविधानमुच्यते —

भार्गव ऋषिः । विराट्छन्दः । श्रीमहागणपतिर्देवता । श्रीं बीजम् ।
ह्रीं शक्तिः । ग्रां हृत् । श्रीं शिरः इत्याद्यङ्गानि । ध्यानम् —

गजेन्द्रवदनं साक्षात् चलत्कर्णं सचामरम् ।
हेमवर्णं चतुर्बाहुं पाशांकुशधरं परम् ॥

स्वदन्तं दक्षिणे हस्ते सव्ये त्वाम्रफलं तथा ।
पुष्करे कलशं चैव धारयन्तमनुस्मरेत् ॥

ह्रीं ग्रीं ह्रीं इति मन्त्रः । ऐश्वर्यफलप्रधानोयं मन्त्रः । गकाररेफचतुर्थस्वर-बिन्दुयुक्तो हृल्लेखासंपुटितो मन्त्रः । अयुतजपेनाधिकारसिद्धिः । चतुर्लक्षजपः । अपूपैः दशांशं पुरश्चरणाहोमः । ब्रह्मचारिणं भोजयेच्च ॥

अथ पूजा —

प्रागुक्तगणपतिपीठे समावाह्य समर्चयेत् । अङ्गैः प्रथमावृतिः । विघ्न-(विघ्नेश)गणपतये० विनायकगणपतये० वीरगणपतये० शूरगणपतये० वरदगणपतये० हस्तिमुखगणपतये० एकदन्तगणपतये० लम्बोदरगणपतये० क्षिप्र(क्षिप्रप्रसादन) गण-पतये० महागणपतये० १० इति द्वितीयावरणम् । मातृभिस्तृतीया । लोकेशैश्चतुर्थी । तदायुधैः पञ्चमी । अथ विनियोगः —

शालितण्डुलसिद्धान्नं क्षीरप्रस्थं प्रदापयेत् ।
चतुष्पलं गुळं चैव अर्धमुष्टि (गुळस्यार्ध) च सर्पिषम् ॥

तदर्धं मरिचं दद्यात् तदर्धं जीरकं भवेत् ।
एवं संस्कृतसिद्धान्नं समभ्यर्च्य विनायकम् ॥

तदग्रे जुहुयादग्नावेकमासमतन्द्रितः ।
अवश्यं लभते सिद्धं धनमक्षय्यमुत्तमम् ॥

प्रयोगान्तरम् —

पृथुकान् गुळसंमिश्रान् नाळिकेरसमन्वितान् ।
मरीचैर्जीरकैश्चैव सैन्धवेन विमिश्रितान् ॥

कृत्वैतैर्जुहुयादग्नौ सहस्रं मन्त्रवित्तमः ।
इष्टं च लभते द्रव्यं धनं वा धान्यमेव वा ॥

पशून्वासांसि शुभ्राणि नात्र कार्या विचारणा ।

प्रयोगान्तरम्—

कृष्णपक्षे चतुर्थ्यां तु पूजयित्वा विनायकम् ।
अपूपैर्गुडसंमिश्रैः सुपक्वैश्च घृताप्लुतैः ॥

तद्देवसन्निधौ मन्त्री जुहुयात् त्रिसहस्रकम् ।
तस्य सिध्यति मासात्तु धनं बहु न संशयः ।

वश्यार्थी मधुहोमेन राजानं वशमानयेत् ।
पललैस्सगुडैर्हुत्वा मन्त्रिणं वशमानयेत् ॥

पललं तिलम् ॥

मध्वक्तैरिक्षुदण्डैश्च प्रमदा वशमानयेत् ।
कन्यार्थी जुहुयाल्लाजैः तन्नामपुटमन्त्रतः ॥

एकां कन्यां वटून् सप्त भोजयेत्स लभेद्वधूम् ।
चन्द्रसूर्यग्रहे प्राप्ते पलं तु कपिलाघृतम् ॥

कर्ण(कर्ष)मानं वचाचूर्णं मिश्रीकृत्याभिमन्त्रयेत् ।
पद्मपत्रे सहस्रं तु तत्पिबेन्नियतव्रती ॥

यावज्जीर्णं भवेत्तावन्नाशनीध्यानतत्परः ।
गद्यपद्यमयीं वाणीं सप्ताहात् भाषतेऽचिरात् ॥

वन्ध्या ऋतुस्नानदिने पूजयित्वा विनायकम् ।
निष्कार्धपादमानेन हरिद्रां सैन्धवं वचाम् ॥

द्रव्यत्रयमपि क्रमेण निष्कनिष्कार्धतत्पादमानेनेत्यर्थः ।

गोमूत्रं कुडुबे षष्ठं सहस्रमभिमन्त्रितम् ॥

वटुं कन्यां भक्ष्यभोज्यैर्भोजयित्वाथ तत्करात् ।
प्रार्थयित्वाथ तद्दत्तं पिबेन्नारी तदौषधम् ॥

ततस्सा लभते पुत्रं सर्वलक्षणसंयुतम् ।
आयुष्मन्तं सुरूपं च बुद्धिमन्तं श्रिया युतम् ॥

विवादविषयं क्षेत्रं समासाद्य समाहितः ।
आत्मानं गणपं ध्यात्वा पुष्करागेण बुद्धिमान् ॥

संपुटं मोक्षशब्देन मन्त्रं कृत्वा विचक्षणः ।
भेदयेत् शृङ्खलादीनि ततो मोक्षो भविष्यति ॥

हरिचन्दनकर्पूरैरालिप्य गणनायकम् ।
क्षीरेण खण्डमिश्रेण जुहुयात्तस्य सन्निधौ ॥

अग्रे सहस्रं त्रिदिनैः ज्वरशान्तिर्भविष्यति ।
सुपक्वान्मधुरान्कृत्वा अपूपान्सर्पिषा सह ॥

जुहुयात् ज्वलिते वह्नौ शमं याति मसूरिका ।
अपूपैः क्षौद्रसंयुक्तैः जुहुयाद्देवसन्निधौ ॥

मासमेकं प्रमेहस्य शान्तिस्स्यान्नात्र संशयः ।
गुडाक्तैस्सुपलाशैः स्यात् क्षेत्रलाभश्च जुह्वतः ॥

अन्नेन चान्नं लभते च हुत्वा विन्देत्कुमारीं मधुलाजहोमैः ।
मधुसिक्तैः लाजैरित्यर्थः ॥

अथ गणपतिमन्त्रप्रसङ्गात् उच्छिष्टगणपतिमन्त्रो लिख्यते—

(ॐ)हस्तिमुखाय लम्बोदराय उच्छिष्टाय महात्मने क्रों प्रीं ह्रीं उच्छिष्टाय स्वाहा ॥ इति मन्त्रः ॥ ब्रह्मा ऋषिः । गायत्रीछन्दः । उच्छिष्टगणपतिर्देवता । क्रों बीजम् । स्वाहा शक्तिः । ओं हस्तिमुखाय लंबोदराय हृत् । ओं उच्छिष्टाय महात्मने शिरः । ओं क्रों शिखा । ओं प्रीं कवचम् । ओं ह्रीं नेत्रम् । ओं उच्छिष्टाय स्वाहा अस्त्रम् । उच्छिष्टो भूत्वा अष्टम्यां समभ्यर्च्य कृष्ण-चतुर्दशीपर्यन्तं नित्यमष्टोत्तरसहस्रं जपेत् ॥

अस्य ध्यानं गणेशस्य पाशांकुशधनुश्शरान्(रम्) ।
सान्द्रसिन्दूररक्ताङ्गं नग्ननारीमुखातुरम् ॥

नारीयोनिमुखास्वादलोलुपं काममोहितम् ।
स्ववामाङ्कस्थदाराणां गाढालिङ्गनतत्परम् ॥

स्वपादपद्मभक्तानामभीष्टफलदायकम् ।

विद्यावश्यप्रधानोयं मन्त्रः ॥

अथ हेरम्बगणपतिमन्त्रः—

ओं गं नमः ॥ इति मन्त्रः । दीर्घस्वरयुक्तेन मूलमन्त्रबीजेन षडङ्गम् । लक्षत्रयं जपः ॥

अथ विघ्नेशमन्त्रप्रसङ्गात् विघ्न(विघ्नेश) मालामन्त्रश्च कल्पान्तरोक्तोऽत्र लिख्यते—

ओं नमो गणपते महावीर दशभुज मदनकालविनाशन मृत्युं हन हन कालं संहर संहर धम धम मथ मथ त्रैलोक्यं मोहय मोहय ब्रह्मविष्णु-रुद्रान्मोहय मोहय अचिन्त्यबलपराक्रम सर्वव्याधीन् विनाशय विनाशय

सर्वग्रहान् चूर्णय चूर्णय नागान्मोटय मोटय त्रिभुवनेश्वर सर्वतोमुख हुंफट् स्वाहा ॥

अथ शक्तिगणपतिमन्त्रो लिख्यते —

श्रीं गणपतये नमः ॥ ओं ह्रीं सं हृत् । ओं ह्रीं विरिविरि गणपति शिरः । ओं ह्रीं वर वरद शिखा । ओं ह्रीं सर्वजनं मे कवचम् । ओं ह्रीं वशमानय नेत्रम् । ओं ह्रीं स्वाहा अस्त्रम् । ऋष्यादिकं पूर्ववत् । ध्यानम् —

आलिङ्ग्य देवीमभितो निषण्णां परस्परास्पृष्टकटीनिवेशम् ।
सन्ध्यारुणं पाशसृणी वहन्तं भयापहं शक्तिगणेशमीडे ॥

ओं ह्रीं सं विरिविरिगणपति( ते)वर वरद सर्वजनं मे वशमानय स्वाहा ॥ इत्येको मन्त्रः ॥ ओं ह्रीं सं विरिविरिगणपत्यै वरे वरदे सर्वजनं मे वशमानय स्वाहा ॥ इत्यपरो मन्त्रः । संभूय शक्तिगणपतिमन्त्रः ॥

अथ मन्त्रदेवताप्रकाशिकोक्तप्रकारेण कुक्षिगणपतिमन्त्रोऽपि लिख्यते —

ओं हुं ग्लौं हृत् । ठठ शिरः । राज शिखा । सर्वजनहृदयगतिमतिक्रोधजिह्वाः कवचम्। स्तम्भय स्तम्भय नेत्रम् । स्वाहा अस्त्रम् । गणक ऋषिः । निचृद्गायत्री छन्दः । कुक्षिगणपतिर्देवता ॥

ऐक्षवजलनिधिमध्ये द्वीपे सर्वर्तुसुन्दरे मन्त्री ।
मणिमयमण्डपमध्ये माणिक्यमणिप्रभाक्तभूमितले ॥

सिंहमुखपादपीठे सरसिजमध्ये समासीनम् ।
गजवदनं तं ध्यायेत् पाशांकुशिनं महाकुक्षिम् ॥

उदरगतछिद्राढ्यं शङ्करसुसमाहितात्मकुक्षिं च ।
सर्वालंकृतिदीप्तं वाञ्छितदमहीननद्धाङ्गम् ॥

ओं हुं ग्लौं ठठ राजसर्वजनहृदयगतिमतिक्रोधजिह्वाः स्तम्भय स्तम्भय स्वाहा ॥ इति मन्त्रः ॥ लक्षं जपः । हरिद्राचूर्णमिलितैर्नालिकेरैः दशांशं पुरश्चरणाहोमः । ततः प्रयोगः —

त्र्यधिकं त्रिंशत्त्रिशतं तिसृषु च सन्ध्यासु संजपेन्मन्त्री ।
तावत्त्र्यक्तं जुहुयात् रजनीमिश्रं च नाळिकेरफलम् ॥

इति सप्तदिनाल्लभते सेनास्तम्भं तथा मन्त्री ।
सन्ध्यास्वथवा मन्त्री विघ्नेशं सप्त तर्पयेत्तोयैः ॥

त्र्यक्तं त्रिमधुरमिश्रमित्यर्थः ॥

अथ विघ्नेशमन्त्रप्रसङ्गात् मन्त्रदेवताप्रकाशिकोक्तप्रकारेण शक्तिगणपति-मन्त्रोपि लिख्यते —

गणक ऋषिः । निचृद्गायत्री छन्दः । शक्तिगणपतिर्देवता । गं बीजम् । ह्रीं शक्तिः । ओं ह्रीं हृत् । गं शिरः । ह्रीं शिखा । वशं कवचम् । आनय नेत्रम् । स्वाहा अस्त्रम् । ध्यानम् —

हस्ते बिभ्रतमिन्दुखण्डवरदौ पाशांकुशौ पुष्कर-
स्पृष्टस्वप्रमदावराङ्गमनया स्पृष्टं ध्वजाग्रस्पृशा ।
श्यामाङ्ग्या विधृताब्जया त्रिनयनं चन्द्रार्धचूडं जपा-
रक्तं हस्तिमुखं स्मरामि सततं भोगादिलोलं विभुम् ॥

ओं ह्रीं गं ह्रीं वशमानय स्वाहा ॥ इति मन्त्रः । लक्षजपः । इक्षुखण्डैः दशांशं पुरश्चरणाहोमः । इक्षुखण्ड-नाबतसाखर-खण्डशर्करा । पूजादिकं पूर्वत-रोक्तवत् । अथ प्रयोगः —

अपूपैराज्यसिक्तैर्वा जुहुयान्मन्त्रसिद्धये ।

स्वगुरुं धनधान्याद्यैः प्रीणयेत्प्रीतमानसः ॥

हुत्वाऽपूपैस्त्रिमध्वक्तैर्वशयेद्भुवि पार्थिवान् ।
चतुर्थ्यां नालिकेरेण महतीं श्रियमाप्नुयात् ॥

लवणैर्मधुसंयुक्तैः वशयेद्वनिताजनम् ॥

अथ गणपतिमन्त्रप्रसङ्गात् लक्ष्मीगणपतिमन्त्रोपि लिख्यते —

गणक ऋषिः । अनुष्टुप्छन्दः । लक्ष्मीगणेशो देवता । ओं नमो लक्ष्मीगणेशाय मह्यं पुत्रं प्रयच्छ स्वाहा ॥ इति मन्त्रः ॥

लक्ष्मीगणेशमन्त्रेण नवनीतं प्रदापयेत् ।
शतं सहस्रमयुतमभिमन्त्र्य ऋतौ पुनः ।
ऋतुस्नानदिने स्त्रीभ्यः एवं दद्यात्सुताप्तये ॥

इति प्रपञ्चसारसारसंग्रहे गीर्वाणेन्द्रविरचिते
षोडशः पटलः ॥

---

## ॥ अथ सप्तदशः पटलः ॥

अथ मन्मथविधानमुच्यते —

संमोहन ऋषिः। गायत्री छन्दः। मनोभवो देवता। *ईं बीजम्। इं शक्तिः। क्लां हृत्। क्लीं शिरः। इत्याद्यङ्गानि ॥

अरुणमरुणवासोमाल्यदामाङ्गरागं
स्वकरकलितपाशं सांकुशास्त्रेक्षुचापम्।
मणिमयमकुटाद्यैर्दीप्तमाकल्पजातैः
अरुणनलिनसंस्थं चिन्तयेदङ्गयोनिम् ॥

क्लीं ॥ इति मन्त्रः। वश्यैश्वर्यप्रधानोयं मन्त्रः। तरणिलक्षजपः। तरणिरादित्यः। द्वादशलक्षजप इत्यर्थः। किंशुकपुष्पैस्त्रिमधुरसिक्तैः दशांशं होमः। किंशुकं-पाङ्गराचे पुष्पम् முருக்கம்பூ

अथ पूजा —

पद्मपीठे, मोहिन्यै० क्षोभिण्यै० त्रासिन्यै० स्तम्भिन्यै० आकर्षिण्यै० द्राविण्यै० आह्लादिन्यै० क्लिन्नायै० क्लेदिन्यै० ९ इति संपूज्य कामं समावाह्य समर्चयेत्। अङ्गैः प्रथमावृतिः। द्रां शोषणबाणाय० द्रीं मोहनबाणाय० क्लीं सन्दीपनबाणाय० ब्लूं तापनबाणाय० सः मादनबाणाय० इति द्वितीयावृतिः। अनङ्गरूपायै० अनङ्गमदनायै० अनङ्गमन्मथायै० अनङ्गकुसुमायै० अनङ्गकुसुमातुरायै० अनङ्गशिशिरायै अनङ्गमेखलायै अनङ्गदीपिकायै० ८ इति तृतीयावृतिः। लोकेशैश्चतुर्थी। अस्य यन्त्रमुच्यते —

---

*ईं बीजं इति ख, ग, घ, ङ, मातृकापाठः

आलिख्यात्कर्णिकायामनलपुरपुटे मारबीजं ससाध्यं
तद्रन्ध्रेष्वङ्गषट्कं बहिरपि गुणशो मारगायत्रिवर्णान् ।
मालामन्त्रं दळाग्रेष्वपि गुहमुखशः पार्थिवाश्रिष्वनङ्गं
कुर्याद्यन्त्रं तदेतद्भुवनमपि वशे का कथा मानवेषु ॥

अस्यार्थः — प्रथमं षट्कोणं विलिख्य तत्कर्णिकामध्ये क्लीं इति कामबीजं विलिख्य, तन्मध्ये साध्यनामादियन्त्रन्यायान्विलिखेत् । पुनः षट्सु कोणेषु षडङ्गानि विलिखेत् । तद्बहिरष्टदळं पद्मं विलिख्य तद्दळमूलेषु कामगायत्री-वर्णान् त्रिशस्त्रिशो विलिख्य, तद्दलाग्रेषु काममालामन्त्रं (मन्त्रवर्णान्) षट्षट्संख्यया विलिखेत् । तद्बहिश्चतुरश्रं विलिख्य तत्कोणेषु कामबीजं विलिखेत् ॥

कामदेवाय विद्महे पुष्पबाणाय धीमहि ।
तन्नोऽनङ्गः प्रचोदयात् ॥

इत्येषा कामगायत्री ॥

काममालामन्त्रस्तु —

नमः कामदेवाय सर्वजनप्रियाय सर्वजनसंमोहनाय ज्वल ज्वल प्रज्वल प्रज्वल सर्वजनस्य हृदयं मम वशं कुरु कुरु स्वाहा ॥ इति ॥

इति यन्त्रकलसकलशो बहुशः *क्रमतः पुमान्स परिमोहयति ।
प्रमदाऽवनीश्वरसभानगरादिकमीश्वरानपि वशे कुरुते ॥

अथास्यैव काममन्त्रस्य अन्यः पूजाविधिरुच्यते —

येनार्चितस्स देवो वाञ्छितमखिलं करोति मन्त्रविदाम् ।

* कतमः इति ख, मातृकापाठः

ध्यानम् —

अरुणतरवसनमाल्यानुलेपनाभरणमिषुशरासधरम् ।
न्यस्तशरबीजदेहो ध्यायेदात्मानमङ्गजं रुचिरम् ॥

अष्टमपटलोक्तपञ्चबाणान्न्यस्त्वा, एवं ध्यात्वा, पूजयेदङ्गजम् । पूर्वविधानोक्ते पीठे समावाह्य समर्चयेत् । अमृतोद्भवाय स्वाहा हृत् । मकरकेतनाय स्वाहा शिरः । सङ्कल्पजाय स्वाहा शिखा । अक्षतरूपाय स्वाहा कवचम् । इक्षुधनुर्धराय स्वाहा नेत्रम् । पुष्पशराय स्वाहा अस्त्रम् ॥ एतैरङ्गैः प्रथमावृतिः । द्रां शोषणबाणाय नमः । द्रीं मोहनबाणाय नमः । क्लीं सन्दीपनबाणाय नमः । ब्लूं तापनबाणाय नमः । सः मादनबाणाय नमः । इति द्वितीयावृतिः । युवत्यै० विप्रलम्भायै० ज्योत्स्नायै० सुभ्रुवे० मदद्रवायै० सुरतायै० वारुण्यै० लीलायै० कान्त्यै० सौदामिन्यै० कामछलायै चन्द्रलेखायै० शुक्त्यै० मदनायै० योन्यै० मायावत्यै० १६ इति तृतीयावृतिः । शोकाय० मोहाय० विलासाय० विभ्रमाय० मदनातुराय० अपत्रपाय० यूने० कामिने० चूतपुष्पाय० रतिप्रियाय० ग्रीष्माय० तपान्ताय० ऊर्जाय० हेमन्ताय० शिशिराय० मदाय० १६ एतैर्मारपरिचारकैश्चतुर्थ्यावृतिः । परभृते० सारसाय० शुकाय० मेघाय० अपाङ्गाय० भ्रूविलासाय० हावाय० भावाय० ८ इति पञ्चम्यावृतिः । ह्रीं माधव्यै० ह्रीं मालत्यै० ह्रीं हरिणाक्ष्यै० ह्रीं मदोत्कटायै० ४ एताः स्मरप्रियाश्चामरहस्ताः कोणेषु चतुर्षु पूज्या इति षष्ठ्यावृतिः । इन्द्रादिभिस्सप्तमी ॥

मदनविधानमितीत्थं प्रोक्तं योऽनेन पूजयेद्विधिना ।
स तु सकललोकपूज्यः भवेन्मनोज्ञश्च मन्दिरं लक्ष्म्याः ॥

विलसदहंकारतनुः मनश्शिखो विभ्रमास्पदीभूतः ।
बुद्धिशरीरां नारीं मनस्सदा चित्तयोनिमधिगच्छेत् ॥

विलसदहंकारतनोरित्यादेरयमर्थः —एवमादिगुणयुक्तो भूत्वा एवमादिगुणवतीं नारीं मोहयेत् इति । अथास्य यन्त्रमाह —

साध्याख्या तारवर्णैः प्रतिपुटितलसत्कर्णिकं पत्रसञ्ज-
त्तारर्त्विक्पक्षजाष्टादशसमिदृतुगण्डान्तगान्ताक्षराढ्यम् ।
आशाशूलाङ्कितं तद्विपतिरिपुदले सम्यगालिख्य सेरं
मारं जप्त्वा समायाशयति वशगता सा भवेत्सद्य एव ॥

अयमर्थः — अष्टदलं पद्मं विलिख्य तत्कर्णिकायां ईं इत्येतत् शक्तिप्रणवं विलिखेत् । पुनस्तन्मध्ये साध्यायास्त्रियो नामाक्षराण्येकैकं ईं इत्यनेन शक्तिप्रणवबीजेन पुटित्वा जीवस्य परितो विलिखेत् । तारस्य ईकारार्थो विवरणे प्रोक्तः । पुनर्दलेषु प्रथमदले, ताराख्यं शक्तिप्रणवं ईं इति । ऋत्विगिति अन्त्यस्वरः अः इति । पक्षजेति पञ्चदशस्वरः अं इति । अष्टादशेति अष्टादशो वर्णः ख इति । समिदिति सप्तमो वर्णः ऋ इति । ऋतु इति षष्ठस्वरः ऊ इति । गण्डान्त इति एकादशस्वरः ए इति । गान्त इति विंशतिवर्णः घकारः । एतानष्टौ वर्णानष्टपत्रेषु एकैकं विलिख्य, पुनरष्टदलाग्राणि शूलाकाराणि कुर्यात् ॥ एवं ताम्बूलपत्रे विलिख्य, साध्यनामयुतं प्राणप्रतिष्ठामन्त्रं मारबीजं च जप्त्वा स साधको यां भक्षयति सा स्त्री अस्य साधकस्य सद्य एव वशगा भवति ॥

अथ प्रयोगः —

हंसारूढो मदनः त्रैलोक्यक्षोभको भवेदाशु ।
द्युयुतो रञ्जनकृत्स्यात् जीवोपेतस्तथाऽऽयुषे शस्तः ॥

अयमर्थः — हंसारूढ इति हंसपदोत्तरो मदनः । हंसः क्लीं इत्येवं जपतः प्रोक्तफलसिद्धिरित्यर्थः । द्युयुत इति । द्यु हकारः । तदुपरि कामः । हं क्लीं इति जपतः प्रोक्तफलं ॥ जीवोपेत इति । जीवः सकारः । तदुपरि कामः । सः क्लीं । इत्येवं जपतः प्रोक्तफलसिद्धिः ॥

अथास्यैव मारमन्त्रस्य प्रयोगान्तरमुच्यते —

तारयुजा त्वमुनाऽग्नौ हुत्वा संपातितेन चाज्येन ।
संभोजयेत्पतिं स्वं वनिता स नितान्तरञ्जितो भवति ॥

अस्यार्थः — प्रणवपूर्वकं ओं क्लीं स्वाहा इत्यनेन प्रकारेण स्वाहाकारात्पूर्वं साध्यनाम संयोज्य, अथवा कामबीजस्य ईकारांशमपास्य तत्र ओंकारं संयोज्य, क्लों स्वाहा इत्येवंप्रकारेण, आज्येन यथाशक्ति हुत्वा संपातिताज्यं वनिता स्वं पतिं भोजयेत् । अनेनैव स सुतरां रञ्जितो भवति ॥

प्रयोगान्तरम् —

दध्यक्ताभिर्जुहुयात् लाजाभिः कन्यकां समाकांक्षन् ।
कन्यापि वरं लभते विधिना नित्यानुरक्तममुनैव ॥

प्रयोगान्तरम् —

अभिनवैस्सुमनोभिरशोकजैः दधियुतैर्विहिता हवनक्रिया ।
परमवश्यकरी परिकांक्षितामभिवहेदचिरादिव कन्यकाम् ॥

पूर्वोक्तलाजहोमस्य या काचित्कन्यका लप्स्यते । अस्य त्वशोक-पुष्पहोमस्याभिकांक्षिता कन्यका लप्स्यते । वश्यकरी चेति विशेषः । किञ्च,

अभीष्टदायी स्मरणादपि स्मरः तथा जपादर्चनया विशेषतः ।
प्रसादतोऽस्याखिललोकवर्तिनः चिराय वश्याश्च भवन्ति मन्त्रिणः ॥

अथ काममन्त्रप्रसङ्गात् पञ्चमनोभवात्मकं यन्त्रमपि मन्त्रसारोक्तमत्र योग्यतावशाल्लिख्यते —

वह्नेर्गेहयुगान्तरस्थमदने मायां लिखेद्वाग्भवं
षट्कोणेष्वथ सन्धिषु प्रविलिखेत् ब्लूंकारमावेष्टयेत् ।
स्त्रीबीजेन समीरितार्धयुगळप्रक्षोभणं त्रैपुरं
यन्त्रं पञ्चमनोभवात्मकमिदं सौन्दर्यसंपत्करम् ॥

इदं त्रिपुरभैरवीयन्त्रमपि पञ्चमनोभवात्मकत्वादत्र लिखितम् । अस्यार्थः- प्रथमं षट्कोणं विलिख्य तत्कर्णिकायां कामबीजं तन्मध्ये भुवनेशीं, तन्मध्ये साध्यनामादीन् विलिख्य षट्सु कोणेषु ऐं इति वाग्भवं विलिख्य कोणसन्धिषु ब्लूमिति विलिख्य कोणाग्रेषु स्त्रींकारषट्कं विलिख्य तस्यैकैकस्य रेफांशेन स्वं स्वं परिवर्त्य इतरेतरस्याधोभागेन नीत्वा तदितरेतरस्य ईकारांशेन संबध्नीयात् इति ॥

अथ पञ्चमनोभवयन्त्रान्तरमपि कल्पान्तरोक्तप्रकारेण लिख्यते—

मदनभासितमध्यमथेन्द्रियच्छदविराजितपञ्चमनोभवम् ।
स्मरशरैर्लिपिभिश्च समावृतं कुगृहकोणविराजितमान्मथम् ॥

लिखतु पञ्चमनोभवयन्त्रमित्युदितमेतदशेषसमृद्धिदम् ।
कनकनिर्मितपट्टतले ततः शुभतरे दिवसे विधृतं पुनः ॥

सकलमानवसिद्धसुराङ्गनाहृदयरञ्जनमीप्सितसिद्धिदम् ।
रुचकपूर्वविभूषणमध्यगं विदधती वनिताप्यखिलान्नरान् ॥

निजवशे प्रविधाय रमां परां समधिगम्य सुतैस्सह मोदते ।
इति विलिख्य च कुंकुमकर्दमे तदनुलिप्ततनोस्सकलं जगत् ॥

वशमुपैति निरीक्षणमात्रतः किमुत सान्त्वसहासनसङ्गमैः ।

अस्यार्थः— प्रथमं पञ्चदळं पद्मं विलिख्य तन्मध्ये कामबीजं तन्मध्ये साध्यनामादीन् विलिख्य, तेषु पञ्चदळेषु ऐं ह्रीं क्लीं ब्लूं स्त्रीं इति पञ्चमनोभवमन्त्रान् विलिख्य, तद्बहिर्वृत्तद्वयं विलिख्य, प्रथमे वृत्ते द्रां द्राविणे इत्यादिप्रागुक्तपञ्चबाणमन्त्रैः वेष्टयेत् । द्वितीये वृत्ते मातृकया च संवेष्ट्य, बहिश्चतुरश्रकोणेषु कामबीजं विलिखेत् इति ॥

अथ काममन्त्रप्रसङ्गात् रतिमन्त्रोपि गणपतिविषयोक्तोऽत्र योग्यतावशाल्लिख्यते —

वामदेवऋषिः । देवीगायत्रीछन्दः । रतिप्रिया देवता ॥ क्लीं बीजम् । ईं शक्तिः । आं क्लां हृत् । ईं क्लीं शिरः । इत्याद्यङ्गानि ॥ ध्यानम् —

हेमाभां दिव्यवस्त्रां स्तनभरनमितां दिव्यमाल्याङ्गरागां
हस्ताग्रद्वन्द्वनीलोत्पलकुसुमधरां फुल्लकल्हारनेत्राम् ।
हृद्याङ्गीं सुप्रसन्नां मणिकनकमहाभूषणैर्भूषिताङ्गीं
पञ्चेषुप्राणनाथां प्रणतभयहरां मारविद्यां नमामि ॥

ईं क्लीं नमो भगवति रतिप्रिये महामोहिनि कामेशि सर्वलोकवशं कुरु कुरु स्वाहा ॥ इति मन्त्रः द्वात्रिंशदर्णः । सहस्रं जपेत् । अथास्य यन्त्रम् —

तिर्यक् तथोर्ध्वं शररत्नरेखाः क्रमेण मन्त्रं परितस्त्रिशूलम् ।
कामाख्यमायावृतपूर्णबाह्यं जगद्वशक्षोभविमोहयन्त्रम् ॥

यन्त्रमेतन्महावीर्यममोघं सर्वसिद्धिदम् ।
तालपत्रे समालिख्य पूज्य जप्त्वा सपल्लवम् ।
अष्टोत्तरशतं मन्त्री स्वेष्टद्वारोपरि न्यसेत् ॥

योषिद्वा पुरुषो वापि तत्क्षणात् स्ववशं व्रजेत् ।
वधूनां वामपादाङ्कपांसूनादाय मन्त्रवित् ॥

तस्मिन्यन्त्रमिदं लिख्य पूज्य जप्त्वा यथापुरा ।
तद्गृहात्स्वगृहान्तं तन्मन्त्रवित् विकिरेत् शनैः ॥

तन्मार्गेणैव सा योषा समायाति ध्रुवं क्षणात् ।
तथैव पुरुषाकर्षं दक्षपादाङ्कपांसुना ॥

अथवाऽऽकर्षभेदेन वक्ष्यमाणेन साधयेत् ।
जन्तूनामङ्गजेष्वेकमादाय रतिविद्यया ॥

तत्र तत्प्राणमावाह्य विधिवत् साधकोत्तमः ।
तद्यन्त्रमध्ये संस्थाप्य जपेदष्टोत्तरं शतम् ॥

त्रिदिनात्साधकेन्द्रस्य वशमायान्ति जन्तवः ।
एवं तु कामिनी कुर्यात् कामिनं कामसिद्धये ॥

कामी च कामिनीं चापि स्त्री स्त्रियं पुरुषं पुमान् ॥ इति ॥

अस्यार्थः — शररत्नरेखा इति । शराः पञ्चशराः । रत्नं नवरत्नानि । माया इति ईंकारः । पल्लवमिति मन्त्रान्ते हुंफडादि तत्तत्क्रियोचितपद-योजनम् । ईंकारादिमन्त्रवर्णान् कोष्ठेषु बीजद्वयेन बाह्ये वेष्टयेच्च ॥

अथ गोपालाष्टादशाक्षरीमन्त्रविधानमुच्यते —

श्रीनारद ऋषिः । गायत्री छन्दः । श्रीकृष्णो देवता । क्लीं कृष्णाय हृत् । गोविन्दाय शिरः । गोपीजन शिखा । वल्लभाय कवचम् । स्वाहा अस्त्रम् ॥ ध्यानम् —

अव्यान्मीलत्कलायद्युतिरहिरिपुपिच्छोल्लसत्केशजालो
गोपीनेत्रोत्पलाराधितललितवपुर्गोपगोवृन्दवीतः ।
श्रीमद्वक्त्रारविन्दप्रतिहसितशशाङ्काकृतिः पीतवासाः
देवोऽसौ वेणुवाद्यक्षपितजनधृतिर्देवकीनन्दनो वः ॥

मीलत्कलायद्युतिः अधःकृतकलायद्युतिः ॥ क्लीं कृष्णाय गोविन्दाय गोपी-जनवल्लभाय स्वाहा ॥ इति मन्त्रः ॥ मोक्षप्रधानोऽयं मन्त्रः ॥ विंशतिसहस्रं जपः । अरुणकमलैः दशांशं होमः ॥ अथ पूजा—एकोनविंशपटले वक्ष्यमाणा-

ष्टाक्षरीविधाने वक्ष्यमाणत्रैणवपीठे समावाह्य समर्चयेत् कृष्णम् ॥ अङ्गैः प्रथमावृतिः ॥ आशापालैः द्वितीयावृतिः ॥

अथ प्रयोगः —

जुहुयाद्दुग्धहविर्भिः विमलैस्सर्पिस्सितोपलोपेतैः ।
इष्टां तुष्टो लक्ष्मीं समावहेत्सद्य एव गोविन्दः ॥

सितोपलं नावत्तसारवर-खण्डशर्करा ॥

प्रयोगान्तरम् —

ग्रामं गच्छन्नगरमपि वा मन्त्रजापी मनुष्यः
देवेशं तं मुखमनु मुहुस्तर्पयेद्दुग्धबुद्ध्या ।
शुद्धैस्तोयैस्सतु बहुरसोपेतमाहारजातं
दद्यान्नित्यं प्रवरधनधान्यांशुकाद्यं मुकुन्दः ॥

तोयं दुग्धमिति संकल्प्य देवस्य मुखे आस्ये सन्तर्पयेत् अपूर्वनगरादिप्रवेशकामः । तेन मुकुन्दोऽस्मै अन्नादिकं ददाति ॥

प्रयोगान्तरम् —

भिक्षावृत्तिर्दिनमनु तमेवं विचिन्त्यात्मरूपं
गोपस्त्रीभ्यो मुहुरपहरन्तं मनोभिस्सहैवम् ।
[1]लीलाकृत्याललितललितैश्चेष्टितैर्दुग्धसर्पिः
दद्याद्यं वा स पुनरमितामेति भिक्षां गृहेभ्यः ॥

अस्यार्थः — भिक्षुकस्तु गोपीस्त्रीभ्यः अपहर्ता गोविन्दः आत्मेति ध्यात्वा, तस्य लीलादीन्यपि च ध्यात्वा भिक्षार्थं गच्छेत् । स दुग्धादिकमन्नमेति ॥

---

१ लीलावृत्त्या इति ख, ङ मातृकापाठः ।

अस्य मन्त्रस्य त्रिकालध्यानम्—

बालं नीलाम्बुदाभं नवमणिविरणत्किङ्किणीजालनद्ध-
श्रोणीजङ्घान्तयुग्मं विमलरुरुनखप्रोल्लसत्कण्ठभूषम् ।
फुल्लाम्भोजाभवक्त्रं हतशकटपतत्पूतनाद्यं प्रसन्नं
गोविन्दं वन्दितेन्द्राद्यमरवरमजं पूजयेद्वासरादौ ॥

वन्द्यं देवैर्मुकुन्दं विकसितकरवन्दाभमिन्दीवराक्षं
गोगोपीवृन्दवीतं जितरिपुनिवहं कुन्दमन्दारहासम् ।
नीलग्रीवाग्रपिञ्च्छाकलनसुविलसत्कुन्तलं भानुमन्तं
देवं पीताम्बरं तं यजतु च दिनशो मध्यमेऽह्नो रमायै ॥

*करवन्द नासिकामौक्तिमिति केरळभाषा । आनैवणङ्कीति द्राविडभाषा ।

विक्रान्त्या ध्वस्तवैरिव्रजमजितमपास्तावनीभारमाद्यै-
रावीतं नारदाद्यैर्मुनिभिरनुदिनं तत्वनिर्णीतिहेतोः ।
सायाह्ने निर्मलं तं निरुपममजरं पूजयेन्नीरभासं
मन्त्री विश्वोदयस्थित्यपहरणपरं मुक्तिदं वासुदेवम् ॥

त्रिकालमेवं प्रविचिन्त्य पूजयेद्वासुदेवम् ॥

प्रयोगान्तरम्—

ध्यानी मन्त्री मन्त्रजापी च नित्यं
यद्यद्वाञ्छन्यत्र यत्र प्रयाति ।
तत्तत्प्राप्त्या तत्र तत्र प्रकामं
प्रीतः क्रीडेद्देववन्मानुषेषु ॥ इति ।

अथ गोपालमन्त्रप्रसङ्गात् क्रमदीपिकोक्तप्रकारेणापि गोपालकाष्टादशाक्षरी दशाक्षर्योरुभयोरपि न्यासमेकप्रकारेणैव वक्ष्ये ॥

* करवन्दं=मुक्कुत्तीति केरळ भाषा । इति ङ पाठः ।

प्रथमं तावत्सप्तमे पटले मातृकाविधाने उक्तेन प्रकारेण स्नानादि-नियमपुरस्सरं पद्मस्वस्तिकाद्यासने स्थित्वा, गुरुगणपतिवन्दनताळत्रयदिग्बन्धनादीन् विधाय, पुनरपि तत्रैव सप्तमे पटले इडावक्त्रे धूम्रमित्याद्युक्तेन प्रकारेण भूतशुद्धिं कृत्वा, पुनर्मातृकान्यासमपि तत्रैवोक्तप्रकारेणैव कुर्यात् ॥ अत्र तु मातृकान्यासश्चतुर्विधः ॥ तत्प्रकारः कथ्यते —

प्रथमस्तु शुद्धमातृकान्यासः । द्वितीयस्तु सबिन्दुकमातृकान्यासः । तृतीयस्तु सविसर्गकमातृकान्यासः । चतुर्थस्तु बिन्दुविसर्गोभयात्मको मातृकान्यासः । एतत्प्रकारविशेषस्तु प्राक् सप्तमे पटले दशविधमातृकान्यासप्रकरणे उक्तः । एवं चतुर्विधं मातृकान्यासं कृत्वा, पुनरपि सप्तमे पटले मातृकान्यास-प्रकरणे उक्तेन प्रकारेण कीर्त्यादिशक्तियुक्तैः केशवादिभिर्न्यसेत् । तन्न्यासार्थं ध्यानमुच्यते —

उद्यत्प्रद्योतनशतरुचिं तप्तहेमावदातं
पार्श्वद्वन्द्वे जलधिसुतया विश्वधात्र्या च जुष्टम् ।
नानारत्नोल्लसितविविधाकल्पमापीतवस्त्रं
वन्दे विष्णुं दरकमलकौमोदकीचक्रपाणिम् ॥

एवं ध्यात्वा केशवादीन् न्यसेत् । एतस्य न्यासस्य फलमाह —

मेधायुस्स्मृतिधृतिकान्तिलक्ष्मी-
सौभाग्यैश्चिरमुपबृंहितो भवेत्सः ॥ इति ॥

अथवा एतानेव केशवादीन् रमाबीजपुरस्सरं अं श्रीं केशवाय कीर्त्यै नमः । एवंप्रकारेण क्रमेण न्यसेत् । एतस्य न्यासस्य फलमाह —

अमुमेव रमापुरस्सरं प्रभजेद्यो मनुजो विधिं बुधाः ।
समुपेत्य रमां प्रधीयसीं पुनरन्ते हरितां व्रजत्यसौ ॥

पुनस्तत्वन्यासं कुर्यात् । तत्प्रकारः कथ्यते — मं नमः पराय जीवात्मने नमः । भं नमः पराय प्राणात्मने नमः । एताभ्यां द्वाभ्यां शिरआदिपादान्तं व्यापयेत् । बं नमः पराय बुध्यात्मने नमः । फं नमः पराय अहंकारात्मने नमः । पं नमः पराय मनआत्मने नमः । इति त्रयं हृदि विन्यस्य, नं नमः पराय शब्दतन्मात्रात्मने नमः । धं नमः पराय स्पर्शतन्मात्रात्मने नमः । दं नमः पराय रूपतन्मात्रात्मने नमः । थं नमः पराय रसतन्मात्रात्मने नमः । तं नमः पराय गन्धतन्मात्रात्मने नमः । इति शिरोमुखहृद्गुह्यांघ्रिषु न्यस्य, णं नमः पराय श्रोत्रात्मने नमः । इति श्रोत्रयोः, ढं नमः पराय त्वगात्मने नमः । इति त्वचि व्यापकम् । डं नमः पराय चक्षुरात्मने नमः इति दृशोः, ठं नमः पराय जिह्वात्मने नमः । टं नमः पराय घ्राणात्मने नमः । ञं नमः पराय वागात्मने नमः । झं नमः पराय पाण्यात्मने नमः । जं नमः पराय पादात्मने नमः । छं नमः पराय पाय्वात्मने नमः । चं नमः पराय उपस्थात्मने नमः । इति वागादिनास्यादिस्वस्वस्थानेषु न्यस्य, ङं नमः पराय आकाशात्मने नमः । घं नमः पराय वाय्वात्मने नमः । गं नमः पराय वन्ह्यात्मने नमः । खं नमः पराय अबात्मने नमः । कं तमः पराय पृथ्व्यात्मने नमः । इति शिरोमुखहृद्गुह्यांघ्रिषु न्यस्य, शं नमः पराय हृत्पुण्डरीकात्मने नमः । हं नमः पराय सूर्यमण्डलाय द्वादशकलात्मने नमः । सं नमः पराय सोममण्डलाय षोडशकलात्मने नमः । रं नमः पराय वह्निमण्डलाय दशकलात्मने नमः । इति चतुष्टयं हृदि विन्यस्य, षों नमः पराय परमेष्ठ्यात्मने वासुदेवाय नमः । यं नमः पराय पुरुषात्मने संकर्षणाय नमः । शं नमः पराय विश्वात्मने प्रद्युम्नाय नमः । वं नमः पराय निवृत्त्यात्मने अनिरुद्धाय नमः । लां नमः पराय सर्वात्मने नारायणाय नमः । इति पञ्चतत्वानि शिरोमुखहृद्गुह्यांघ्रिषु विन्यस्य, क्षौं नमः पराय कोपतत्वात्मने नृसिंहाय नमः । इति मूर्धादिपादान्तं व्यापयेत् । एवं तत्वन्यासः ।

एतस्य न्यासस्य फलमाह —

क्रमेणेति तत्वात्मको न्यास उक्तः
सुसान्निध्यकृत् बिम्बमूर्त्यादिषु स्यात् ।
इति कृतेऽधिकृतो भवति ध्रुवं
सकलवैष्णवमन्त्रजपादिषु ॥ इति ॥

पुनः प्राक् सप्तमे पटले मातृकाप्रकरणे उक्तेन प्रकारेण प्राणायामं कृत्वा पुनः वैष्णवपीठन्यासं कुर्यात् । तत्प्रकारं वक्ष्ये —

गुं गुरुभ्यो नमः इति शिरसि । गं गणपतये नमः । इति मूलाधारे । आधारशक्त्यै० मूलप्रकृत्यै० आदिकूर्माय० अनन्ताय० पृथिव्यै० क्षीरसमुद्राय० श्वेतद्वीपाय० रत्नमण्डपाय० कल्पवृक्षाय० श्वेतछत्राय० सितचामराभ्यां० रत्नसिंहासनाय० १२ एतान् मन्त्रान् मूलाधारादारभ्य उपर्युपरि क्रमेण हृदयपर्यन्तं न्यस्त्वा, धर्माय० ज्ञानाय० वैराग्याय० ऐश्वर्याय० ४ एतान् मन्त्रान् दक्षिणपादहस्तवामहस्तपादमूलेषु न्यसेत् । अधर्माय० अज्ञानाय० अवैराग्याय० अनैश्वर्याय० ४ एतान्मन्त्रान् नाभिदक्षपार्श्वाननवामपार्श्वेषु न्यसेत् । सं सत्वाय० रं रजसे० तं तमसे० मं मायायै० विं विद्यायै० अं अनन्ताय० पं पद्माय० अं सूर्यमण्डलाय० उं सोममण्डलाय० मं वह्निमण्डलाय० अं आत्मने० उं अन्तरात्मने० मं परमात्मने० ओं ह्रीं ज्ञानात्मने नमः १४ । एतान्मन्त्रान् हृदि न्यसेत् ॥

पुनः हृदये अष्टदळं विचिन्त्य तेषु प्रागादिक्रमेण, विमलायै० उत्कर्षिण्यै० ज्ञानायै० क्रियायै० योगायै० प्रह्व्यै० सत्यायै० ईशायै० अनुग्रहायै० ९ एवमेताश्शक्तयः अष्टदळेषु न्यस्तव्याः । नवमीं कर्णिकायां च न्यस्त्वा, पुनः नमो विष्णवे सर्वभूतात्मने वासुदेवाय सर्वात्मसंयोगयोगपद्मपीठात्मने नमः । इममासनमन्त्रं च कर्णिकायां न्यसेत् ॥

एवं पीठन्यासं कृत्वा, प्राक् सप्तमे पटले उक्तप्रकारेण समावाह्य,

तत्र कर्णिकायां मूर्तिं तेजोरूपेण संभाव्य, तत्परमकं ज्योतिर्मूलेन व्यापकाङ्ग-ऋष्यादिना सकलीकृत्य, उपरि त्र्यम्बकविधाने वक्ष्यमाणक्रमेण प्राणप्रतिष्ठां कृत्वा, मानसपूजां प्राक् सप्तमपटले उक्तेन प्रकारेण कुर्यात् ॥

पुनर्दशाक्षरीमन्त्रेण प्रणवपुटितेन हस्ततलद्वये अन्तर्बाह्ययोः पार्श्वयोश्च व्यापयेम् । पुनर्दशाक्षरीमन्त्रवर्णैर्दशभिराद्यन्तप्रणवैः नमोन्तैरंगुलीषु दशसु दक्षिणांगुष्ठादिवामांगुष्ठान्तः सृष्टिन्यासः । तत्र दक्षिणांगुष्ठस्य मूलपर्वणि प्रथमः प्रणवः, द्वितीयपर्वणि मन्त्रप्रथमवर्णस्सानुस्वारः, तृतीयपर्वणि द्वितीयः प्रणवः । अग्रे नम इति । नम इति तृतीयपर्वण्येव वा । एवमेव सर्वास्वप्यंगुळीषु क्रमेण सृष्टिन्यासं कृत्वा, पुनर्दक्षिणांगुष्ठादितत्कनिष्ठिकान्तं कृत्वा, वामांगुष्ठा-दितत्कनिष्ठिकान्तं च तथैव कुर्यात् । एवं स्थितिन्यासः । पुनर्वामांगुष्ठादि-तत्कनिष्ठान्तं कृत्वा दक्षिणकनिष्ठिकादितदंगुष्ठान्तं च कुर्यात् । एवं संहारन्यासः । पुनरपि सृष्टिस्थिती कुर्यात् ॥ पुनर्दशाक्षरीवर्णैः सबिन्दुकैः दक्षिणांगुष्ठादि-वामांगुष्ठान्तं अग्रं करं न्यासरूपेण गों नम इत्यादि क्रमेण न्यस्त्वा पुनर्दशा-क्षरीमन्त्रस्य दशाङ्गैः आचक्राय स्वाहेत्याद्यैः पञ्चाङ्गैश्च वक्ष्यमाणैरुभयोरपि करयोः करन्यासरूपेण अंगुष्ठाभ्यां नमः । इत्यादिक्रमेण कुर्यात् । पुनः दशाक्षरीमन्त्रेण मातृकावर्णानेव सबिन्दुकानेकैकं क्रमेण पुटित्वा पूर्ववत् न्यसेत् ॥

पुनर्दशतत्वन्यासं वक्ष्ये —

गों नमः पराय पृथिव्यात्मने नमः । पीं नमः पराय अबात्मने नमः । जं नमः पराय तेज आत्मने नमः । नं नमः पराय वाय्वात्मने नमः । वं नमः पराय आकाशात्मने नमः । लं नमः पराय अहंकारात्मने नमः । भां नमः पराय बुध्यात्मने नमः । महदात्मन इति वा । यं नमः पराय प्रकृत्यात्मने नमः । स्वां नमः पराय पुरुषात्मने नमः । हां नमः पराय परमात्मने नमः ॥ इति । एतेषां स्थानानि —

पदान्धुहृदयास्यके न्यसतु पञ्च मध्ये द्वयं
त्रयं सकलगं ततो न्यसतु तद्विपर्यासतः ॥ इति ॥

तत्र अन्धुरिति गुह्यम् । के इति शिरसि । मध्ये द्वयमिति हृदि द्वयमित्यर्थः । त्रयं व्यापकम् । एवं संहारन्यासः । मन्त्राश्च (मन्त्राक्षरान्) स्थानानि च एतद्विपरीतक्रमेण संयोज्य सृष्टिन्यासं च कुर्यात् । तदुक्तं च

संहृतावनुगतो मनुवर्यः सृष्टिवर्त्मनि भवेत् प्रतियातः ॥ इति ॥

एवं दशतत्वन्यासं कुर्यात् । अस्य न्यासस्य फलमाह —

गुप्ततमोयं न्यासः संप्रोक्तस्तत्वदशकपरिक्लृप्तः ।
कार्योऽन्येष्वपि सद्भिः गोपालकमनुषु झटिति फलसिद्ध्यै ॥ इति ।

पुनः प्रथमं प्रणवपुटितेन दशाक्षरीमन्त्रेण मूर्धादिपादान्तं त्रिर्व्याप्य, पुनर्दशाक्षरीमन्त्रस्य अक्षरन्यासं कुर्यात् ॥ तस्य स्थानानि —

मूर्धन्यक्ष्णोः श्रुत्योर्घ्राणे मुखहृदयजठरशिश्नजानुपत्सु तथाक्षरान् ।
न्यस्येदुक्ता सृष्टिरशिष्टैः स्थितिरपि मुनिभिरभिहिता हृदयादिमुखान्तिका ॥

संहारोंघ्र्यादिमूर्धान्तांस्त्रितयमिदमिति विरचयेच्च सृष्टिमनुस्थितिम् ॥

अस्यार्थः — प्रथमं मूर्धादिपादान्तो न्यासः सृष्टिः । पुनर्हृदयादि-क्रमेण पादान्तं सृष्टिक्रमेण न्यस्त्वा, अवशिष्टैः पञ्चभिर्वर्णैः शिरआदि-मुखान्तं न्यसेत् । एषा स्थितिः । पुनरंघ्र्यादिमूर्धान्तः संहारन्यासक्रमः । एवं कृत्वा पुनरपि सृष्टिस्थिती कुर्यात् । तदुक्तं च —

न्याससंहारान्तो मस्करिवैखानसेषु विहितोयम् ।
स्थित्यन्तो गृहमेधिषु सृष्ट्यन्तो वर्णिनामिति प्राहुः ॥

वैराग्ययुजि गृहस्थे संहारं केचिदाहुराचार्याः ।
सहजानौ वनवासिनि स्थितिं च विद्यार्थिनां तथा सृष्टिम् ॥ इति ॥

पुनः विभूतिपञ्जरन्यासः । स तु अस्यैव दशाक्षरीमन्त्रस्य दशकृत्वो न्यासः । तस्य स्थानान्युच्यन्ते —

आधारध्वजनाभिहृद्गलमुखांसोरुद्वये कन्धरा-
नाभ्योः कुक्षिहृदोरुरोजयुगळे पार्श्वापरश्रोणिषु ।
कास्याक्षिश्रुतिनः कपोलकरपत्सन्ध्यग्रशाखासु के
तत्प्राच्यादिदिशासु मूर्ध्नि सकले दोष्णोश्च सक्थ्नोस्तथा ॥

शिरोक्ष्यास्यकर्णाख्यहृत्तुन्दकन्दा-
न्धुजानुप्रपत्स्वित्थमर्णान्मनूत्थान् ।
न्यसेत् श्रोत्रगण्डांसवक्षोजपार्श्व-
स्फिगूरुस्थलीजानुजङ्घांघ्रियुक्षु ॥ इति ॥

तत्र ध्वजमिति लिङ्गम् । कन्दरमिति कण्ठः । अपरमिति पृष्ठः । न इति नासिका । अन्धुरिति गुह्यम् । स्फिगिति जघनम् । सक्थिरूरुमूलम् । कन्दं नाभिः ॥ तत्र आधाराद्यूरुद्वयपर्यन्तं प्रथमो न्यासः ॥ कन्धरादि-श्रोणिपर्यन्तं द्वितीयो न्यासः । कास्यादिकपोलपर्यन्तं तृतीयो न्यासः । दक्षिण-करसन्ध्यग्रेषु तच्छाखासु चतुर्थः । वामेऽपि तथैव पञ्चमः । पदद्वय-सन्ध्यग्रेषु च तच्छाखासु च तथैव षष्ठसप्तमौ । शिरआद्यूर्ध्वान्तमष्टमः । तत्र क्रमविशेषस्तु, पूर्वं शिरसि । पुनः शिरसः प्राच्यादिचतुर्दिक्षु । पुनः शिरस्येव वेष्टनाकारेण, दोर्द्वये ऊर्वादि पादद्वये च सकले व्यापकरूपेण । इति । पुनः शिरआदिपादान्तं नवमः । श्रोत्राद्यङ्घ्रियुग्मपर्यन्तं दशमः । एवं दशविधन्यासं कुर्यात् ॥ अस्य न्यासस्य फलमाह —

इति कथितं विभूतिपञ्जरं सकलसुखार्थधर्ममोक्षदम् ।

नरतरुणिमनोनुरञ्जनं हरिचरणाब्जभक्तिवर्धनम् ।। इति ।।

पुनर्मूर्तिपञ्जरन्यासं वक्ष्ये —

ओं अं ओं कृष्णवर्णाय धात्रे केशवाय नमः । ओं आं नं कनकवर्णाय अर्यम्णे नारायणाय नमः । ओं इं मों श्यामवर्णाय मित्राय माधवाय नमः । ओं ईं भं कर्पूरवर्णाय गोविन्दाय नमः । ओं उं गं रक्तवर्णायांशाय विष्णवे नमः । ओं ऊं वं धूम्रवर्णाय भगाय मधुसूदनाय नमः । ओं एं तें हरितवर्णाय विवस्वते त्रिविक्रमाय नमः । ओं ऐं वां पिङ्गलवर्णाय इन्द्राय वामनाय नमः । ओं ओं सुं अभ्रवर्णाय पूष्णे श्रीधराय नमः । ओं औं दें चित्रवर्णाय पर्जन्याय हृषीकेशाय नमः । ओं अं वां पाण्डुरवर्णाय त्वष्ट्रे पद्मनाभाय नमः । ओं अः यं अञ्जनवर्णाय विष्णवे दामोदराय नमः ! ओं अं ओं नमो भगवते वासुदेवाय अं ओं नमः । एवं क्लीबाक्षरचतुष्टयरहितस्वरद्वादश-वर्णान्, वासुदेवद्वादशाक्षरीमन्त्रवर्णांश्च, कार्ष्ण्यकानक्यादिद्वादशवर्णविशेषांश्च, धात्रादिसूर्यद्वादशनामानि च, केशवादिवैष्णवद्वादशनामानि च मिळित्वा, अयं मूर्तिपञ्जरन्यासः ।।

अस्य न्यासस्य स्थानानि —

फालोदरहृद्गळकूपतले वामेतरपार्श्वभुजादिगळे ।
वामत्रयपृष्ठककुत्सु तथा मूर्धन्यपि षड्युगवर्णमनुः ।। इति ।।

तत्र वामत्रये तु गलादिपार्श्वपर्यन्तं क्रमः । एतस्य न्यासस्य फलमाह —

स्फूर्तयेऽथास्य मन्त्रस्य कीर्तितं मूर्तिपञ्जरम् ।
मूर्तिग्रहविषारिघ्नं कीर्तिश्रीकान्तिवर्धनम् ।। इति ।।

एतावत्पर्यन्तमुभयोरपि मन्त्रयोर्न्याससमान एव । अतः परं दशाक्षरी-प्रधानेन चेद्विशेषः कथ्यते । पुनरपि पूर्ववदेव दशाक्षरीमन्त्रेण सृष्टिस्थिती

कृत्वा, दशाक्षर्या दशभिर्वर्गैः दशाङ्गं च पञ्चाङ्गं च तस्य मन्त्रस्य कृत्वा, तस्य ऋषिच्छन्दोदेवतादींश्च कुर्यात्। तत्र दशाङ्गप्रकारः कथ्यते ॥

गों हृत्। पीं शिरः। जं शिखा। नं कवचम्। वं नेत्रम्। लं अस्त्रम्। भां पार्श्वाभ्याम्। यं कटिभ्याम्। स्वां पृष्ठाय। हां मूर्ध्ने। एवं दशाङ्गानि कृत्वा, पुनः पञ्चाङ्गानि कुर्यात्। आचक्राय स्वाहा हृत्। विचक्राय स्वाहा शिरः। सुचक्राय स्वाहा शिखा। त्रैलोक्यरक्षणचक्राय स्वाहा कवचम्। असुरान्तकचक्राय स्वाहा अस्त्रम्। एवं पञ्चाङ्गानि कृत्वा, पुनर्दशाक्षरीमन्त्रस्य ऋष्यादीन् कुर्यात् ॥

श्रीनारदऋषिः। विराट् छन्दः। श्रीकृष्णो देवता। एवं ऋष्यादीन् विधाय, पुनः किरीटादिमुद्राः प्रदर्शयेत्। किरीटादिमुद्राप्रकारं तु उपरि विंशत्यक्षरीविधाने वक्ष्यामः। पुनः सुदर्शनेन दशदिग्बन्धनं कुर्यात्। ओं नमः [1]सुदर्शनाय फडिति सुदर्शनमन्त्रः। पुनः बीजशक्त्यादीन् न्यसेत्। क्लीं बीजम्। स्वाहा शक्तिः। कृष्णः प्रकृतिः। दुर्गा अधिष्ठात्री देवता। पुरुषार्थचतुष्टये विनियोगः। एतान् बीजशक्त्यादीन् प्राक् सप्तमे पटले उक्तेषु स्थानेषु न्यसेत् ॥

अथ प्रकटसौरभोद्गलितमाध्विकोत्फुल्लसत्प्रसूनेत्यादिक्रमदीपिकायां तृतीय-पटले उक्तेन प्रकारेण ध्यायेत्। तदतिविस्तरम्। तस्मादत्र नोच्यते। तस्मात् प्रपञ्चसारोक्तक्रमेण, 'अव्यान्नीलत्कलायेत्यादिना' प्रागुक्तेन वा ध्यायेत्। ध्यानं तु उभयोरपि मन्त्रयोरेकप्रकारमेव। गोपीजनवल्लभाय स्वाहा। इति दशाक्षरीमन्त्रः। कृष्णपादारविन्दे भक्तिवर्धनप्रधानोयं मन्त्रः। एता-वत्पर्यन्तं दशाक्षरीमन्त्रविषय एवोक्तः। अतः परं अष्टादशाक्षरीमन्त्रन्यासं वक्ष्ये—

प्रथमं वक्ष्यमाणैः पञ्चाङ्गमन्त्रैः करद्वन्द्वे अङ्गुलीषु न्यस्य, पुनरष्टा-

---

1 सुदर्शनाय अस्त्राय फडिति ख, ग, घ, ङ पाठः।

दशाक्षरीमन्त्रेण त्रिवारं मूर्धादिपादान्तं व्याप्य, प्रणवेनाप्येकवारं व्याप्य, पुनरष्टादशाक्षरीमन्त्रवर्णात् पदानि च वक्ष्यमाणस्थानेषु सबिन्दुकान् नमोन्तांश्च न्यसेत् ॥

कचभुवि ललाटभ्रूयुग्मान्तरश्रवणाक्ष्योष्ठ-
गलवदनग्रीवाहृन्नाभिकट्युभयान्धुषु ।
न्यसतु शितधीर्जान्वङ्घ्र्योरक्षरान् शिरसि
ध्रुवं नयनमुखहृद्गुह्याङ्घ्रिष्वर्पयेत् ॥ इति ॥

पदपञ्चकमिति। कचभुवि शिरसीत्यर्थः। श्रवणादिद्वन्द्वस्थानेषु प्रत्येकम्। अन्धुरिति गुह्यम्। जान्वङ्घ्र्योरेकैकम्। एवं वर्णन्यासः। अवशिष्टेन पदन्यास उक्तः। तत्र ध्रुवमिति सर्वत्र प्रणवः। तत्र कामबीजं वा तच्छिरसि न्यस्य पुनरवशिष्टैर्वर्णैः वक्ष्यमाणपञ्चाङ्गक्लृप्तिवत् विभज्य नयनादि-पञ्चस्थानेषु पञ्च पदानि विन्यसेत्। पुनरप्यष्टादशाक्षरीमन्त्रस्य पञ्चाङ्गानि कुर्यात्। क्लीं कृष्णाय हृत्। गोविन्दाय शिरः। गोपीजन शिखा। वल्लभाय कवचम्। स्वाहा अस्त्रम्। श्रीनारद ऋषिः। गायत्री छन्दः। श्रीकृष्णो देवता। एवमङ्गऋष्यादीन् विधाय बीजशक्त्यादीन् पूर्वोक्तदशाक्षरीविधानोक्त-प्रकारेण कृत्वा, किरीटादिमुद्राश्च उपरि गोपालकविंशत्यक्षरीविधाने वक्ष्यमाण-प्रकारेण बद्ध्वा, पूर्वोक्तप्रकारेण सुदर्शनेन दिग्बन्धनं कृत्वा, अथ प्रकट-सौरभोद्गलितेत्यादितृतीयपटलोक्तक्रमेण वा, अव्यान्नीलत्कलायेत्यादिप्रपञ्च-सारोक्तप्रकारेण वा ध्यात्वा जप्यात्। क्लीं कृष्णाय गोविन्दाय गोपीजन-वल्लभाय स्वाहा॥ इति मन्त्रः। मोक्षप्रधानोयं मन्त्रः। एतावत्पर्यन्तं अष्टादशाक्षरीन्यास एव॥

एवं मन्त्रद्वयन्यासं कृत्वा दशाक्षरीमन्त्रश्चेत् चत्वारिंशत्सहस्रसंख्यं पूर्वसेवापुरस्सरं पञ्चलक्षं पुरश्चरणं कृत्वा त्रिमधुरसिक्तैररुणाम्बुरुहैः दशांशं हुनेच्च। अष्टादशाक्षरीमन्त्रश्चेत् अयुतद्वितयसंख्यं पूर्वसेवापुरस्सरं पञ्चलक्षं

पुरश्चरणं कृत्वा त्रिमधुरसिक्तैररुणांबुरुहैः दशांशं हुनेच्च। त्रिमधुरसंज्ञकगुडाज्यमधुमेळनसंसिक्तैररुणाम्बुजैरेव पञ्चाशत्सहस्रसंख्यं हुनेत्। अम्बुजानामलाभे पायसैर्घृतसितासहितैरुक्तसंख्यमुभयोरपि मन्त्रयोः होमः। होमे अशक्तश्चेत् जपसंख्यायाश्चतुर्गुणं जपेत्। एवं गोपालकाष्टादशाक्षरीदशाक्षर्योर्न्यास(सादि)विधिरुक्तः॥

अथ गोपालकाष्टादशाक्षरीदशाक्षर्योरुभयोरपि पूजाक्रम एकेनैव प्रकारेण लिख्यते—

तत्र सामान्यकालपूजा, त्रिकालपूजा चेति द्विविधा पूजा। तत्र प्रथमं सामान्यकालपूजाक्रमो दीक्षापटले कलशपूजाविधानोक्तप्रकारेण लिख्यते। तत्र सामान्यकालपूजायां तु ध्यानम्। अथ प्रकटसौरभोद्गलितेत्यादिक्रमदीपिकोक्तः। तेन वा प्रपञ्चसारोक्तेन अव्यान्नीलत्कलायेत्यादिना वा ध्यात्वा पूजामारभेत्। तत्र प्रथमं पूजार्थं यन्त्रमुच्यते—

मध्ये कोणेषु षट्स्वप्यनलपुरपुटस्यालिखेत्कर्णिकायां
कन्दर्पं साध्ययुक्तं विवरगतषडर्णं द्विशः केसरेषु।
शक्तिश्रीपूर्वकाणि द्विनवलिपिमनोरक्षराणि छदानां
मध्ये वर्णान्दशानां दशलिपिमनुवर्यस्य चैकैकशोऽब्जम्(अब्जे)॥

भूसद्मनाभिघृतमश्रिगमन्मथेन गोरोचनाविलिखितं तपनीयसूच्या।
पट्टे हिरण्यरचिते गुळिकीकृतं तत् गोपालयन्त्रमखिलार्थदमेतदुक्तम्॥

संपातसिक्तमभिजप्तमिदं महद्भिः धार्यं जगत्त्रयवशीकरणैकदक्षम्।
रक्षायशस्सुतमहीधनधान्यलक्ष्मीसौभाग्यलिप्सुभिरजस्रमनर्घवीर्यम्॥

भूतोन्मादापस्मृतिविषमूर्च्छाविभ्रमज्वरार्तानाम्।
ध्यायन् शिरसि प्रजपेत् यन्त्रमिदं झटिति शमयितुं विकृतिम्॥

अस्यार्थः—प्रथमं षट्कोणं विलिख्य, तत्कर्णिकायां कामबीजं

विलिख्य, तन्मध्ये साध्यनामादियन्त्रन्यायान्विलिख्य, षट्सु कोणेषु कामबीजं विलिख्य, कोणरन्ध्रेषु गोपालकषडक्षरीमन्त्रस्य क्लीं कृष्णाय नमः इत्यस्यैकैकमक्षरं विलिख्य, तद्बहिर्दशदळं पद्मं विलिख्य, तस्य केसरेषु भुवनेशीलक्ष्मीबीजपूर्वकाष्टादशाक्षरीवर्णान् ह्रीं श्रीं क्लीं कृष्णायेत्यादीन् *द्वौ द्वौ विलिख्य, दशदळमध्येषु गोपीजनवल्लभाय स्वाहा इति दशाक्षरीवर्णानामेकैकं विलिखेत् । तत्र दशाक्षरीयन्त्र(मन्त्र)प्रधानेन चेदेवम् । अष्टादशाक्षरीयन्त्र-(मन्त्र) प्रधानेन चेद्यथा —

केसरेषु दशाक्षरीमन्त्रवर्णान् दळेषु तु अष्टादशाक्षरीमन्त्रवर्णान् शक्तिश्रीकामबीजक्रमेण विलिखेत् । एवमुभयोरपि यन्त्रयोर्विशेषः ॥ पुनस्तद्बहिश्चतुरश्रं विलिख्य, तत्कोणेषु कामबीजं विलिखेत् । एवमुक्तेन प्रकारेण संपूज्य धृते उक्तफलं भवति । इति वैष्णवपीठं संपूज्य, तस्मिन्नेतद्यन्त्रं संभाव्य, तस्मिन् दशाक्षरीमूर्तिं अष्टादशाक्षरीमूर्तिं वा तत्तन्मूलमन्त्रेण समावाह्य आवरणेन सह समर्चयेत् । प्रथमं मूलदेवताया अङ्गपूजां कुर्यात् । तत्प्रकारः कथ्यते —

प्रथममष्टादशाक्षरीप्रधानेन चेत्, तस्य वर्णन्यासपदन्यासोक्तस्थानेषु क्लीं नमः । कृं नमः इत्यादिभिर्वर्णैः, क्लींकृष्णाय नमः । गोविन्दाय नम इत्यादिभिः पञ्चाङ्गकलसिवत् पदैश्च समर्चयेत् ॥ दशाक्षरीपूजाविधानं चेत् तद्वर्णैर्दशभिस्तद्वर्णन्यासोक्तस्थानेषु सृष्टिस्थितिसंहारक्रमेण यजेत् ॥ अनयोरुभयोरपि मन्त्रयोः स्थानानि प्राक्न्यासविधाने उक्तानि ॥ तत्र सृष्टिस्थिती द्वे एव यजेद्वा ॥ सृष्टिस्थितिसंहारान्तमिष्ट्वा, पुनरपि सृष्टिस्थिती यजेद्वा । एवं दशाक्षरीविधानेन चेदुक्तेन प्रकारेण समभ्यर्च्य (समर्चयेत्) ॥ पुनरुभयोरपि मन्त्रयोस्साधारणेनोच्यते —

पुनर्मूलमन्त्रस्य दशाक्षरीमन्त्रस्य वा पञ्चाङ्गैश्च दशाक्षरीवर्णकृत-

---

*सन्धौ द्वौ द्वौ विलिख्य इति ङ मातृकापाठः ।

दशाङ्गैश्च (र्वा) समर्चयेत्॥ तत्र पञ्चाङ्गस्थानानि—हृदादिनेत्ररहितपञ्चस्थानानि॥ क्लीं कृष्णाय हृदयाय नमः। गोविन्दाय शिरसे नमः। गोपीजन शिखायै नमः। इत्येवंप्रकारेण। दशाङ्गानि तु—गों हृदयाय नमः। पीं शिरसे नमः। इत्यादिषडङ्गस्थानेषु कृत्वा, अवशिष्टैः भां पार्श्वाभ्यां नमः। यं कटिभ्यां नमः। स्वां पृष्ठाय नमः। हां मूर्ध्ने नमः। इत्येवं क्रमेण समभ्यर्च्य, पुनर्वदने वेणुं चतुर्थ्यन्तेन समर्चयेत्। वक्षोदेशे वनमालां चतुर्थ्यन्तेन, दक्षिणस्तनस्योर्ध्वदेशे श्रीवत्साय नम इति। कौस्तुभरत्नाय नम इति कण्ठे। एवमवयवस्था देवताः समर्चयेद्वा। क्रमदीपिकायामेतावत्य एव अवयवस्था देवता उक्ताः। कल्पान्तरे तु इतोप्यधिकाः सन्ति। तस्मात्ता अपि समर्चयेत्। शक्त्यनुसारेण तत्प्रकारश्चात्र कथ्यते—

ओं क्लीं गुणत्रयात्मने बर्हापीडाय नमः। ओं क्लीं दिवसात्मने उत्तमाङ्गाय नमः। ओं क्लीं सावित्र्यात्मने तिलकाय नमः। तारकामबीज-पुरस्सरं शब्दादिविषयात्मभ्यां मकरकुण्डलाभ्यां नमः। ललितादिरागात्मभ्यां कर्णावतंसाभ्यां नमः। वर्णात्मने श्रियावतंसाय नमः। व्याहृत्यात्मने स्कन्धाभरणाय नमः। पञ्चतन्मात्रात्मने पतगाय नमः। विज्ञानादिविषयात्मभ्यां केयूराभ्यां नमः। अणिमाद्यात्मभ्यां हस्तकटकाभ्यां नमः। कर्मेन्द्रियात्मभ्यः अंगुळीयेभ्यो नमः। शब्दब्रह्मात्मने वेणवे नमः। उदात्तादिस्वरात्मने नादाय नमः। पञ्चतन्मात्रात्मने वनमालायै नमः। प्रकृत्यात्मने श्रीवत्साय नमः। पुरुषात्मने कौस्तुभाय नमः। वागादिविषयात्मभ्यः सन्धिबन्धेभ्यो नमः। मन्त्रात्मने कुक्षिबन्धाय नमः। प्राणादिवाय्वात्मने नाभिकमलाय नमः। दिगात्मने पीताम्बराय नमः। अङ्गिरात्मने कटिसूत्राय नमः। गन्धर्वात्मभ्यां जानुजङ्घायुगळाभ्यां नमः। ऋग्यजुस्सामात्मभ्यः कटकान्दुकनूपुरेभ्यो नमः। अव्याकृतात्मने बिल्वफलाय नमः॥ एवं बर्हापीडादिमन्त्रैः देवस्य श्रीकृष्णस्य देहे तत्तत्स्थानेषु समर्चयेत्। इयमप्यर्चना उभयोरपि मन्त्रयोः समानैव। पुनर्मूल-

मन्त्रेण दशाक्षर्या वा अष्टादशाक्षर्या वा त्रिवारं जलगन्धपुष्पैः देवं समभ्यर्च्य पुनरावरणदेवतास्समर्चयेत् ॥ तत्प्रकार उच्यते —

दामाय नमः । सुदामाय नमः । वसुदामाय नमः । किङ्किणी-दामाय नमः । एतास्तु मूर्तीः तेजोरूपतया ध्यात्वा पूर्वादिदिक्षु समर्चयेत् । एवं प्रथमावृतिः । पुनस्तद्बहिः केसरेषु मूलमन्त्रस्य प्रागुक्तपञ्चाङ्गैः द्वितीया-वृतिः । तत्र आग्नेयादिषु हृदयादिचतुष्टयं दिक्षु अस्त्रं, पुनस्तद्बहिः दळमध्येषु रुक्मिण्याद्यष्टमहिषीस्समर्चयेत् । रुक्मिण्यै नमः । सत्यभामायै० नाग्नजित्यै० सुनन्दायै० मित्रविन्दायै० सुलक्षणायै० जाम्बवत्यै० सुशीलायै० ८ इति पूर्वादिदिक्षु तृतीयावृतिः । एतासामायुधरोचींष्युच्यन्ते —

दक्षिणकरधृतकमलाः वसुभरितसुपात्रमुदितान्यकराः ।
तपनीयमरकताभाः सुसितविचित्राम्बरा दिशाश्वेताः ॥
पृथुकुचभरालसाङ्ग्यः विविधमणिप्रकरविलसिताभरणाः ॥ इति ॥

पुनर्दळाग्रेषु प्रागादिदिक्षु, वसुदेवाय० नन्दगोपाय० बलभद्राय० गोपेभ्यः० इति समर्चयेत् । पुनराग्नेयादिषु देवक्यै० यशोदायै० सुभद्रायै० गोपीभ्यः, इति समर्चयेत् । एतेषां वर्णायुधादय उच्यन्ते—

ज्ञानमुद्राभयकरौ पितरौ पीतपाण्डरौ ।
दिव्यमाल्याम्बरालेपभूषणे मातरौ पुनः ॥

धारयन्त्यौ च वरदं पयसा पूर्णपात्रिकाम् ।
अरुणश्यामळे हारमणिकुण्डलमण्डिते ॥

बलश्शङ्खेन्दुधवळः मुसलं लाङ्गलं दधन् ।
हालालसो नीलवासाः हेलावानेककुण्डलः ॥

कलायश्यामला भद्रा सुभद्रा भद्रभूषणा ।

वराभययुता पीतवसना रूढयौवना ॥

वेणुवीणावेत्रयष्टिशङ्खशृङ्गादिपाणयः ।
गोपा गोप्यश्च विविधप्रभृताक्तकराम्बुजाः ॥

इत्येवं चतुर्थ्यावृतिः । पुनर्मन्दारादिकल्पवृक्षांश्च तद्बाह्ये समर्चयेत् । मन्दाराय० सन्तानकाय० पारिजाताय० कल्पद्रुमाय० इति पूर्वादिदिक्षु, हरिचन्दनाय नम इति मध्ये । एवं पञ्चम्यावृतिः । पुनरिन्द्रादिभिः षष्ठ्यावृतिः । वज्रादिभिः सप्तम्यावृतिः । एवं सप्तावरणैस्समर्चयेत् । अथवा आवृतित्रितयेन समर्चयेत् । तत्प्रकार उच्यते —

अङ्गैः प्रथमावृतिः । इन्द्रादिभिर्द्वितीया । वज्रादिभिस्तृतीया । एवमावृति-त्रितयम् । एवं सप्तावरणप्रकारेण वा त्र्यावरणप्रकारेण वा मन्त्रद्वयदेवतायाः पूजां कुर्यात् । अथवा कृष्णाष्टकेन पूजां कुर्यात् । तत्प्रकार उच्यते —

श्रीकृष्णाय नमः । वासुदेवाय नमः । नारायणाय नमः । देवकी-नन्दनाय नमः । यदुश्रेष्ठाय नमः । वार्ष्णेयाय नमः । असुराक्रान्त-भूभारहारिणे नमः । धर्मसंस्थापनाय नमः । ८ एतैरष्टभिः प्रणवादिभि-स्समर्चयेत् । एवं वा मन्त्रद्वयदेवतापूजां कुर्यात् । उक्ते पूजात्रैविध्ये आवाहनान्तं सर्वं तुल्यमेव । पश्चादुक्तविशेषः । एवं मन्त्रद्वयस्य सामान्यकालपूजाप्रकारः ॥

अथ मन्त्रद्वयस्य त्रिकालपूजाप्रकारं वक्ष्ये —

तत्र प्रथमं प्रातःकालपूजाध्यानम् । अथ श्रीमदुद्यानसंछि(भि)न्न-हेमस्थलोद्भासिरत्नस्फुरदित्यादि पञ्चमपटलोक्तप्रकारेण वा बालं नीलाम्बुदाभ-मित्यादिप्रागुक्तप्रपंचसारोक्तक्रमेण वा ध्यात्वा प्रातःकालीनपूजामारभेत । पीठपूजाऽऽवाहनोपचारप्रदानादयः सर्वेऽपि पूर्वोक्तसामान्यकालपूजाविधानोक्त-वदेव । आवरणानामेव विशेषः । तत्र प्रथमं पञ्चाङ्गैः प्रथमावरणे समर्चयेत् ।

तत्र स्थानानि प्रागुक्तवदेव । पुनरिन्द्रादिभिः द्वितीयावृतिः । वज्रादिभिस्तृतीया । एवमावरणत्रितयेन समर्चयेत् । तत्र प्रातर्निवेद्यद्रव्यमाह —

सितामोचहय्यङ्गवीनैश्च दध्ना
विमिश्रेण दौग्धेन संप्रीणयेत्तम् ॥ इति ॥

एवं संपूज्य, पुनः केवलदधिबुध्द्या वा, गुळमिश्रितदधिबुध्द्या वा, जलेनाष्टाविंशतिवारं श्रीकृष्णस्य मुखे संतर्पयेत् । तर्पणप्रकारस्तु उपरिष्टाद्वक्ष्यते । एवं प्रातस्संपूज्य संतर्प्य चाष्टोत्तरसहस्रं नित्यशः प्रजप्यात् । एवं प्रातःकालीनपूजाविधिः ॥

अथ माध्यन्दिनपूजाविधिर्लिख्यते । अथ मध्यान्हकालपूजार्थं ध्यानमुच्यते –

मध्यन्दिने जपविधानविशिष्टरूपं
वन्द्यं सुरर्षियतिखेचरमुख्यबृन्दैः ॥

इति क्रमदीपिकायां पञ्चमपटलोक्तप्रकारेण वा, वन्द्यं देवैर्मुकुन्दं विकसितेत्यादिप्रपञ्चसारोक्तध्यानेन वा ध्यात्वा मध्यान्हकालपूजां कुर्यात् । तत्र क्रमदीपिकोक्तध्यानान्यतिविस्तराणि । तस्मात्तान्यत्र न लिख्यन्ते । तस्मात् प्रपञ्चसारोक्तध्यानेनैव ध्येयाः । अत्रापि पीठावाहनोपचारादयः पूर्ववदेव । आवृतौ विशेषः । दामाय० सुदामाय० वसुदामाय० किङ्किणीदामाय० ४ इति पूर्वादिदिक्षु प्रथमावृतिः । अङ्गैः द्वितीयावृतिः । रुक्मिण्याद्यष्टमहिषीभिः प्राक् सामान्यकालपूजाविधानोक्ताभिः तृतीयावृतिः । पुनर्वसुदेवनन्दगोपादिभिः सुहृद्भिः तत्तद्दयिताभिश्च प्राक् सामान्यकालपूजाविधानोक्तक्रमेण चतुर्थ्यावृतिः । पुनर्मन्दारसन्तानपारिजातकल्पद्रुमहरिचन्दनैः प्राक् सामान्यकालपूजाविधानोक्तैः पञ्चम्यावृतिः । पुनरिन्द्रादिभिः षष्ठ्यावृतिः । वज्रादिभिस्सप्तमी । एवं मध्यान्हे संपूजयेत् ॥

अथ माध्यन्दिननिवेद्यद्रव्यमाह —

दत्वा पुष्पाञ्जलिमपि विधायार्पयित्वा च पाद्यं
साचामं कल्पयतु विपुलस्वर्णपात्रे निवेद्यम् ॥

सुरभितरेण दुग्धहविषा सुसितेन सता
समसुपदंशकैरुचिरहृद्यविचित्ररसैः ।
दधिनवनीतनूतनसितोपलपूवलिका
घृतगुळनाळिकेरकदळीफलपुष्परसैः ॥ इति ॥

एवं निवेद्यं कृत्वा, पुनर्मूलमन्त्रेण ॥

अष्टोत्तरशतमथो जुहुयात् *पयोक्तैः
सर्पिः प्लुतैः सुसितशर्करयाविमिश्रैः ।
दद्याद्बलिं च निजदिक्षु सुरर्षियोगि-
वर्गोपदैवतगणेभ्य उदारचेताः ॥

एवं वैश्वदेवबलिं च कृत्वा, पुनः पूजां समाप्य, पुनः नवनीतेन मिळितपायसबुध्धा जलैः पूर्ववदेव अष्टाविंशतिसंख्यं वक्ष्यमाणप्रकारेण संतर्प्य, पुनरष्टोत्तरशतं सहस्रं वा जपेच्च । एवं माध्यन्दिनपूजाविधिः ॥

अथ तृतीयकालपूजाविधानं वक्ष्ये —

'सायाह्ने द्वारवत्यां तु विचित्रोद्यानशोभिते ।' इत्यादिपञ्चमपटलोक्त-क्रमेण वा, विक्रान्त्या ध्वस्तवैरिव्रजमित्यादिप्रागुक्तप्रपञ्चसारोक्तप्रकारेण वा ध्यात्वा तृतीयकालपूजामारभेत ॥

तृतीयकालपूजायामस्ति कालविकल्पना ।
सायाह्ने निशि वेत्यत्र वदन्त्येके विपश्चितः ॥

---

*पयोन्नैः इति ख-ङ पाठः ।

दशाक्षरेण चेद्रात्रौ सायान्हेऽष्टादशार्णतः ।
उभयीमुभयेनैव कुर्यादित्यपरे जगुः ॥

निशि वा दिनान्तसमये प्रपूजयेन्नित्यशोऽच्युतं भक्त्या ।
समफलमुभयं हि ततस्संसाराब्धिं समुत्तितीर्षति यः ॥

तत्र सायंध्यानस्य पूजायाश्च रात्रिध्यानस्य पूजायाश्च विशेषोऽस्ति। तत्र सायंकालीनपूजां उक्तेन प्रकारेण ध्यात्वा आरभेत। तत्रापि पीठावाहनादयः पूर्वोक्तनियमप्रकारेण। आवृतौ तु विशेषः। प्रथममङ्गैः प्रथमावरणे अर्चयेत्। पुनः रुक्मिण्याद्याभिर्महिषीभिः प्रागुक्ताभिः द्वितीयावृतिः। पुनः नारदाय० पर्वताय० जिष्णवे० निशठाय० उद्धवाय० दारुकाय० विष्वक्सेनाय० शैनेयाय० ८ इति पूर्वाद्यष्टदिक्षु, गरुडायेत्यग्रे, एवं तृतीयावृतिः। इन्द्रादिभिश्चतुर्थी। वज्रादिभिः पञ्चमी। एवं संपूज्य पायसेन निवेद्यं कुर्यात्। पूजाहोमं सर्वासु कुर्यात्। मध्यान्हेऽथवा पुनः खण्डमिश्रदुग्धबुध्या जलैस्तर्पयेत् अष्टाविंशतिवारम्। वक्ष्यमाणक्रमेण पुनरष्टोत्तरशतं जपेच्च। एवं सायंकालीनपूजाप्रकार उक्तः ॥

अथ रात्रिकालीनपूजाप्रकार उच्यते—

प्रथमं तदर्थं ध्यानमुच्यते ॥

रात्रौ चेन्मन्मथाक्रान्तमानसं देवकीसुतम् ।
यजेद्रासपरिश्रान्तं गोपीमण्डलमध्यगम् ॥

पृथुं सुवृत्तं मसृणं वितस्तिमात्रोन्नतं कौ विनिखन्य शंकुम् ।
आक्रम्य पद्भ्यामितरेतरात्तहस्तैर्भ्रमोयं खलु रासगोष्ठी ॥

स्थलनीरजसूनपरागभृता लहरीकणजालहरेण सता ।
मरुता परितापहृताऽध्युषिते सुसिते यमुनापुलिने विपुले ॥

अशरीरिनिशातशरोन्मथितप्रमदाशतकोटिभिराकुलिते ।
उडुनाथकरैर्विशदीकृतदिक्प्रसरे विचरद्भ्रमरीनिकरे ॥

विद्याधरकिन्नरसिद्धसुरैः गन्धर्वभुजङ्गमचारणकैः ।
दारोपहितैस्स्वविमानगतैः खस्थैरभिवृष्टसुपुष्पचये ॥

इतरेतरबद्धकरप्रमदागणकल्पितरासविहारविधौ ।
मणिशंकुकमप्यमुना वपुषा बहुधा विहितस्वकदिव्यतनुम् ॥

सुदृशामुभयोः पृथगन्तरगं त्वपि तद्गलबद्धभुजद्वितयम् ।
निजसङ्गविजृम्भदनङ्गशिखिज्वलिताङ्गलसत्पुलकालियुजाम् ॥

विविधश्रुतिभिन्नमनोज्ञतरस्वरसप्तकमूर्च्छनतानगणैः ।
भ्रममाणममूभिरुदारमणिस्फुरमण्डनशिंजितचारुतरम् ॥

इति भिन्नतनुं मणिभिर्मिळितं तपनीयमयैरिव मारतकम् ।
मणिनिर्मितमध्यगशंकुलसद्विपुलारुणपङ्कजमध्यगतम् ॥

अतसीकुसुमाभतनुं तरुणं तरुणारुणपद्मपलाशदृशम् ।
नवपल्लवचित्रितगुच्छलसच्छिखिपिञ्छपिनद्धकचप्रचयम् ॥

चटुलभ्रुवमिन्दुसमानमुखं मणिकुण्डलमण्डितगण्डयुगम् ।
शशरक्तसदृक्दशनच्छदनं मणिराजदनेकविधाभरणम् ॥

असनप्रसवच्छदनोज्ज्वलसद्वसनं सुविलासनिवासभुवम् ।
नवविद्रुमभद्रतरांघ्रितलं भ्रमराकुलदामविराजिभुजम् ॥

तरुणीकुचयुक्परिरम्भमिलन्मसृणारुणवक्षसमुक्षगतिम् ।
शिववेणुसमीरितगानपरं स्मरविह्वलितं भुवनैकगुरुम् ॥

एवं ध्यात्वा रात्रिकालीनपूजामारभेत । अत्रापि पीठपूजाऽऽवाहनादयः पूर्ववदेव । आवृतौ तु विशेषः । प्रथममङ्गैः प्रथमावृतिः । तद्बहिः षोडशदलेषु केशवादिषोडशस्वरमूर्तयः सशक्तिकास्समर्चनीयाः । अं क्लीं श्रीं केशवमूर्तिभ्यां नमः । अं क्लीं श्रीं नारायणकान्तिभ्यां नमः । इं माधवतुष्टिभ्यां नमः । ईं गोविन्दपुष्टिभ्यां नमः । उं विष्णुधृतिभ्यां नमः । ऊं मधुसूदनक्षान्तिभ्यां नमः । ऋं त्रिविक्रमक्रियाभ्यां नमः । ॠं वामनदयाभ्यां नमः । ऌं श्रीधरमेधाभ्यां नमः । ॡं हृषीकेशहर्षाभ्यां नमः । एं पद्मनाभश्रद्धाभ्यां नमः । ऐं दामोदरलज्जाभ्यां नमः । ओं वासुदेवलक्ष्मीभ्यां नमः । औं संकर्षणसरस्वतीभ्यां नमः । अं प्रद्युम्नप्रीतिभ्यां नमः । अः अनिरुद्धरतिभ्यां नमः । एतैः केशवादिभिः काम(श्री)बीजद्वयसंयुतैः द्वितीयावृतिः । इन्द्रादिभिस्तृतीया । वज्रादिभिश्चतुर्थी । एवं रात्रौ चतुर्भिरावरणैः संपूज्य,

रजतारचिते चषके सुसितं सुश्रितं सुपयोऽस्य निवेदयतात् ।
विभवे सति कांस्यमयेषु पृथक् चषकेषु तु षोडशसु क्रमशः ॥

इति रात्रिपूजाप्रकारः । एवं मन्त्रद्वयस्य सामान्यपूजया साकं पञ्चविधपूजा उक्ताः ॥

अथ मन्त्रद्वयस्य त्रिकालतर्पणप्रकारः कथ्यते —

सन्तर्प्य पीठमन्त्रैः सकृत्सकृत्प्रथममच्युतं तत्र ।
आवाह्य पूजयेत्तं तोयैरेवाखिलैस्समुपहारैः ॥

बध्वाऽथ धेनुमुद्रां तोयैस्संपाद्य तर्पणद्रव्यम् ।
तद्बुध्याञ्जलिना तं सुवर्णचषकीकृतेन तर्पयतु ॥

विंशतिरष्टोपेता कालत्रयतर्पणेषु संख्याता ।
भूयः स्वकालविहितान् सकृत्सकृत्तर्पयेच्च परिवारान् ॥

प्रातर्दधिगुळमिश्रं मध्यान्हे पायसं सनवनीतम् ।
क्षीरं तृतीयकाले ससितोपलमित्युदीरितं द्रव्यम् ॥

तर्पयामिपदं योज्यं मन्त्रान्तेऽन्येषु नामसु ।
द्वितीयान्तेषु तु पुनः पूजाशेषं समापयेत् ॥

अभ्युक्ष्य तत्प्रसादाद्भिरात्मानं प्रपिबेदपः ।
तज्जप्त्वा तमथोद्वास्य तन्मयः प्रजपेन्मनुम् ॥
यावत्सन्तर्पयेन्मन्त्री तावत्संख्यं जपेन्मनुम् ॥ इति ॥

तत्र धेनुमुद्राप्रकारः प्राक् सप्तमे पटले उक्तः । एवमेव सर्वमन्त्रविषयेऽपि तर्पणविधिः ॥ तर्पणद्रव्यस्य तु तत्र तत्र विशेषः । मन्त्राश्च तत्तद्विषयोक्ताः । पीठमपि तद्विषयम् । तर्पणप्रकारस्तु सर्वत्रैवमेव । एवं गोपालकाष्टादशाक्षरीमन्त्रस्य च गोपालदशाक्षरीमन्त्रस्य च समानत्वेन क्वचित्क्वचिद्विशेषेण च न्यासपूजातर्पणविधय उक्ताः ॥

अथ गोपालकदशाक्षरीमन्त्रप्रसङ्गात् मन्त्रदेवताप्रकाशिकोक्तप्रकारेणापि गोपालकदशाक्षरीमन्त्रस्य पुरश्चरणाविधिर्लिख्यते —

ऋष्यादिकं पूर्ववत् । चत्वारिंशत्सहस्रं जपः । पुरश्चरणम् । अयुतद्वितयं वा अयुतं वा पुरश्चरणम् । अथ प्रयोगः —

य इच्छेद्ब्राह्मणो मन्त्री वशीकर्तुं समर्चयेत् ।
जपेदष्टसहस्रं तु विप्रा वश्या भवन्ति च ॥

भूपानां वश्यकामस्तु जातिपुष्पैस्समर्चयेत् ।
वैश्यानां वश्यकामस्तु सुरक्तकरवीरजैः ॥

शूद्राणां वश्यकामस्तु पुष्पैर्नीलोत्पलैर्नवैः ।
स्त्रीवश्यकामी चेच्छुक्लैः पुष्पैस्तण्डुलमिश्रितैः ॥

घृताक्तैर्जुहुयान्मन्त्री स्त्रियो वश्या भवन्ति हि ।
अन्नाद्यकामी जुहुयादेवमेव समाहितः ॥

तद्भस्म धारयेन्नित्यं भवेदन्नाद्यवांस्तथा ।
सहस्रं जुहुयादाज्यं हिरण्यार्थी समाहितः ।
पद्मैस्समर्च्य गोविन्दं मन्त्री साधनवान्भवेत् ॥

यं यं कामयते तत्तत्पद्महोमेन सिध्यति ।
वस्त्रार्थी शुक्लकुसुमैः सहस्रं साष्टकं हुनेत् ॥

भूतप्रेतपिशाचाद्या ह्यपस्मारादयो ग्रहाः ।
पूतनाद्यास्तथाऽऽकृष्टुं सहस्रं नियतो जपेत् ॥

जपात्सर्वे पलायन्ते सिंहत्रस्ता मृगा इव ।
विषसंहरणे कृष्णं जपेत्काळीयमर्दनम् ॥

अष्टोत्तरशतं जप्त्वा मन्त्रं कुर्यात्प्रयत्नतः ।
हस्तेन मूर्ध्नि विन्यस्य नाशयेच्चैव तद्विषम् ॥

मेधाकामस्स्मरेद्देवं मन्त्रं प्रणवसंपुटम् ।
अयुतं तु शुचिर्भूत्वा त्रिरात्रं तु ततो जपेत् ॥

मन्त्रेण वेदशास्त्रार्थं वक्तुं योग्या भवेच्च वाक् ।
भिक्षाहारो जपेन्मन्त्रं संवत्सरमतन्द्रितः ॥

श्रीमानाढ्यतमो भूत्वा( यात् ) सर्वज्ञो नात्र संशयः ।
कन्यार्थी खादिरे वन्हौ रुक्मिणीवल्लभं स्मरन् ॥

दधिमध्वाज्यदुग्धान्नैर्जुहुयादयुतं बुधः ।
नवनीताशनं कृष्णं ध्यात्वोलूखलबन्धिनम् ॥

अयुतं नवनीतेन हुत्वा पुत्रमवाप्नुयात् ।
जपेदष्टोत्तरशतं पिबन्तं पूतनास्तनम् ॥

कृष्णं ध्यात्वा ग्रहग्रस्तान्पश्येद्द्रावन्ति ते ग्रहाः ।
समस्तविघ्ननाशार्थं कृष्णं कालीयमर्दनम् ॥

ध्यायन् जपेत्साष्टशतं हुंकृत्वा नाशयेद्विषम् ।
कृष्णं तु गरुडारूढं हरन्तं पारिजातकम् ॥

समस्तामरजेतारं सञ्चिन्त्याष्टोत्तरं शतम् ।
रक्तैस्तु करवीरैश्च हुत्वा शत्रुजयं लभेत् ॥

शनैश्चरदिनेऽश्वत्थं जपेदालिङ्ग्य पाणिना ।
अष्टोत्तरशतं शुद्धो म्रियते नापमृत्युभिः ॥

अश्नीयादन्वहं विद्वानन्नं सप्ताभिमन्त्रितम् ।
आरोग्यं महदाप्नोति बलं तेजश्च विन्दति ॥

मेधाकामी हुनेदग्नौ पालाशैराज्यमिश्रितैः ।
समिद्भिः पूर्ववत् ध्यात्वा लभेन्मेधां न संशयः ॥

प्रतिष्ठां कामयेद्यस्तु भगवन्तं विचिन्तयेत् ।
शङ्खपद्मादिनिधिभिः सेवितं द्वारकास्थितम् ॥

अष्टोत्तरसहस्रं तु प्रतिष्ठां लभते धनम् ।
सर्वलोकान्वशीकर्तुं कामयन् पङ्कजासने ॥

कदम्बमूले गायन्तं चिन्तयेत्सर्वनायकम् ।
अपामार्गसमिद्भिस्तु अष्टोत्तरसहस्रकम् ॥

जप्त्वा तु जुहुयाद्भस्म सर्वलोको वशो भवेत् ।

अन्नेन चान्नमाप्नोति पयसा पशुमान्भवेत् ॥

वस्त्रार्थी जुहुयात्पुष्पैः लाजैः कन्यामवाप्नुयात् ।
वैतसैर्वृष्टिमाप्नोति बैल्वैर्धनमाप्नुयात् ॥

दूर्वाभिरायुराप्नोति गडूचीभिश्च मृत्युजित् ।
पुत्रजीविसमिद्भिस्तु वन्ध्या पुत्रवती भवेत् ॥

शमीसमिद्भिर्जुहुयात् सर्वशान्तिर्भविष्यति ।
लवणेन हुनेद्वश्यं तिलैश्शत्रुं वशं नयेत् ॥

अनेन जपहोमेन यथायोग्येन साधयेत् ।

शुक्लादिकुसुमं मन्दारादि कुसुमम् ।

अथ गोपालकमन्त्रप्रसङ्गात् गुप्तगोपालकमन्त्रोप्यतिरहस्यतरः कल्पान्तरोक्तप्रकारेण लिख्यते —

आनन्दनारद ऋषिः । अमृतविराट् छन्दः । समस्तजगन्मोहनमहाविष्णुर्देवता । श् ह् क् ल् रां हृत् । श् ह् क् ल् रीं शिरः । इत्याद्यङ्गानि ॥

उद्यद्भास्वत्सहस्रद्युतिममृतकरव्यूहकान्तिप्रभावं
द्वाभ्यां दोर्भ्यां च वेणुं विदधतमुपरिष्ठात्स्थिताभ्यां मनोज्ञम् ।
वामाङ्कस्थाब्धिकन्यास्तनकलशमथो वामदोष्णा स्पृशन्तं
वन्दे व्याख्यानमुद्रोल्लसदितरकरं बोधयन्तं स्वमीशम् ॥

श् ह् क् ल् रीं । इति मन्त्रः । ज्ञानप्रधानोयं मन्त्रः । अङ्गेन्द्रध्वजादिभिः पूजा । पञ्चलक्षं जपः । अयमेव मन्त्रो हकाराद्यश्च ककाराद्यश्च शकाराद्यश्चेति त्रिविधोऽस्ति ॥

अथ सनत्कुमारीयोक्तप्रकारेण गोपालकर्विंशत्यक्षरीविधानमुच्यते—

श्रीनारद ऋषिः। गायत्री छन्दः। श्रीकृष्णो देवता। श्रीं ह्रीं क्लीं हृत्। कृष्णाय शिरः। गोविन्दाय शिखा। गोपीजन कवचम्। वल्लभाय नेत्रम्। स्वाहा अस्त्रम्। ध्यानम्—

श्रीमत्यां द्वारवत्यां नवकनकमये भूतले रत्नचयोः
मध्ये कल्पद्रुमाधो विविधमणिलसन्मण्डपे सन्निविष्टम्।
चक्रं शङ्खं च वेणुं नळिनमथ गदां योगमुद्रां दधानं
वन्दे संसिच्यमानं मणिमयकलशैर्वल्लभाभिर्मुकुन्दम्॥

श्रीं ह्रीं क्लीं कृष्णाय गोविन्दाय गोपीजनवल्लभाय स्वाहा। इति मन्त्रः॥

अथ पूजाविधिः—

वैष्णवपीठे समावाह्य समर्चयेत्। रुक्मिण्यै० सत्यभामायै० इति देवस्य दक्षिणवामपार्श्वयोः। सुवर्णकुम्भाय नम इति ऊर्वोरधस्समर्चयेत्। कल्पद्रुमञ्जर्यै नम इति ऊर्वोरुपरि। एवं प्रथमावृतिः अङ्गैर्द्वितीयावृतिः॥ रुक्मिण्यै० सत्यभामायै० नाग्नजित्यै० सुनन्दायै० मित्रविन्दायै० सुलक्षणायै० जाम्बवत्यै० सुशीलायै० ८ इति तृतीयावृतिः॥ एतासां करधृतायुधवर्णादयः प्रागुक्ताष्टादशाक्षरीविधानोक्तवदेव॥ पुनः वासुदेवाय शान्त्यात्मने० संकर्षणाय श्रियात्मने० प्रद्युम्नाय वागात्मने० अनिरुद्धाय रत्यात्मने० ४ इति चतुर्थ्यावृतिः॥ पुनः वासुदेवाय० संकर्षणाय० प्रद्युम्नाय० अनिरुद्धाय० ४ इति पूर्वादिदिक्षु। लक्ष्म्यै० सरस्वत्यै० प्रीत्यै० रत्यै० ४ इति आग्नेयादिविदिक्षु। एवं पञ्चम्यावृतिः। मन्दाराय० पारिजाताय० सन्तानाय० हरिचन्दनाय० ४ इति पूर्वादिदिक्षु। केतक्यै० करवीराय० उशीराय० हरिचन्दनाय० ४ इति विदिक्षु। कल्पद्रुमायेति मध्ये॥ एवं षष्ठ्यावृतिः॥ पद्माय० महापद्माय० मकराय० कच्छपाय० शङ्खाय० कुन्दाय० नीलाय० कुमुदाय० ८ ऐं क्लीं सौः

षोडशसहस्रपत्नीभ्यो नमः । इति सप्तम्यावृतिः ।। केशवाय० नारायणाय० माधवाय० गोविन्दाय० विष्णवे० मधुसूदनाय० त्रिविक्रमाय० वामनाय० श्रीधराय० हृषीकेशाय० पद्मनाभाय दामोदराय नमः १२ इत्यष्टम्यावृतिः ।। मत्स्याय० कूर्माय० वराहाय० नारसिंह्माय० वामनाय० भार्गवाय० राघवाय० कृष्णाय० बौद्धाय० कल्किने नमः १० एवं नवम्यावृतिः ।। इन्द्रादिभिर्दशमी ।। वज्रादिभिरेकादशी । ऐरावताय० पुण्डरीकाय० वामनाय० कुदाय० अञ्जनाय पुष्पदन्ताय० सार्वभौमाय० सुप्रतीकाय० ८ एतैर्दिग्गजैः द्वादश्यावृतिः ।। एवमावरणदेवतास्समर्च्य, पुनः,

जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
सुब्रह्मण्य नमस्तेस्तु नमः पुरुषपूर्वज ।।

इत्यनेन मन्त्रेण पञ्चावारं पुष्पाञ्जलिं कुर्यात् प्रधानदेवतायाः ।। पुनरावरणदेवतानां च रुक्मिण्यादिकुञ्चरान्तमनेनैव मन्त्रेणैकैकवारं पुष्पाञ्जलिं कृत्वा, पुनर्मूलमन्त्रेण पञ्चवारं मूलदेवतायाः पुष्पाञ्जलिं कृत्वा, पुनर्मूलमन्त्रेणैव आवरणेष्वपि एकैकवारं कृत्वा, पुनः खं *ब्रह्मणे नमः इति पञ्चवारं हरौ एकैकवारं रुक्मिण्यादिषडङ्गावरणदेवतापर्यन्तं च पुष्पाञ्जलिं कृत्वा, पुनः किरीटकेयूरहार मकरकुण्डलालंकृत चक्रशङ्खगदाब्ज हस्तपीताम्बरधर श्रीवत्साङ्कितवक्षस्थलश्रीभूसहितस्वात्मज्योतिर्द्वयदीप्तिकराय सहस्रादित्यतेजसे नमः । अनेन किरीटमन्त्रेणापि त्रिवारं पुष्पाञ्जलिं कृत्वा, पुनः ॐ श्रीं कृष्णाय नमः । ॐ वासुदेवाय नमः । ॐ नारायणाय नमः ॐ देवकीनन्दनाय नमः । ॐ यदुश्रेष्ठाय नमः । ॐ वार्ष्णेयाय नमः । ॐ असुराक्रान्तभूभारहारिणे नमः । ॐ धर्मसंस्थापनाय नमः । ८ अनेन कृष्णाष्टकेन तारादिना नमोन्तेन पुष्पाञ्जलिं कृत्वा निवेद्यं कृत्वा पूजां समापयेत् ।। एवं सनत्कुमारीयोक्तपूजाविधिः ।।

---

* परब्रह्मणे इति ग पाठः ।

अथास्यैव विंशत्यक्षरीमन्त्रस्य न्यासपूजाविधानं क्रमदीपिकोक्तक्रमेण लिख्यते —

ब्रह्मा ऋषिः । गायत्री छन्दः । श्री कृष्णो देवता । क्लीं बीजम् । स्वाहा शक्तिः । जं कीलकम् । एतत् त्रयं स्तनद्वन्द्वे हृदि च क्रमेण न्यस्त्वा, पुनः स्वदेहे वैष्णवपीठन्यासं प्रागष्टादशाक्षरीन्यासविधाने उक्तेन प्रकारेण कृत्वा मूलमन्त्रस्याङ्गषट्केनप्राक् सनत्कुमारीयविधानोक्तेन करन्यासं कृत्वा मूलमन्त्रेण व्यापकं कृत्वा, पुनः मूलमन्त्रेण मातृकावर्णान्पुटित्वा मातृकान्यासोक्तस्थानेषु संहारन्यासरूपेण प्रतिलोमस्थानवर्णरूपेण सृष्टिन्यास-रूपेणानुलोमस्थानवर्णरूपेण च न्यस्त्वा, पुनर्दशतत्वन्यासं कुर्यात् । तत्प्रकारस्तु प्रागष्टादशाक्षरीन्यासविधाने उक्तः ॥ पुनर्मूलेन व्यापकं कृत्वा मूलमन्त्रवर्णान् न्यसेत् ॥ तत्प्रकार उच्यते —

मूर्ध्नि फाले भ्रुवोर्मध्ये नेत्रयोः कर्णयोर्नसोः ।
अनेन चुबुके गण्डे दोर्मूले हृदि कुन्दके ॥

नाभौ लिङ्गे तथाऽऽधारे कट्योर्जान्वोश्च जङ्घयोः ।
गुल्फयोः पादयोर्न्यस्येत्सृष्टिरेषा समीरिता ॥
स्थितिर्हृदादिकांसान्ता संहृतिश्चरणादिका ॥ इति ॥

तत्र स्थितिन्यासे मन्त्रार्णान् हृदयादारभ्य पादान्तं न्यस्त्वा, शिष्टैः शिर आद्यंसद्वयान्तं न्यसेत् ॥ संहारे तु स्थानमात्रं प्रतिलोमेन ॥ एवं सृष्ट्यादिसंहारान्तं पञ्चवारं न्यस्त्वा पुनरपि सृष्टिस्थिती कुर्यात् गृहस्थश्चेत् । संन्यासीचेत् संहारान्तं न्यसेत् ॥ तदुक्तं च —

न्यासः संहारान्तो मस्करिवैखानसेषु विहितोयम् ।
स्थित्यन्तो गृहमेधिषु सृष्ट्यन्तो वर्णिनामिति प्राहुः ॥

वैराग्ययुजिगृहस्थे संहारं केचिदाहुराचार्याः ।

सहजानौ वनवासिनि स्थितिं च विद्यार्थिनां तथा सृष्टिम् ॥

एवं तत्तदाश्रमानुसारेण सृष्टिघाद्यन्तं न्यासं कुर्यात्। सृष्टिस्थितिसंहार-रूपेण न्यासविधौ सर्वत्रैवमेव न्यायः ॥ पुनरस्य न्यासस्य मुद्राप्रकार उक्तः—

शिरसि विहिता मध्या सैवाक्षिणि तर्जनिकान्विता
श्रवसि रहिताङ्गुष्ठास्तेनान्वितोपकनिष्ठिका।
नसि च वदने सर्वाः सज्यायसी हृदितर्जनी
प्रथमजयुता मध्या नाभौ श्रवे विहिता ध्वजे ॥

ता एवाङ्गुलयो जान्वोः साङ्गुष्ठास्तु पदद्वये ॥ इति ॥

अत्र दशाक्षरी प्रधानोक्तानि स्थानानि। तस्मादयमेवान्यत्रापि न्यासान्तरे उक्तेषु स्थानेषु न्यायः। अत्रानुक्तस्थानेषु तु सर्वाभिरङ्गुलीभिः न्यासः कर्तव्यः। एवमक्षरन्यासं कृत्वा, पुनर्मूर्तिपञ्जरन्यासं प्रागष्टादशाक्षरी-विधाने उक्तेन प्रकारेण कृत्वा, पुनष्षडङ्गन्यासं कुर्यात् ॥

ॐ ह्रीं क्लीं हृत्। कृष्णाय शिरः। गोविन्दाय शिखा। गोपीजन कवचम्। वल्लभाय नेत्रम्। स्वाहा अस्त्रम् ॥ एवं षडङ्गन्यासं कृत्वा, पुनः किरीटादिमुद्राः प्रदर्शयेत् ॥ तत्प्रकार उच्यते—

तत्र प्रथमं मुद्राणां क्रम उच्यते। किरीट-बर्हापीड-कुन्तलद्वय-चक्र-शङ्ख-गदा-पद्म-योगवेणु-माला-श्रीवत्स-कौस्तुभ-बिल्वफलमुद्राः क्रमेण प्रदर्शयेत् ॥ प्रथमं दक्षिणवामकरयोः मध्यमाङ्गुलिद्वयं प्रसार्यान्योन्याग्रं संस्पृशेत् ॥ उभयोरपि करयोस्तर्जनीमनामिकां च किञ्चित् संकुच्य पृष्ठभागेन तर्जन्या तर्जनीं अनामिकया अनामिकां च संस्पृशेत्। अङ्गुष्ठद्वयं तु प्रसार्याग्रेणान्योन्यं संस्पृशेत्। कनिष्ठिकाद्वयं च प्रसार्याग्रेणान्योन्यं संस्पृशेत्। एषा किरीटमुद्रा ॥ एनां शिरसि तन्मन्त्रेण किरीटाय नमः। इत्यनेन प्रदर्शयेत् ॥

हस्तद्वयस्य मणिबन्धमन्योन्यं व्यत्यासेनाबध्वा अङ्गुलीश्च प्रसार्य किञ्चिदाकुञ्च्य मस्तकोपरिभागे पराङ्मुखेन प्रदर्शयेत् ॥ एषा बर्हापीडमुद्रा ॥

पुनर्दक्षिणकरतलमधोमुखेन वामकरतलमूर्ध्वमुखेन च प्रसार्य व्यत्यासेन संयोज्य, दक्षिणकनिष्ठिकां वामतर्जन्या उपरि प्रसार्य, संमुखेन संश्लेषयेत् । दक्षिणतर्जनीं वामकनिष्ठिकाया उपरि प्रसार्य संमुखेन संश्लेषयेत् ॥ दक्षिणानामिकामध्यमे तु वामतर्जन्या अधोभागेन नीत्वा वामाङ्गुष्ठोपरि संमुखेन संश्लेषयेत् । वामानामिकामध्यमे तु दक्षिणतर्जन्या उपरि मार्गेण नीत्वा दक्षिणाङ्गुष्ठस्याधस्तात् तेन संमुखं कृत्वाऽन्योन्यं संश्लेषयेत् ॥ एषा श्रीवत्समुद्रा ॥ एनां वक्षस्स्थले दक्षिणहस्तेनोपरिभागेन तन्मन्त्रेण प्रदर्शयेत् ॥

दक्षिणकरांगुष्ठतर्जनीद्वयं संश्लिष्य इतरांगुळित्रयं प्रसार्य पुनर्वामकरतलमपि तथैव कृत्वा अपरगलादारभ्य नाभिपर्यन्तं तं प्रदर्शयेत् ॥ एषा वनमालामुद्रा ॥ एनां तन्मन्त्रेण प्रदर्शयेत् ॥

प्रथमं वामकनिष्ठिकानामिका मध्यमाः प्रसार्य तत्रानामिका मध्यमे ऊर्ध्वमुखेन प्रसार्य पुनस्तिसृणामध्यंगुळीनां मूलदेशे उपरिभागे तिर्यक् दक्षिण-मध्यमां नयेत् । पुनस्तासामेव तिसृणामंगुळीनामधोभागे मूलप्रदेशे तिर्यग्दक्षि-णानामिकां नीत्वा वामतर्जन्या उपरि मध्यदेशं संस्पृशेत् । पुनर्दक्षिणकनिष्ठि-काग्रं वामकनिष्ठिकाग्रस्य उपरिभागे संश्लेषयेत् । पुनर्दक्षिणतर्जन्यग्रं च वामा-नामिकामध्यांगुष्ठाग्राणि च ऊर्ध्वीकृत्य अन्योन्याग्राणि संश्लेषयेत् । दक्षिणांगुष्ठं तु वामहस्ततलस्य पार्श्वे संबध्यात् । एषा कौस्तुभमुद्रा ॥ एनां कण्ठदेशे तन्मन्त्रेण प्रदर्शयेत् ॥

प्रथमं दक्षिणाङ्गुष्ठतर्जनीद्वयं किञ्चित् संकुच्यान्योन्याग्रेण संस्पृश्य, तद्रन्ध्रमार्गेण वामाङ्गुष्ठं नीत्वा, तत्तर्जन्यग्रमपि तथैव स्पृशेत् । पुनरुभयोः करयोः इतरेतराङ्गुलीः ऋजूकृताः अन्योन्यं व्यत्यासीकृताः किञ्चित्संकुचिताग्राः कर्णयोः प्रदर्शयेदेनां मकरकुण्डलमुद्रां तन्मन्त्रेण ॥

ओष्ठौ वामकरांगुष्ठे लग्नः तस्य कनिष्ठिका।
दक्षिणांगुष्ठसंसक्ता तत्कनिष्ठा प्रसारिता॥

तर्जनीमध्यमानामाः किञ्चित्संकुच्य चालिताः।
वेणुमुद्रेह कथिता सुगुप्ता प्रेयसी हरेः॥

एतां तन्मन्त्रेण ओष्ठदेशे प्रदर्शयेत्॥

उच्यतेऽच्युतमुद्राणां मुद्रा बिल्वफलाकृतिः।

अंगुष्ठं वाममुद्दण्डितमितरकरांगुष्ठकेनाथबध्वा
तस्याग्रं पीडयित्वांगुलिभिरपि च ता वामहस्तांगुळीभिः।
बध्वा बाढं हृदि स्थापयतु विमलधीर्व्याहरन्मारबीजं
बिल्वाख्या मुद्रिकैषा स्फुटमिह कथिता गोपनीया विधिज्ञैः॥

मनो वाणीदेहैर्यदिह च पुरा चापि विहितं
अमत्या मत्या वा तदपि निखिलं दुष्कृतचयम्।
इमां मुद्रां जानन् क्षपयति नरस्तं सुरगणाः
नमन्त्यस्याधीना भवति सततं सर्वजनता॥

एनां बिल्वमुद्रां तन्मन्त्रेण हृदि प्रदर्शयेत्॥ करेण परस्परं हस्तौ प्रसारितांगुलिकौ विपर्यस्तमुखौ संयोज्य, दक्षिणांगुष्ठाग्रेण सव्यकनिष्ठिकाग्रं संयोज्य, सव्यांगुष्ठाग्रेण दक्षिणकनिष्ठिकाग्रं संयोज्य, दक्षिणभागे स्कन्धादुपरि भ्रामयेत्। एषा सुदर्शनमुद्रा॥ एतां तन्मन्त्रेण प्रदर्शयेत्॥

ततो हस्तौ परस्परं संमुखौ संयोज्य, परस्परमंगुलिविवरणेषु अंगुलीर्विन्यस्य मुष्टिं दृढां कृत्वा, मध्यमांगुलिके संमुखे संश्लिष्टे ऊर्ध्वं प्रसार्य वामोरुमूलभागे तिर्यक् प्रदर्शयेत्। एषा कौमोदकी मुद्रा एनां तन्मन्त्रेण प्रदर्शयेत्॥

मणिबन्धौ परस्परं संमुखं संयोज्य विकसितपद्मवत् अन्यांगुलीराकुञ्चिताग्राः समन्ततो विरचय्य अंगुष्ठौ पार्श्वयोस्संयोज्य मध्यतः कर्णिकावदीषदाकुञ्चयित्वा दक्षिणोरुमूलदेशे ऊर्ध्वं प्रदर्शयेत् ॥ एषा पद्ममुद्रा ॥ एनां तन्मन्त्रेण ॐ पद्माय नम इत्यनेन प्रदर्शयेत् ॥

वामकरांगुष्ठतर्जन्यग्रमन्योन्यं संस्पृश्य नाभेरधस्तादूर्ध्वमुखेन विधाय तस्य करस्योपरि दक्षिणहस्तं तथैव कृत्वा निधापयेत् ॥ एषा योगमुद्रा ॥ एनां तन्मन्त्रेण प्रदर्शयेत् ॥ एवं किरीटाद्या मुद्राः प्रदर्श्य ध्यायेत् ॥

द्वारवत्यां सहस्रार्कभास्वरैः भवनोत्तमैः ।
अनल्पैः कल्पवृक्षैश्च परितो मणिमण्डपे ॥ १ ॥

ज्वलद्रत्नमयस्तम्भद्वारतोरणकुड्यके ।
फुल्लस्रग्गुल्लसच्चित्रवितानालंबिमौक्तिके ॥ २ ॥

पद्मरागस्थलीराजद्रत्ननद्योश्च मध्यतः ।
अनारतगळद्रत्नसुधस्य स्वस्तरो रधः ॥ ३ ॥

रत्नप्रदीपावलिभिः प्रदीपितदिगन्तरे ।
उद्यदादित्यसंकाशमणिसिंहासनाम्बुजे ॥ ४ ॥

समासीनोऽच्युतो ध्येयो द्रुतहाटकसन्निभः ।
समानोमि(दि)तचन्द्रार्कतटित्कोटिसमद्युतिः ॥ ५ ॥

सर्वाङ्गसुन्दरस्सौम्यस्सर्वाभरणभूषितः ।
पीतवासाश्चक्रशङ्खगदापद्मोज्ज्वलद्भुजः ॥ ६ ॥

अनारतोज्ज्वलद्रत्नधारामुक्कलशं स्पृशन् ।
वामपादाम्बुजाग्रेण मुष्णता पल्लवच्छविम् ॥ ७ ॥

रुक्मिणीसत्यभामेऽस्य मूर्ध्नि रत्नौघधारया ।
सिञ्चन्त्यौ दक्षवामस्थे स्वदोस्स्थकलशोत्थया ॥ ८ ॥

नाग्नचित्ती सुनन्दा च दिशन्त्यौ कलशौ तयोः ।
ताभ्यां च दक्ष वामस्थे मित्रविन्दा सुलक्षणे ॥ ९ ॥

रत्ननद्योस्समुध्दृत्य रत्नपूर्णघटौ तयोः ।
जाम्बवती सुशीला च दिशन्त्यौ दक्षवामके ॥ १० ॥

बहिष्षोडशसाहस्रसंख्याताः परितः प्रियाः ।
ध्येयाः कनकरत्नौघधारामुक्कलशोज्ज्वलाः ॥ ११ ॥

तद्बहिश्चाष्टनिधयः पूरयन्तो धनैर्धराम् ।
तद्बहिर्वृष्णयस्सर्वे पुरोवच्च सुरादयः ॥ १२ ॥

ध्यात्वैवं परमात्मानं विंशत्यर्णमनुं जपेत् ॥ इति ॥

एवं ध्यात्वा काममालामन्त्रं कामगायत्रीं च जप्त्वा विंशत्यर्णमनुं प्रागुक्तं भुवनेश्यादिचतुर्लक्षं जपेत्। आज्यैर्दशांशं हुनेच्च। काममालामन्त्रं मारगायत्रीमन्त्रं च उपरिष्टाद्वक्ष्यामः ॥

अथास्य मन्त्रस्य पूजाविधिः। तदर्थं यन्त्रं वक्ष्ये —

गोमयेनोपलिप्योर्वीं तत्र पीठं निधापयेत्।
विलिप्य गन्धपङ्केन लिखेदष्टदळाम्बुजम् ॥

कर्णिकायां तु षट्कोणं ससाध्यं तत्र मान्मथम्।
शिष्टैस्तं सप्तदशभिरक्षरैर्वेष्टयेत् स्मरम् ॥

प्रागरक्षोनिलकोणेषु श्रियं शिष्टेषु संविदम्।

षडक्षरं सन्धिषु च केसरेषु त्रिशस्त्रिशः ॥

विलिखेत्स्मरगायत्रीं मालामन्त्रं दलाष्टके ।
षट्शः संलिख्य तद्बाह्ये वेष्टयेत् मातृकाक्षरैः ॥

भूबिम्बं च लिखेद्बाह्ये श्रीमाये दिग्विदिक्ष्वपि ।
एतद्यन्त्रं हाटकादिपट्टेष्वालिख्य पूर्ववत् ॥

साधितं धारयेद्यो वै सोर्च्यते त्रिदशैरपि ॥

अस्यार्थः—प्रथममष्टदलं पद्मं विलिख्य, तत्कर्णिकायां षट्कोणं विलिख्य, तन्मध्ये क्लीमिति मारबीजं विलिख्य, तन्मध्ये साध्यनामादियन्त्रन्यायान्विलिखेत् । पुनः कृष्णायेत्यादिभिः सप्तदशभिरक्षरैः तत्कामबीजं वेष्टयेत् । पुनः षट्कोणकोणेषु षट्सु प्राग्रक्षोऽनिलकोणेषु श्रीमिति बीजं विलिखेत् । तदितरकोणेषु त्रिष्वपि भुवनेशीं विलिखेत् । पुनः कोणसन्धिषु षट्स्वपि क्लीं कृष्णाय नमः इति षडक्षराणि विलिखेत् । पुनरष्टदळकेसरेषु "कामदेवाय विद्महे पुष्पबाणाय धीमहि । तन्नोऽनङ्गः प्रचोदयात्" अस्याः स्मरगायत्र्याः त्रीणि त्रीण्यक्षराणि विलिखेत् ॥ पुनर्दळमध्येषु ' नमः कामदेवाय सर्वजनप्रियाय सर्वजनसंमोहनाय ज्वल ज्वल प्रज्वल सर्वजनस्य हृदयं मम वशं कुरु कुरु स्वाहा" इत्यस्य मालामन्त्रस्य षट्षड्वर्णान् विलिखेत् ॥ अथ मारमालामन्त्रः सर्वगोपालकमन्त्रजपादौ मारबीजाद्यो जप्तव्यो जनरञ्जनार्थम् ॥ पुनः मातृकावर्णैर्बहिर्वेष्टयेत् । पुनस्तद्बहिः चतुरश्रमष्टशूलयुक्तं विलिख्य तस्य दिक्षु श्रीमिति विलिख्य कोणेषु भुवनेशीं विलिखेत् । एवं स्वर्णादिपट्टे विलिख्य धारिते उक्तफलं स्यात् ॥ इति अस्मिन् यन्त्रे वैष्णवपीठं संपूज्य तस्मिन् पौरुषीं मूर्तिं संभाव्य तत्राच्युतं समावाह्य समर्चयेत् ॥

प्रथमं मूलदेवताविग्रहे पूर्वोक्तवर्णन्यासक्रमेण तैर्मूलमन्त्रवर्णैः सृष्टिस्थितिक्रमेण समभ्यर्च्य षडङ्गमन्त्रैः हृदयादिस्थानेषु च समभ्यर्च्य किरीटकुण्डलद्वय-

चक्रशङ्खगदापद्ममालाश्रीवत्सकौस्तुभवेण्वादींस्तत्तन्नाम्ना समभ्यर्च्य पुनर्मूलमन्त्रेण त्रिवारं समभ्यर्च्य पुनरावरणदेवतापूजां कुर्यात् ।

प्रथमं षट्कोणस्याग्नेयादिकोणेषु अङ्गैः प्रथमावृतिः ॥ पुनः वासुदेवाय० संकर्षणाय० प्रद्युम्नाय० अनिरुद्धाय० ४ इत्यष्टदळपद्मस्य आग्नेयादिदळमूलेषु पुनः शान्त्यै० श्रियै० सरस्वत्यै० रत्यै० ४ इति पूर्वादिदिग्दळमूलेषु । एवं द्वितीयावृतिः । पुनः रुक्मिण्यै० सत्यभामायै० इति दक्षसव्यपार्श्ववर्तिनोः पत्राग्रयोर्यजेत् । नाग्नचित्र्यै० सुनन्दायै० मित्रविन्दायै० सुलक्षणायै० जाम्बवत्यै० सुशीलायै० इति पूर्वाद्यवशिष्टदळाग्रेषु समर्चयेत् । एवं तृतीयावृतिः ॥ पुनः षोडशसहस्रमहिषीभ्यो नमः । इति सकृदेव समर्चयेत् । एवं चतुर्थ्यावृतिः॥ *इन्द्रनिधये० नीलनिधये० मुकुन्दनिधये० मकरनिधये० आनन्दनिधये० कच्छपनिधये० शङ्खनिधये० पुष्पनिधये० ८ इत्यष्टनिधयः । एवं पञ्चम्यावृतिः । पुनरिन्द्रादिभिः षष्ठी । वज्रादिभिस्सप्तमी ॥

एवं संपूज्य दधिखण्डाज्यमिश्रेण पयोन्नेन निवेद्यं कृत्वा आत्मन्युद्वस्यात्मानं समभ्यर्च्य न्यस्त्वा जपेत् । अत्र फलमाह—

जपहोमार्चनध्यानैः योऽमुं प्रभजते मनुम् ।
तद्वेश्मपूर्यते रत्नस्वर्णधान्यैरनारतम् ॥

पृथ्वी पृथ्वी करे तस्य सर्वसस्यकुलाकुला ।
पुत्रैर्मित्रैस्स संपन्नः प्रयात्यन्ते परां गतिम् ॥ इति ॥

**अथ प्रयोगविधिः—**

वन्हावभ्यर्च्य गोविन्दं शुक्लपुष्पैस्सतण्डुलैः ।
आज्याक्तैरयुतं हुत्वा भस्म तन्मूर्ध्नि धारयेत् ॥

---

*अत्र सुप्रसिद्धनिधीनामपि नामान्तराणि प्रदर्शितानि भवन्ति । तानि पण्डितैश्शोधनीयानि इति भाति ॥

तस्यान्नादिसमृद्धिः स्यात् तद्वशे सर्वयोषितः ।

शुक्लपुष्पं मन्दारादिधवळपुष्पम् ॥

प्रयोगान्तरम्—

आज्यैर्लक्षं हुनेद्रक्तपद्मैर्वा मधुराप्लुतैः ।
श्रिया तस्यैन्द्रमैश्वर्यं तृणलेशायते ध्रुवम् ॥

प्रयोगान्तरम्--

शुक्लादिवस्त्रलाभाय शुक्लादिकुसुमैर्हुनेत् ।
त्रिमध्वक्तैर्दशशतमाज्याक्तैर्वाष्टसंयुतम् ॥

अस्यार्थः-- मन्दारादिशुक्लकुसुमैः शुक्लवस्त्रलाभाय, जपादिरक्तकुसुमैः रक्तवस्त्रलाभाय, त्रिमधुरसिक्तैर्वा आज्यसिक्तैर्वा अष्टोत्तसहस्रं हुनेत् ॥

प्रयोगान्तरम्--

क्षौद्रसिक्तैः सितैः पुष्पैरष्टोत्तरसहस्रकम् ।
हुनेन्नित्यं यस्स मासात् पुरोधा नृपतेर्भवेत् ॥

क्षौद्रं मधु । सितपुष्पं मन्दारादि ॥

पुनः गोपालादिदशाक्षरीविधानेपि अष्टादशाक्षरीविधानेपि यत्र यत्र योगः प्रयोग उक्तः सोप्यनेन मन्त्रेण कर्तव्यः । अनेनापि (यो)योगः प्रयोग उक्तः सताभ्यामपि कर्तुं शक्यः । एवं क्रमदीपिकोक्तो विंशत्यक्षरीविधिः ॥

अथ गोपालकमन्त्रप्रसङ्गात् मन्त्रसारोक्तं विंशत्यक्षरीयन्त्रमुच्यते—

षट्कोणकर्णिकामध्ये ससाध्यं मदनं लिखेत् ।
षट्सु कोणेषु षड्वर्णं चतुर्वर्णं चतुर्दले ॥

दशपत्रे केसरोद्यद्दशार्णैकैकवर्णके ।
विंशत्यर्णमनोर्वर्णान् क्रमात् द्वौ द्वौ विलेखयेत् ॥

मालामन्त्रेण मारस्य बाणैः मातृकयाऽपि च ।
वेष्टितं भूपुराश्रस्थशक्तिश्रीवसुधास्मरम् ॥

विंशत्यर्णमनोर्यन्त्रं प्रोक्तमेतद्यथा श्रुतम् ।
गोपनीयं प्रयत्नेन न देयं यस्य कस्यचित् ॥

धर्मार्थसुखमोक्षायुःपुत्रधान्यधराप्रदम् ।
रक्षाकरं वश्यकरं कान्तिसौभाग्यकीर्तिदम् ॥

किमत्र बहुनोक्तेन कांक्षितार्थसुरद्रुमः ॥

अस्यार्थः — प्रथमं षट्कोणं विलिख्य तन्मध्ये, क्लीमिति कामबीजं विलिखेत्। तन्मध्ये साध्यनामादियन्तन्यायान्विलिखेत्। तद्बहिश्चतुर्दळं तद्बहिर्दशदळं तद्बहिर्वृत्तत्रयं तद्बहिश्चतुरश्रं विलिख्य, पुनः षट्सु कोणेषु क्लीं कृष्णाय नम इति अस्य मन्त्रस्यैकैकमक्षरं विलिखेत्। पुनश्चतुर्दळेषु "क्लीं कृष्ण क्लीं" इत्यस्य मन्त्रस्य एकैकमक्षरं लिखेत्। पुनर्दशदळमूलेषु "गोपीजनवल्लभाय स्वाहे"त्यस्यैकैकमक्षरं विलिखेत्। पुनर्दशदळमध्ये, "श्रीं ह्रीं क्लीं कृष्णाय गोविन्दाय गोपीजनवल्लभाय स्वाहा" इत्यस्य वर्णान् द्वौ द्वौ विलिखेत्। पुनः प्रथमे वृत्ते "नमः कामदेवाय सर्वजनप्रियाय सर्वजनसंमोहनाय ज्वल ज्वल प्रज्वल प्रज्वल सर्वजनस्य हृदयं मम वशं कुरु कुरु स्वाहा" इत्यनेन मालामन्त्रेण वेष्टयेत्। पुनः द्वितीयेवृत्ते "द्रां द्रावणबाणाय नमः। द्रीं क्षोभणबाणाय नमः। क्लीं वशीकरणबाणाय नमः। ब्लूं आकर्षण बाणाय नमः। सः संमोहन बाणाय नमः"। इति पञ्चबाणैर्वेष्टयेत् । पुनस्तृतीयेवृत्ते, मातृकावर्णैर्वेष्टयेत्। पुनश्चतुरश्रकोणेषु "ह्रीं श्रीं ग्लौं क्लीं" इत्यस्यैकैकमक्षरं विलिखेत् ॥ इति ॥

अथ कल्पान्तरोक्तं त्रिंशत्यक्षरीयन्त्रान्तरं लिख्यते —

साध्यगर्भं लिखेत्कामं वह्निगेहयुगोदरे ।
षट्सु कोणेषु षड्वर्णं चतुष्पत्राम्बुजे ततः ॥

केसरोद्यच्चतुर्वर्णं द्वादशार्णमनोर्लिखेत् ।
त्रीणि त्रीणि च वर्णानि प्रतिपत्रं ततो बहिः ॥

ओं नमो भगवते वासुदेवाय ॥ इति द्वादशाक्षरी ॥

पद्मे दिक्पत्रकेराजद्दशार्णमनुकेसरे ।

दिक्पत्रं दशपत्रम् ।

विंशद्वर्णमनोर्वर्णान् प्रतिपत्रं द्विशो लिखेत् ॥

बहिष्षोडशपत्रेषु स्वरोद्यत्केसरेष्वथ ।
आगावाद्यस्य सूक्तस्याप्यर्धमर्धमृचां क्रमात् ॥

बहिस्संवेष्ट्य काद्यैश्च ततो भूबिम्बमालिखेत् ।
वराहबीजं तद्दिक्षु भूबीजं कोणगं लिखेत् ॥

हकारषष्ठस्वरबिन्दुभिः वाराहं बीजम् । ग्लौं इति भूबीजम् ॥

गोपालयन्त्रमेतद्धि विधिना स्थापितं गृहे ।
तत्र गावः पयस्विन्यः सवृषाश्च निरामयाः ॥

पीनोघ्न्यो बहुरूपाश्च सुशीलाश्च भवन्ति हि ।
धनधान्यधरारत्नशालिनी तस्य मन्दिरे ॥

लक्ष्मीरतिस्थिरा भूत्वा वसेदाभूतसंप्लवम् ॥

इति पूर्वलिखितविंशत्यर्णयन्त्रानुसारादस्यार्थः स्पष्टः ॥

अथ गोसमृद्धिकरयन्त्रप्रसङ्गात् आगावसूक्तस्यापि यन्त्रं गोसमृद्धिप्रदमत्र लिख्यते —

मध्ये तारं ससाध्यं वसुदळविवरे गव्यसूक्तस्य चर्चा-
मेकामेकां क्रमेण प्रविलिखतु बहिर्वेष्टितं मातृकार्णैः ।
आगावस्सूक्तयन्त्रं कुगृहगतमिदं स्थापितं मन्दिरादौ
दद्याद्गोगृष्टिकातर्णकवृषमहिषैः संकुलामाशु लक्ष्मीम् ॥

अयं स्पष्टार्थः । अथ गोपालकमन्त्रप्रसङ्गात् गोपालकसन्ध्यावन्दनप्रकारो लिख्यते —

प्रथमं वैदिकसन्ध्यावन्दनं कृत्वा, दक्षिणहस्ततलेन जलमादाय वामकरतले हृदयमन्त्रेण तत्सलिलं निधाय तदंगुष्ठविवरनिर्गतजलबिन्दुभिः दक्षिणकरेण नेत्रमन्त्रेण शिरसि संप्रोक्ष्य, अवशिष्टमस्त्रमन्त्रेण दक्षिणकरेणादायाधोनिक्षिप्य, पुनरप्येवं चतुश्चतुःकृत्वोभ्यस्य दक्षिणकरेण हृदयमन्त्रेण जलमादाय वामनासापुटेनाघ्रायान्तर्गतदोषं प्रक्षाल्य, दक्षिणेन निस्सार्य विसृज्याञ्जलिना जलमादाय आदित्यमण्डलगताय मारगायत्र्या त्रिरर्घ्यं निवेद्य, तदङ्गादीन्न्यसेत् ॥

रासक्रीडारतं कृष्णं गोपीमण्डलमध्यगम् ।
गायन्तं मधुरं वेणुं ध्यात्वा तु रविमण्डले ॥

तदभिमुखोत्क्षिप्तभुजः तद्गायत्रीं यथाशक्ति जपित्वा, पुनः स्वमन्त्रस्याङ्गन्यासादीन् कृत्वा प्रागुक्तवत् पीठतर्पणपूर्वकं तर्पणं कुर्यात् ॥
एवं गोपालकसन्ध्यावन्दनविधिः ॥

गोपीजनाय विद्महे गोपीवल्लभाय धीमहि । तन्नः कृष्णः प्रचोदयात् ॥

इति गोपालगायत्री । अस्याः मूलमन्त्रवत् ऋष्यादि । अथवा मार-

गायत्री । कामदेवाय हृत् । विद्महे शिरः । पुष्पबाणाय शिखा । धीमहि कवचम् । तन्नोनङ्गः नेत्रम् । प्रचोदयादस्त्रम् ॥ नारद गायत्री कृष्णा ऋष्याद्याः । शिरो ललाटनेत्रद्वयदोःपत्सन्ध्यग्रेषु वर्णशो न्यसेत् । अङ्गमन्त्र एव गायत्रीमन्त्रः ॥

इति प्रपञ्चसारसारसंग्रहे गीर्वाणेन्द्रविरचिते

सप्तदशः पटलः ॥

इति पूर्वभागस्समाप्तः ॥

